# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES,

Nos. 494, 506, 508, 517, 526 and 538.

5/-1-4.

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAŚRAMÍ.

VOL. II.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1885.

# निरुक्तम् ।

## ( निघण्टुः )

अत्रिगोत्रश्रीदेवराजयज्वकृत 'निर्वचन' नामटीकासहितम् ।

श्रीलश्री

वङ्गदेशीयासियातिक्समाजाभ्यर्थनया व्ययेन च

काश्यधीतवेदादि-वङ्गसामगेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

सम्पादितम् ।

द्वितीयो भागः ।

कलिकाताराजधान्याम्

वाप्तिष्टमिशन्यन्त्रे मुद्रितम् ।

शकाब्दाः १८०७ ॥

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

~~OLD~~ SERIES, No. 494.



सभाष्यवृत्ति-निरुक्तम्।

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAS'RAMÍ.

VOL. II.

FASCICULUS I.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1883.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.

57 AND 59, LUDGATE HILL, LONDON, E. C.

---

## BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Átharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /10/ each.. .. | 3 | 2 |
| Áśvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each .. | 2 | 8 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /10/ each .. .. | 8 | 12 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each .. | 3 | 2 |
| Aphorisms of Śáṇḍilya, (English) Fasc. I .. .. .. | 0 | 10 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each .. | 6 | 14 |
| Brahma Sútras, (English) Fasc. I .. .. .. .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. .. | 5 | 0 |
| Bṛihat Áraṇyaka Upanishad, (Sans.) Fasc. II—IV, VI—IX @ /10/ each | 4 | 6 |
| Ditto (English) Fasc. II—III @ /10/ each .. | 1 | 4 |
| Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each .. | 3 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each .. | 1 | 4 |
| Chaturvarga Chintámaṇi, (Sans.) Fasc. I—XLI @ /10/ each .. | 25 | 10 |
| Chhándogya Upanishad, (English) Fasc. II .. .. .. | 0 | 10 |

*(Continued on third page of cover.)*

# ॥ निरुक्तम् ( निघण्टुभाष्यम् ) ॥

तस्य

## वृत्ति-भूमिका।

आदितः पाणिनीयस्तु शिक्षा ज्योतिषतश्छन्दः।
पश्चाध्यायी-निघण्टोश्च निरुक्त मुपरि स्थितम्॥
प्रणम्य तत् प्रवक्ष्यामि रुद्रायामिततेजसे।
स मे दिशतु सुप्रीतो वागधियोः शिष्टसम्मतिम्॥

अथ किमर्थं वेदो वेदाङ्गानि च प्रवृत्तानि ? सर्व्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वक्तव्य इति वेदः प्रवृत्तः। तत्परिज्ञानाय वेदाङ्गानि प्रवृत्तानि। तानि पुनरमूनि* प्रतिनियतार्थविषयवृत्त्यावेद मास्कन्दन्ति। तद्यथा—

शिक्षा तावत् "आत्मा बुद्ध्या समेत्यार्थान्"—इत्येवमादिना† क्रमेण स्वरव्यञ्जनाभिव्यक्तिलक्षणम्, पूर्व्वाह्णमध्यन्दिनापराह्णेषु यथाध्येयम्, अधीतस्य च स्वरसौष्ठवयुक्तस्य यज्ञकर्म्मणि प्रयोगः;—इत्येवमादि अर्थजातं निरुवाच। तथा ह्यधीतः प्रयुज्यमानश्चापूर्व्वाङ्गभावाय नान्य-

---

* शिक्षादीनि षडेव। "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति" मु० उ० १, ५।

† आत्मा बुद्ध्येत्ययं श्लोको न ग्रन्थारम्भकः, 'अथ शिक्षां प्रवक्ष्यामी'त्यस्यैवाद्यत्वात्, अतोऽत्र आदिशब्दो न प्रभृत्यर्थोऽपि तु प्रकारार्थ एव।

थेत्येव मर्थवत्ता शिक्षायाः*। एवं ह्याह—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः† स्वरतोऽपराधात्" (शि० ५०)—इति। वेदाध्ययनानुपकृतयेतिहासपुराणशास्त्राणां लौकिकानां ग्रन्थविस्तररचनानाम्। अतएवाध्ययनपरिज्ञानं शिक्षाऽधिगताध्ययनविधेः॥

वेदस्याक्षरकोशपादव्यवस्थालक्षणपरिज्ञाने छन्दोविचितिराद्रियते। इयताक्षरकोशेनेयद्भिः पादैर्गायत्री, इयद्भिस्त्रिष्टुप्, इति। न हि अविज्ञातच्छन्दसा प्रयुज्यमानो मन्त्रः कर्मण्यार्द्धकः स्यात्। एवं ह्याह—

---

* तथाच तैत्तिरीया आमनन्ति—"शीक्षां व्याख्यास्यामः। वर्णः, स्वरः, मात्रा, बलम्, साम-सन्तानः। इत्युक्तः शीक्षाध्यायः।" इति तै० उ० १व० २अ० १ख०। वर्णः अकारादिः। 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः (३)'—इत्याद्युक्तः। स्वरः उदात्तादिः। 'उदात्तश्चानुदात्तश्च (११)'—इत्येवमादिना कथितः। मात्रा ह्रस्वादिः। 'ह्रस्वो दीर्घः प्लुत इति (११)'—इत्येवमादिना भाषिता। बलं स्थानप्रयत्नौ। तत्र 'अष्टौ स्थानानि वर्णानाम् (१३)'—इत्यादिना स्थानमुक्तम्, 'अचोऽस्पृष्टा (१८)'—इत्यादिना प्रयत्नश्चोक्तः। साम-सन्तानः। अतिद्रुतादिदोषशून्यत्वेन माधुर्यादिगुणयुक्तत्वेन चोच्चारणं साम्यम्, तस्य सन्तानो विस्तारः। तत्र 'गीती शीघ्री (३२)'—इत्येवमादिना दोषविस्तारः, 'माधुर्यमक्षरव्यक्तिः (३३)'—इत्येवमादिना गुणविस्तारश्चोपदिष्टः। यद्वाचार्यपादैः संहितेति पदं पृथक्कृत्य व्याख्यातं, यच्च तदनुसारतएव भगवत्सायणेन ऋग्भाष्यभूमिकायां 'सन्तानः संहिता'—इत्याद्युक्तः; तदस्माकन्न मनोरमम्। 'एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायामुपेक्षितम्'—इति तदुत्तरग्रन्थेनैव बाधात्। मूले तु अतोऽवधृतमेव 'शीक्षां पञ्च (तै० उ० १व० २अ० ११ख०)'—इति, पञ्चानामेव शिक्षाविषयत्वेन परिगणितत्वात् सन्तानस्य पार्थक्यमूलकं षष्ठत्वं स्वतएव व्याहतम्।

† "इन्द्रशत्रुर्वर्द्धस्व"—इत्यस्मिन् मन्त्रे इन्द्रस्य शत्रुर्घातक इत्यर्थे विवक्षिते तत्पुरुषसमासादन्तोदात्तएवेन्द्रशत्रुरुच्चारितव्यः, प्रयुक्तस्त्वाद्युदात्तः; तथाच इन्द्रो घातको यस्येति बहुव्रीह्यर्थः सम्पन्नः इति भावः। प्रदर्शितञ्चैतत् पातञ्जले महाभाष्ये पस्पशाह्निके शब्दानुशासनस्य भूयः प्रयोजनकथनावसरे 'दुष्टःशब्दः'—इत्युपक्रमेण।

"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति"*—इति। अतो-ऽनुषङ्गतो वक्त्रादिलक्षणपरिज्ञानं लोकेऽत्र लौकिक मिति स्याद ॥

सम्यगधीतस्य परिज्ञातच्छन्दसो अमुष्मिन् कर्मणि विनियोग इति कल्प आद्रियते। तद्यथा। इषेत्वेतिच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीति†। न हि कल्पानभिज्ञः प्रयोगान् विजानीयादिति ॥

श्रुतिचोदितकर्माङ्गभूतकालपरिज्ञानाय ज्योतिषम्। अनुषङ्गत-स्ततो प्राणिनां शुभाशुभकर्मफलविपाककालपरिज्ञानम्‡ ॥

व्याकरणाद्विभक्त्यादिपरिज्ञानम्। एवं ह्याह—"प्रयाजाः सविभ-क्तिकाः कर्त्तव्याः"§। तथाचेदं दर्शयति—"सङ्ख्यादयो न विवर्द्धन्ते"—

---

* सा० वे० ब्रा० आ० १प्र० १खण्डे। एतस्योपरिष्टाच्चात्तमयेत्यादिकमपि द्रष्टव्यम्।

† एतच्च फलसम्बन्धकथनम्। तथा हि। "पर्णशाखाञ्छिनत्ति शामिलीं वेषेत्वेत्यू-र्जेत्वेति वा छिनद्मि इति वोभयोः साकाङ्क्षत्वात् सन्नयामीति वोत्तरः"—इति कात्यायनसूत्रम् ४, २, १, २। 'इषेत्वा (य० वा० सं० १, १, १)'– इति छेद-नार्थो मन्त्रः। ऊर्जे त्वा (य० वा० सं० १, १, २)'—इति सन्नमनार्थः। सन्नमन-मृजूकरणं शाखालग्नधूल्याद्यपनयनम्'—इति महीधरव्याख्यांशः।

‡ उक्तञ्च तत्रैव। "वेदा हि यज्ञार्थ मभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः। तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञम्"—इति ज्यो० १, २। 'ज्योतिःशास्त्रज्ञः कालस्वरूपज्ञतया यथोक्तयज्ञफलभाग् भवतीत्यर्थः'—इति तद्भाष्यांशः।

§ "विभक्तिं कुर्वन्ति। याज्ञिकाः पठन्ति। 'प्रयाजाः सविभक्तिकाः कर्त्तव्याः'—इति। न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम्। तस्माद-ध्येयं व्याकरणम्"—इति पा० म० भा० १अ० १पा० १ आ०।

इति। न च व्याकरणानभिज्ञो विभक्तीर्नामीयादूहितुं वा मन्त्रान्*। अत एव चानुषङ्गतो लोके लौकिकलक्षणपरिज्ञान मेवं छन्दस्येवं भाषाया मिति प्रविभागो नान्तरीयकोऽनन्तरेण व्यवस्थितः॥

अत उक्ताध्ययनविधेरुक्तच्छन्दःप्रविभागस्योक्तविनियोगस्योपलक्षितकर्म्माङ्गभूतकालस्योपदर्शितलक्षणस्यैतैरङ्गैर्वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेद मङ्ग मारभ्यते। प्रधानं चेद मितरेभ्योऽङ्गेभ्यः सर्व्वशास्त्रेभ्यश्चार्थपरिज्ञानाभिनिवेशात्। अर्थो हि प्रधानं। तद्गुणः शब्दः। स चेतरेषु व्याकरणादिषु चिन्त्यते। कल्पे खल्वपि विनियोगश्चिन्त्यते। स च पुनरर्थाभिधानवशेन मन्त्राणाम्। यो य मर्थ मभिधानेन संस्कर्त्तुं समर्थो मन्त्रः, स तत्र विनियुज्यते। तदुक्तं†—"अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् (२,१,१)"—इति‡। न च निरुक्तादृतेऽन्यदङ्ग मन्यदा वाद्यं शास्त्र मस्ति, तात्पर्य्येण यदशेषान् शब्दान् निर्ब्रूयात्। यदपि च क्वचित् कश्चिदन्यशास्त्रे शब्दनिर्व्वचनम्, अतएव तदित्युपलक्ष्यम्। यथा शब्दलक्षणपरिज्ञानं सर्व्वशास्त्रेषु व्याकरणात्, एवं शब्दार्थनिर्व्वचनपरिज्ञानं निरुक्तात्। वस्तुमात्र मेव हि इतरेषु शास्त्रेषु स्वाभिमतबुद्धिविषय मेव किञ्चिच्चिन्त्यते ब्राह्मण मपि च विध्यर्थवादरूप मशेषमन्त्रार्थशेषभूत मेव। मन्त्रब्राह्मणार्थ-

---

* "ऊहः खल्वपि। न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्"—इति पा० म० भा० १अ० १पा० १आ०।

† मीमांसादर्शनकारेण जैमिनिना।

‡ "तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात्"—इति चैतत्सूत्रशेषपदम्। एत-द्धि वर्णयिष्याम उच्यते।

परिज्ञानवद्बह्वाध्यात्माधिदैवाधिभूतपरिज्ञानद्वारेण धर्मार्थकाममो-क्षाख्योऽखिलपुरुषार्थः। न चानिरुक्तो मन्त्रार्थो व्याख्यातव्य इति। तस्मादर्थपरिज्ञानाभिनिवेशादिद मेव प्रधान मित्युपपन्नम्। अथास्यैव मखिलपुरुषार्थोपकारवृत्तिसमर्थस्य सङ्ग्रहः।

तद्यथा ;—नामाख्यातोपसर्गनिपातलक्षणम्(१) ; भावविकार-लक्षणम्(२) ; नामान्याख्यातजानि सर्व्वाणि च यथोपन्यस्य पक्षप्रति-पक्षतो विचार्यावधारणम्(३) ; सर्व्वाण्याख्यातजानि कानिचिदेवानेक-धातुजान्यपीति मन्त्राणा मर्थवत्त्वानर्थवत्त्वे विचार्य शास्त्रारम्भप्रयोजन-द्वारेणार्थवत्त्वावधारणम्(४) ; पदविभागपरिज्ञानप्रतिज्ञानबोधावलम्बि-प्रदर्शनाय आदिमध्यान्तानेकदैवतलिङ्गसङ्कटेषु मन्त्रेषु याज्ञिकपरि-ज्ञानद्वारेण देवतापरिज्ञानप्रतिज्ञा(५) ; अर्थज्ञप्रशंसा(६) ; अनर्थज्ञा-वधारणम्(७) ; वेदवेदाङ्गव्यूहः(८) ; सप्रयोजननिघण्टुसमाम्नायविर-चनम्(९) ; प्रकरणत्रयविभागेन नैघण्टुकप्रधानदेवताभिधानप्रविभाग-लक्षणम्(१०) ; निर्व्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशः(११) ; अर्थ-प्राधान्यात् लोपोपधाविकारवर्णलोपविपर्ययोपदेशेन सामर्थ्योपप्रद-र्शनायादिमध्यान्तलोपोपधाविकारवर्णलोपविपर्ययाद्यन्तवर्णव्यापत्ति-वर्णोपजनोदाहरणचिन्ता(१२) ; अन्तस्थान्तद्धातुनिमित्तेन सम्प्रसार्या-सम्प्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः(१३) ; भाषिकप्रायोवृत्तिभ्यो नैगमशब्दार्थप्रसिद्धिः(१४) ; नैगमप्रायोवृत्तिभ्यो भाषिकशब्दार्थ-प्रसिद्धिः(१५) ; देशव्यवस्थया शब्दरूपव्यपदेशः(१६) ; तद्धितसमास-नामनिर्व्वचनलक्षणम्(१७) ; शिष्यलक्षणम्(१८) ; विशेषेण व्याख्यया तत्त्वपर्यायभेदसङ्ख्यासन्दिग्धोदाहरणान्निर्व्वचनव्यवस्थया नामाख्याતो-

पसर्गनिपातानां विभागेन नैघण्टुकप्रकरणानुक्रमणम्[१९]; अनेकार्थानवगतसंस्कारानुक्रमणम्[२०]; परोक्षकृतप्रत्यक्षकृताध्यात्मिकमन्त्रलक्षणम्[२१]; स्तुत्याशीःशपथाभिशापाभिख्यापरिदेवनानिन्दाप्रशंसादिभिर्मन्त्राभिव्यक्तिहेतूपदेशः[२२]; निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम्[२३]; इतरेतरजन्मत्वम्[२४]; स्थानत्रयभेदशः तिसृणा मेकैकस्या माहाभाग्यकृतोऽनेकनामधेयप्रतिलम्भः[२५]; पृथगभिधानन्तूत्पत्तिसम्बन्धाद्वा[२६]; देवताना माकारचिन्तनम्[२७]; भक्तिसाहचर्यसंस्तवकर्म्मसूक्तभाक्हविर्भाक्तव्यञ्जनभाक्तानि[२८]–[१२]; पृथिव्यन्तरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यश्रुत्युदाहरणम्[२४]; तन्निर्व्वचनविचारोपपत्त्यवधारणानुक्रमेण व्याख्याय दैवतप्रकरणनिर्णयः[२५]; विद्यापारप्राप्त्युपायोपदेशः[२६]; मन्त्रार्थनिर्व्वचनद्वारेण देवताभिधाननिर्व्वचनफलं देवताताम्नाय्यम्[२७]।—इत्येष समासतो निरुक्तशास्त्रचिन्ताविषयः॥

तत्रैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसंग्रहः। सा च पुनरियं साक्षात्कृतधर्म्मभ्यो महर्षिभ्य उपदेशेन मन्त्रार्थ मुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्य मवेक्ष्य तदनुजिघृक्षया वाच्यार्थसामर्थ्यादभिधेयानुन्नीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता। सैषा छन्दोवयवभूता छन्दोधर्म्मिण्येव यथायथापन्नस्तागौर्गोधर्म्मा* इति॥

---

* त्रिषु पुस्तकेष्वेवमेव पाठः परमत्रापि नूनं लेखकप्रमादः।

# ( पूर्वषट्कः )

## ॥ अथ प्रथमाध्यायः ॥

तत्र,

### ॥ प्रथमपादः ॥

॥ ॐ* ॥ समाम्नायः समाम्नातः स व्याख्यातव्यस्त मिमं समाम्नायं निघण्टव इत्याचक्षते निघण्टवः कस्मान्निगमा इमे भवन्ति छन्दोभ्यः समाहृत्य समाहृत्य† समाम्नातास्ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवोऽपि वा हननादेव स्युः समाहता भवन्ति यद्वा समाहृता भवन्ति तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति तत्रैतन्नामाख्यातयो र्लक्षणं प्रदिशन्ति भावप्रधान माख्यातं सत्वप्रधानानि

---

* ङ-पुस्तके "ओरम्"—इति पाठः। ग-च-पुस्तकयोर्नास्त्येव।

† "समाहत्य"—इति ख-पाठो मुद्राकरप्रमादः।

नामानि तद्यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भाव माख्यातेनाचष्टे व्रजति-पचतीत्युपक्रमप्रभृत्यपवर्ग-पर्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्ति*रित्यद इति सत्त्वाना मुपदेशः† ॥ १ ॥

अयञ्च तस्या द्वादशाध्यायी भाष्यविस्तरः‡ । तस्य इद मादि-वाक्यम्—"समाम्नायः समाम्नातः"—इति । गवादिर्देवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते । समाङ्पूर्व्वस्य म्नाते रभ्यासार्थस्य कर्म्मणि कारके समाम्नायः । समभ्यस्यते मर्यादयाऽय मिति समाम्नायः । स च ऋषिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः पञ्चाध्यायी शास्त्रसंग्रहभावेन एकस्मिन्नाम्नाये ग्रन्थीकृत इत्यर्थः ॥

तस्य किमिति? "स व्याख्यातव्यः" । स च यो समाम्नातः छन्दस्येवावस्थितोगवादिभिरन्यैर्वा निरुक्तैर्यः समाम्नातः । अयं च एतस्मिन्निरुक्ते स एव उभयलक्षणोऽपि व्याख्यातव्यः ॥ आह; कथमेतद्गम्यते चसमाम्नातव्याख्यान मप्यत्राभिप्रेत मिति ? समाम्नानार्हाणां वा किमर्थं मसमाम्नान मिति? उच्यते— निर्व्वचनलक्षणोपदेशात् । निर्व्वचनप्रकरणाच्च मृग-कर्ण-दक्षिणा-लक्ष्मी-निघण्टु-भद्राधः-शब्द-प्रभृतीना मेव मायानां निर्वचनोपदेशात् ज्ञायतेऽसमानव्याख्यान-

---

* "पङ्क्ति"—इति क-पाठः । ख-ग-पुस्तकयोस्तु पाठान्तरतयोल्लिखितः ।

† क-ख-ग-पुस्तकेभ्योऽन्यत्र नात्र खण्डसमाप्तिः । तथा च तेषु "मुपदेशो गौरश्वः" —इत्येव पाठः ।

‡ अयञ्च ग्रन्थः, तस्याः पञ्चाध्याय्याः निघण्टुनामप्रसिद्धायाः, भाष्यविस्तरः, द्वादशाध्यायी । परिशिष्टाध्यायद्वयस्याप्येवाप्रसिद्धत्वात् नोक्तः ।

मप्यत्राभिमत मिति । यत्पुनरेतदुक्तं समाम्नानार्हाणां वा किमर्थ मसमाम्नान मिति । अत्र ब्रूमः;—न हि समाम्नानार्हाणा मन्तोऽस्ति, तेषां सर्वेषां समाम्नाने शास्त्रान्त एव न स्यात्, अतश्चाध्ययनश्रवण-ज्ञानशक्तिहानदोषः प्रसज्येत । अकथम तावल्लक्षणोद्देशोदाहरणभूतनि-घण्टुशब्दसमवायेनाधीतवेदेन मेधाविना तपस्विना लक्षणविनियोगा-र्थच्छन्दोदैवतनिदानविदाभियुक्तेनागमवता मन्त्रार्थोऽभ्यूहितु मित्ये-तावानेव निघण्टुषु शब्दसमुदायः समाम्नातः । तस्मादुपपन्न मसमा-म्नातव्याख्यान मप्यत्राभिमत मिति । असमाम्नानं च सर्वेषां शास्त्रा-तिगौरवभयादिति । "व्याख्यातव्यः" विभज्य इमान्यत्र नामानि, इमान्याख्यातानि, उपसर्गा इमे, निपाता इमे, इदं सामान्यलक्षणम्, इदं विशेषलक्षणम्, इमान्येकार्थानि, इमान्यनेकार्थानि, इमान्यवगत-संस्काराणि, इदमभिधानम्, इदमभिधेयम्, इदमभिधानस्य निर्व-चन मित्येवंविधया मर्यादया परिपाट्या यथासमाम्नात माख्यातव्यो निर्वक्तव्य इत्यर्थः ॥

"त मिमं समाम्नायं निघण्टव इत्याचक्षते" । तं च योऽसमा-म्नातश्छन्दस्येवावस्थितोऽगवादिरन्यैर्वा निरुक्तैः समाम्नातः, त मिमं च निघण्टव इत्याचक्षते । अन्येऽप्याचार्या इति वाक्यशेषः । निरू-ढाहीय मेतस्मिञ्छन्दःसमुदाये सञ्ज्ञेत्यभिप्रायः ॥

"निघण्टवः कस्मात्"—इति । निघण्टुशब्दव्युत्पिपादयिषया प्रश्नः॥

निर्विवक्षयेद माह—"निगमा इमे भवन्ति" । येष्वभिधाननि-र्वचनप्रारम्भकेष्वाचार्यः अयं यास्को निरुक्तकारः कस्माच्छब्द मुत्तरत्र न कुर्यात्, तेष्वपि व्याख्याकाले कस्मादिति शब्दः समुत्पाद्यः ।

तथाहि व्याख्यासाफल्यं भवति । निगमा इमे भवन्ति । निश्चये-नाधिकं वा निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान् गमयन्ति ततो निगमसञ्ज्ञा निघण्टव एव इमे भवन्ति ॥

आह;—कः पुन रेतेषु विशेषो येनैत एव ज्ञापयन्तीति। उच्यते;—यस्मादेते गवादयः "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः"। छन्दांसि मन्त्राः तेभ्य उपलक्षितसामर्थ्याः समाहृत्य ग्रन्थीकृता इत्यर्थः। आह;—कस्मात् पुनरेतावन्त एव ग्रन्थीकृता इति। उच्यते;—इतो यस्मादेतैरेव छन्दस्यवस्थितै रभिनिविष्टधियामपि मेधाविनां तपस्विनां लक्षणविनियोगार्षच्छन्दोदैवतनिदानविदामपि सता मन्त्रार्थपरिज्ञानायोद्यमभङ्गः क्रियते, दुःपरिज्ञानत्वात् तेषाम्, एतेषु परिज्ञातेषु अप्रतिबन्धेन शक्यते मन्त्रार्थः परिज्ञातुमिति अत उच्यते त एव ज्ञापका भवन्तीति। अतश्चैत एवोन्नीतसामर्थ्याः समाहृत्य समाम्नाता इति ॥

समाम्नानमात्र मेव दर्शयति। प्रकरणगताश्च नित्या एवैत इति गम्यते। "ते निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्त इत्यौपमन्यवः"। उदाहृताः समाम्नाताः निर्वचनप्रसङ्गतो निरुच्यन्ते। य एते समाम्नाता गवादयः त एते मन्त्रार्थनिगमयितृत्वा दुभयेऽपि निगन्तवः सन्तो निगमनाद्धेतो र्निघण्टव उच्यन्त इत्यौपमन्यवः। इत्येव मर्थनिगमयितृत्वान्निगन्तव एते सम्पन्नाः सन्तोऽतिपरोक्षवृत्तिना शब्देन गकारस्थाने घकारं कृत्वा तकारस्थाने च टकारं कृत्वा वर्णव्यापत्यादिलक्षणम्। अथाप्यादिविपर्यय इत्येव मादि तदेतत्परोक्षातिपरोक्षवृत्तिषु यथासम्भवं द्रष्टव्यम्। त्रिविधा हि शब्द-

व्यवस्था;—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च। तत्रोक्त-क्रियाः प्रत्यक्षवृत्तयः, अन्तर्लीनक्रियाः परोक्षवृत्तयः, अतिपरोक्ष-वृत्तिषु शब्देषु निर्वचनाभ्युपायः। तस्मात्परोक्षवृत्तिता मापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः। तद्यथा;—निघण्टव इत्यतिपरोक्ष-वृत्तिः, निगन्तव इति परोक्षवृत्तिः, निगमयितार इति प्रत्यक्षवृत्तिः। यस्मान्निगमयितार एते निगन्तव इति निघण्टव इत्युच्यन्ते। उक्तञ्च;—"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तद-र्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्"। वक्ष्यति चायमपि;—वर्णविपर्ययवर्णव्यापत्तिलक्षणम्। त एते निगन्तवः सन्तो निघण्टव उच्यन्ते। इत्येव मतिपरोक्षवृत्तयो निर्वक्तव्याः। प्रायेण चोणादिषु परोक्षवृत्तयः शब्दाश्चिन्त्यन्ते। तत्र तेषां लक्षण मुपेक्षितव्यम्। येषा मपि लक्षणं नास्ति, तेषा मपि तत्र कल्प्यम्। अपरिसमाप्ता ह्युणादय इति लक्षणविदः प्रतिजानते, सर्वथापि लक्षणासम्भवे पृषो-दरादिपाठसिद्धिरेव द्रष्टव्या। तत्र हि यथाध्ययन मेव शब्दाः साधीयांसो भवन्त्यभिव्याहारानभिघातायेति हि लक्षणविदो मन्यन्ते। इत्यौपमन्यवः आचार्यो मन्यत इति वाक्यशेषः। उपरतम न्युरुपमन्युस्तस्यापत्य मौपमन्यवः। कीर्त्तिप्रथनार्थं मौपमन्यवग्रहणम्॥

"अपि वाऽऽहननादेव स्युः समाहता भवन्ति"। अपि चैवं यथोक्तम्। अपि चैव मन्यथा निघण्टवः स्युः। कथ मिति? आहन नादेव। न निगमनादित्यभिप्रायः। विद्यमान मपि निगमन मविवक्षित मेतस्मिन् पक्षे। अनेकक्रियायोगेऽपि हि सति काञ्चिदेव क्रिया मङ्गीकृत्य नामधेयप्रतिलम्भो भवति। तदुत्तरत्र वक्ष्यामः।

आह; किमेतेभ्याहृत मिति? उच्यते;—समाहृता भवन्ति। सम: स्थाने नौत्येष नियुक्तः। दर्शयिष्यति चाय मुपसर्गव्यत्ययं निरित्येष समित्येतस्य स्थाने इति। आङ् विद्यमान एवाध्याहृतो मर्यादार्थ-प्रकाशनाय हन्तेः पाठार्थे वर्त्तमानस्यानेकार्थत्वाद्धातूनां वर्णव्यापत्त्या आघ-शब्दवत् हकारस्थाने घकारः। अथ कोऽर्थः एतस्मिन् पञ्चाध्यायीसंघट्टे मर्यादया पठिता ह्येते भवन्ति? तस्मात्समाहृताः समाहन्तव एते सन्त उपसर्गव्यत्ययोपसर्गाध्याहारवर्णव्यापत्तिभिर्निघण्टव इत्युच्यन्ते। प्रसिद्धश्च पाठार्थे हन्तेः प्रयोगः; एवं हि वक्तारो भवन्ति—'ब्राह्मणे इद माहतम्', 'सूक्ते इद माहतम्'—इति। अर्थप्राधान्यादर्थनिर्वचनवशेन शब्दविपरिणामोऽयं प्रदर्शितः॥

"यद्वा, समाहृता भवन्ति"। पूर्ववदेवोपसर्गव्यत्यय उपसर्गाध्याहारोऽत्रापि। धातुस्तु हरतिरत्र। यत् यस्मादित्यर्थः। यस्माद्वा एते समाहृता भवन्ति छन्दोभ्यः, तस्मात् समाहरणक्रियायोगात् समाहर्त्तवः एते समाहृताः सन्तः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेण निघण्टव इत्युच्यन्ते। एतस्मिन्नपि निगमन-समाहनन-क्रिये निघण्टुषु विद्यमाने अर्थविवक्षिते कृत्वा समाहरणक्रियायोगहेतुको नामधेयप्रतिलम्भ उक्तः। एव मेष निघण्टुशब्दो गमेर्वैकोपसर्गात् हन्तिहरतिभ्यां वा न्युपसर्गाभ्यां निरुक्तः॥

आह;—किमयं पुनरतिमहान् यत्न एकस्मिन्नभिधाने अनेकधात्वर्थनिर्वचनकृतइति? उच्यते;—इह तावत् सर्वाण्याख्यातजानि नामानीति सिद्धान्तः; सत्याख्यातजत्वे ऽभिधेयस्य या क्रिया लक्ष्यते, तदभिधानसमर्थे परोक्षवृत्तौ वा तदभिधायि-निरूढ़ि-शब्दे धातु

रुपहतः, स च पुनः स्ववर्णक्रियासामान्येन; तच्चैवं सति रूढ़िशब्दे यावन्तो धातवः स्वलिङ्गं रूढ़िगतं वर्षयन्ति, तावन्तः सङ्गृह्य स रूढिशब्दो निर्वाच्यः। किं कारणं? विशेषलक्षणव्यवस्थाभावात्। न हि तत्र विशेषलक्षणव्यवस्था का चिदस्ति योऽय मेकोऽवतिष्ठेत, अन्ये व्यावर्त्तेरन्। अपि चोक्तं वार्त्तिककारेण। "यावता मेव धातूनां लिङ्गं रूढ़िगतं भवेत्। अर्थश्चाप्यभिधेयस्सावद्भिर्गुणविग्रहः"—इति। रूढ़िशब्दगतानां च धातूनां रूढ़िशब्दवाच्येऽर्थे क्रियायोगे सति एतदभावे तु क्रियाया रूढ़िशब्दे वर्त्तमान मपि धातुलिङ्ग मकिञ्चित्करम्। स एव क्रियाभावः तदाश्रयनिर्वचनव्यावर्त्तको भवति। ता एताः तिस्रः क्रिया निगमन-समाहनन-समाहरणाख्याः निघण्टुषु विद्यन्ते, तदभिधायिन्यपि च रूढ़िशब्द निरुच्यमाने गमिर्हन्तिर्हरतिश्चाहम्पूर्विकया* सन्निपत्य वदन्ति;—'ममानुरूपं मयैतं निर्ब्रूहि', 'मयैतं निर्ब्रूहीति। गमिस्तत्र गकार मात्मीयं व्यापन्नं मन्यते घकारं तथा हन्ति-हरती हकारं व्यापन्नं घकारं मन्येते। तस्मादय मनेकैर्धातुभिर्निघण्टुशब्दो निरुक्त एवञ्जातीयाभिधाननिर्व्वचनप्रदर्शनाय॥

"तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति"। इहैतावदेवोक्तं समाम्नायो निघण्टव इति, समाम्नायशब्दपर्यायप्रसक्तस्य च निघण्टुशब्दस्य व्युत्पत्तिरुक्ता, न तु निघण्टुशब्दस्यार्थतत्त्व मवधारितं, तदवधार्यत इति पर्य्युपयुक्त-

* 'अहंपूर्वं गमिष्यामि', 'अहम्पूर्वं गमिष्यामि'—इत्येवं मिथो विवदन्त इति।

समाम्नायः। किं पुनस्तदिति? यान्येतानि चत्वारि पदजातानि, या एतास्तत्तः पदजातयः। क्व? लोके वेदे च। कतमानि तानि? नामाख्याते चोपसर्गनिपाताश्च। किन्तेषा मिति? इमानि चत्वार्यपि पदजातानि सन्त्येतस्मिन् शास्त्रे। किमिति निघण्टुशब्दानि भवन्ति? नित्य मेवानुविधीयमानानि भवन्तीत्याह। न कदाचिदपि न भवन्ति, नित्यं भवन्त्येवेत्यभिप्रायः॥ चत्वारीति चतुर्ग्रहण मवधारणार्थम्; नैकं पदजातं, यथार्थः पद मैन्द्राणा मिति; नापि द्वे, यथा सुबन्तं तिङन्तं च; नापि त्रीणि, निपातोपसर्गावेकतः कृत्वा; नापि पञ्च, षड्वा, यथा गति-कर्म-प्रवचनीय-भेदेनेति॥ पदजातानीति पदगणा इत्यर्थः। जात शब्दो हि गणे प्रसिद्धः। तद्यथा। गोजात मश्वजात मिति। तद्वदिहापि। तत्र; नामपदगणः, स्त्रीपुन्नपुंसकलिङ्गप्रविभागेन; तथाऽऽख्यातपदगणः, कर्तृवचन-भाववचन-कर्मवचन-प्रविभागेन; तथोपसर्गगणः, आङादिः; तथा निपातगणः, इवादिः। एव मभिप्रेत्योक्तं चत्वारि पदजातानीति। अत्र नामाख्यातयोः पूर्वं मभिधानं प्राधान्यात्, अप्राधान्यादुपसर्गनिपातानां पश्चात्। उभे अपि नामाख्याते निपातोपसर्गनिरपेक्षे अपि सती स्व मर्थं ब्रूतः; न तूपसर्गनिपातानां नामाख्यातनिरपेक्षाणा मर्थोऽस्ति। वक्ष्यति हि;—“न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः”-इति। वाच्ये, न चैते अर्थेनार्थवती। द्योत्ये, नोपसर्गनिपाता इति वाऽप्राधान्यम्। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीति। तस्मादुपपन्नं भवति प्राधान्यान्नामाख्यातयोः पूर्वं मभिधानम्, अप्राधान्याच्च पश्चा दुपसर्गनिपातानां मिति। नामाख्याते

इतीतरेतराकाङ्क्षित्व मुभयोर्नामाख्यातयोः समासेनाभिधानम्। कथ मितरेतराकाङ्क्षित्व मिति ? यज्ञदत्त इति हि नामशब्दः तावदेव साकाङ्क्षो भवति, यावत् पचति पठति इत्याद्याख्यातशब्दैर्न निराकाङ्क्षीक्रियत इति; तथा पचतीत्याख्यातशब्दस्तावदेव साकाङ्क्षो भवति, यावन्न यज्ञदत्तशब्दः। पचति यज्ञदत्त ओदन मिति, इतरेतराकाङ्क्षित्व मुभयोर्नामाख्यातयोः, समानकार्यत्वं चैतयोर्लक्ष्यते। वाच्येनार्थेनार्थवत्त्व मित्यतः समस्येते नामाख्याते इति। नाम्नः पूर्वनिपातोऽल्पाच्तरत्वात्* । नामपदवाच्यर्थाश्रयक्रियोपलक्ष्यत्वादाख्यातस्य पश्चान्निपातः उपसर्गनिपाता इति। उभयेषा मुपसर्गनिपातानां नामाख्यातयोरर्थविशेषद्योतकत्वात् समानकार्यत्व मित्यतः समस्यन्ते। आख्यातसद्योगित्वा दुपसर्गाणा माख्यातानन्तरं पाठः, परिशेषाणां निपातानां पश्चाद् अपरिमिताश्च निपाता इति॥

"तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति"। तत्र तस्मिन्, लोकवेदप्रसिद्धे पदचतुष्टये निघण्टुशब्दसमानसञ्ज्ञोपलक्षिते, ये तावन्नामाख्याते तयोस्तावदेतल्लक्षणं प्रदिशन्ति। कतमद्? यदेतद्वक्ष्यमाणमित्यभिप्रायः। प्रदिशन्ति प्र विभज्येदं नाम्नां लक्षण मिद माख्यातस्येत्येवं दिशन्ति उपदिशन्त्याचार्या इति वाक्यशेषः। आह, लक्षणोपदेशः कस्मात्? अनुक्रमणेनैव सिद्धत्वात्। अनुक्रमणेनैव हि वक्ष्यति "इमानि पृथिवीनामधेयान्येकविंशतिः (१,१,१०)", "हिरण्यनामान्युत्तराणि पञ्चदश (१,२,१)", कान्तिकर्माण उत्तरे धातवोऽष्टादश (२,२,१०)", गतिकर्म्माण उत्तरे धातवो द्वाविंशं शतम् (२,२,१०)"—इति। तत

* "अल्पाच्तरं" पूर्वं प्रयोज्यम्। सि० कौ० इ० स०।

एव विज्ञास्याम इमानि नामानीमान्याख्यातानीति। तस्मादय मनर्थको लक्षणोपदेशः? नानर्थकः। कस्मात्? अथापि हि लक्षणं समाम्नाताव्यसमाम्नातानि च व्याप्य वर्त्तते। यत्पुनरेतदुक्त मनुक्रमणादेव विज्ञास्याम इति। अत्र ब्रूमः;–निर्देशोऽसौ न हि लक्षणम्, निर्देशश्च परिच्छिन्नविषयः। स तर्हि किमर्थ इति? शास्त्रे रूपस्वभावोपप्रदर्शनार्थः। तस्मादसमाम्नातार्थोऽय मादितो लक्षणोपदेशो युक्त इत्युपपन्नम्॥

आह;—तात्पर्येणैवेद मन्तरेण समाम्नातवदसमाम्नातानि कस्मान्नोपदिश्यन्ते, अपि च तथा स्वपदिष्टानि भवन्तीति? उच्यते;—तथाह्युपदेशगौरवं भवति, ग्रहणशक्तिहानं च। अपिचोक्तम्। "ऋषयो ह्युपदेशस्य नान्तं यान्ति पृथक्शः। लक्षणेन तु सिद्धाना मन्तं यान्ति विपश्चितः"—इति। तस्मादुपदेशगौरवभयाद् ग्रहणशक्तिहानदोषाच्च समासलक्षणोपदेशः क्रियते इति।

आह;–किं पुनस्तल्लक्षणमिति? उच्यते;—"भावप्रधान माख्यातं, सत्त्वप्रधानानि नामानि"। नामपदवाच्यार्थाश्रयक्रियाव्यक्तो भावः। पाक-राग-त्यागाख्यः। स यत्र प्रधानं, गुणभूता क्रिया, तदिदं भावप्रधानम्। किं पुनस्तदिति। आख्यातम्। आख्यायतेऽनेन गुणभावेन वर्त्तमाना अनेककारक-प्रविभक्ता स्फुरमाणेव प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रिया। तस्मात् प्राधान्येन प्रवर्त्तमानो भावः स्वात्मलाभप्रधान इत्याख्यातः।

आह;–कथं पुनर्गुणभूताक्रियेति? उच्यते;—तदर्थत्वात्। तदर्था हि सा। भावार्था भावसिद्ध्यर्थ मात्मलाभ मनुभूय कारकेषु तण्डुलादौ पाकाख्यं भाव मभिनिर्वर्त्यावसितप्रयोजनैकदेश एव तिरोभवति।

यस्य च यदर्थ आत्मलाभ स्तत्तद्गुणभूतं भवति। भावसिद्ध्यर्थश्च क्रियाया आत्मलाभ स्तस्माद् गुणभूतेति गम्यते। भावसिद्ध्यैव चानुमीयते क्रिया परोक्षापि सती॥

आह;—कथं पुनः परोक्षा क्रियेति? उच्यते;—न हि चेन्द्रियाणा मन्यतमेन स्वरूपस्था सती कदाचिदपि सन्निकृष्यते। किं तर्हि? तदवसाने योऽभिनिष्पद्यते भावः, तेन लिङ्ग्यते। नून मभिनिर्वृत्ता क्रिया यया भावोऽय मभिनिष्पादित इति नाभिनिर्वृत्ता चेदभविष्यद्! यथैव सा क्रियानिर्वृत्तेर्नाभव दयं भावः, एवं साम्प्रत मपि नाभविष्यत्; अस्ति चायम्। तस्मादभिनिर्वृत्ता क्रियेत्येव मनुमीयते। तदेत दाख्यातं क्रियावाचक मपि सद्भावार्थत्वात् क्रियाया भावं प्रधान मुच्यत इति एव मेके मन्यन्ते। एके पुनर्भावप्रधान माख्यात मिति प्रकृत्यर्थप्रधान मिति मन्यन्ते। प्रकृत्यर्थविशेषणं हि प्रत्ययार्थादय इति। भावः, कर्म, क्रिया, धात्वर्थः, इत्यनर्थान्तरम्। स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम्। किं पुनस्तत्? आख्यातम्। आख्यायन्ते स्त्रीपुन्नपुंसकानि क्रियागुणभावेन वर्त्तमानान्यनेन क्रिया च तेषा मुपरि प्राधान्येन वर्त्तमानेत्याख्यातम्॥

आह;—कथं पुनरत्र क्रियायाः प्राधान्य मिति? उच्यते;—सा ह्यत्र शब्दवाच्या। अर्थगृहीतानि तत्साधनानीति। अतः प्राधान्य मत्र क्रियायाः। इतस्य प्राधान्यम्। कुतः? विशेषप्रत्ययाधानात्। पचतीति प्रथमपुरुषैकवचनान्ते आख्यातशब्दो वर्त्तमानकालकर्तृविषयो यत्किञ्चिदविवक्षितविशेष मेव पक्त्रादिसाधन मात्मन आश्रय-

भावेनोपलक्षयन्ननेकक्रिया श्रक्तिमत्यपि पक्त्रादौ साधने पचिक्रियाया मेव विशेषप्रत्यय मादधाति; नान्यासु क्रियासु; नापि विशिष्टे पक्त्रादौ साधने। यस्य यस्मिन्नर्थे विशेषेण वर्त्तते शब्दः, स एव तस्य प्रधानम्। विशेषेण च क्रियाया माख्यातशब्दो वर्त्तते, गुणभावेन कारके। तस्माद्विशेषप्रत्ययाधानाद्भावप्रधान माख्यात मित्युपपन्नम्। अपि च क्रियाव्यापारविज्ञानपरतया पृष्टः— 'किं करोति देवदत्तः?' क्रियाख्यानपरतयैव प्रत्याचष्टे— 'पचतीति'। न त्वोदन मिति पूर्व मुक्त्वा ततः पचतीति ब्रवीति॥

अथ कथ मुच्यते भावप्रधान माख्यात मिति? शृणु;— अमूर्त्ता हि क्रिया निरुपाख्या, सा हि कारकै रभिव्यज्यमाना कारकशरीरे च सन्ती शक्यते निर्द्देष्टुम्। इतरथा हि अशरीरा सती सा न गृह्येत, अग्रहणे च सति कथ मिव निर्द्दिश्येत। तच्चैवं सति कारकसमूहेनाभिव्यज्यमाना क्रिया यस्मिन् साधने विशिष्ट मात्मीयं कार्य मारभते पाकाख्यं तदभिधानशब्दोपपदैव साक्षाद् ग्रहणासम्भवान्निर्दिश्यते। न ह्यनाश्रिता कदाचिदपि गृहीतपूर्वाकृतिरिति साक्षाद् ग्रहणासम्भवः। तस्मादोदनकर्म्मकार्या देवदत्तकर्तृकौदनशब्दोपपदैव निर्द्दिश्यते,—ओदनं पचति देवदत्त इति। तत्राविवक्षितस्वार्थ ओदन शब्दः। अपि च क्रियाव्यापारपिपृच्छिषयैव पृष्टः— किं करोतीति, क्रियाव्यापारमात्र मेव प्रत्याचष्टे— पचतीति। ततः किमिति पर्य्यनुयुक्ते शब्दान्तरेणापाकरोति देवदत्त ओदन मिति। तस्माच्छब्दान्तरवाच्यत्वात् साधनस्य पचतीत्यत्र क्रियैव प्रधान मित्युपपन्नम्। यत्पुनरेतदुक्त मोदन मिति पूर्व मुक्त्वेति, तत्र ब्रूमः;— स हि पर्य-

नुयुयुक्षां साधनगतां भाविनी माशङ्कमानः पर्यनुयोग मात्मनो बुद्ध्यवस्थं कृत्वा तदपाकरणार्थं मोदन मिति पूर्वं ब्रवीत्येवं तत्रापि द्रव्यविशेषपरिज्ञानार्थो द्वितीयः पर्यनुयोगोऽनुक्तो द्रष्टव्यः । तस्मात् पचतीति शब्दवाच्यत्वादत्र क्रियायाः शब्दान्तरवाच्यत्वात् द्रव्यस्य क्रियैव प्रधान मिति । इतश्च न द्रव्यप्रधान माख्यातम् । एकस्मिन् वाक्ये द्वयो राख्यातयो रसमवायात् । पचति-पठतीत्युभयोः प्राधान्या दितरेतरेण समवायो नास्ति । न हीतरः शब्द इतरत्र गुणी भवति । द्रव्यशब्दे च समवायात्, समवैति द्रव्यशब्देनाख्यातशब्दः । पचति देवदत्त इत्युक्ते पचिक्रिया-गुणभूतो लक्ष्यते देवदत्तः । तस्मादुप-पन्नं भावप्रधान माख्यात मिति । अपिचोक्तम् । "क्रियावाचक माख्यातं लिङ्गतो न विशिष्यते । त्रीनत्र पुरुषान् विद्यात् कालतस्तु विशिष्यते"—इति । तत्पुनरेतच्चतुःप्रभेद माख्यातं भवति । कर्त्तरि, भावे, कर्म्मणि, कर्म्मकर्त्तरि चेति । पचतीति कर्त्तरि । भूयते, पच्यते इति भावकर्मणोः । पच्यते स्वयमेवेति कर्मकर्त्तरि । चतु-र्ष्वप्यवयवार्थानि द्रव्याण्यप्रधानानीति क्रिया एव प्रधानम् । ता मभि दधत् तयैव लक्ष्यमाण आख्यातसञ्ज्ञो भवतीत्युक्तम् । आख्यातजन्मा-न्नाम्नां प्रतिज्ञाक्रमं भित्त्वा पूर्वं माख्यातलक्षण मुक्तम्, पश्चान्नामलक्षण मुच्यते । किं पुनस्तत्? सत्वप्रधानानि नामानि । लिङ्गसङ्ख्ययो रत्र सद्भाव इति सत्वम् । तथा लक्षणोपपत्तेः । तद्येषु प्रधानं गुणभूता क्रिया नामान्येव तानि । नमन्त्याख्यातशब्दे गुणभावेन, नमन्ति वा स्व मर्थ माख्यातशब्दवाच्ये गुणभावेनेति नामानि । यथैव ह्याख्याते विद्यमान मपि द्रव्य मविवक्षित मेव मिहापि विद्यमानापि क्रियां

अविवक्षिता। द्रव्यपरत्वात्सत्त्वशब्दस्य तद्दिक्रियाजनित मुत्तरकालं क्रियाशेषभूत मभिधाय धात्वर्थोऽसौ व्यावर्त्तते॥

आह;— कथं पुनर्नाम्नि क्रिया विद्यत इति, विद्यमानापि वा विवक्षितेति? उच्यते। प्रकृतिः, प्रत्ययो, विभक्तिरिति त्रेधा विभज्यमान मेतावदेवैतन्नाम। तत्र प्रकृतिर्धातुरित्येकोऽर्थः। धातुश्च पुनः क्रियावचनः स च नाम्नि विद्यत इति तदभिधेयभूतया क्रियया भवितव्यम्। यथावश्यं यत्रार्थस्तत्र तदभिधायकः शब्दः, यत्र शब्दस्तत्र तद्वाच्योऽर्थ इति। सम्बद्धौ हि शब्दार्थौ वाच्यवाचकत्वेन नित्य मिति। एवं तावत्क्रिया विद्यते यत्पुनरेतदुक्तं— विद्यमानापि क्रिया कथ मविवक्षितेति? अत्र ब्रूमः;— नाम्नि यो धातुः प्रकृत्प्रयोजयतिमेन प्रातिपदिकेनाभिभूतक्रियाभिधानशक्तिः प्रातिपदिकान्तर्लीनत्वान्निद्रेव स्व मर्थ मुद्भावयितु मशक्नुवन् प्रातिपदिकार्थ मेवानुवर्त्तमानो द्रव्यप्रधान एव भवतीत्येवं न विवक्षिता क्रिया। सा तु विद्यमानापि क्रियमाणे नाम्नि प्रातिपदिकनिबन्धनादुच्यमाना द्रव्यगत मर्थं प्रकाशयति; न प्राधान्यादिति द्रव्यपरता सत्त्वशब्दस्य गम्यते। तथाचोक्तम्। "शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते। तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः"— इति। पुनश्चोक्तम्। "अष्टौ? यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः। तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः॥ निर्देशः कर्म करणं प्रदान मपकर्षणम्। स्वाम्यर्थोऽप्यधिकरणं विभक्त्यर्थाः प्रकीर्त्तिताः"—इति। स्त्रीपुन्नपुंसकभेदं निपातोपसर्गाणा मपि वा कश्चिन्नामत्व मपेक्ष्य बहुवचनेनोक्तं नामानीति। अपरे पुनर्भावकालकारकसङ्ख्याश्चत्वार एतेऽर्था आख्यातस्य। तेषां

भावप्रधानता भवति। अतो भावप्रधान माख्यात मित्युक्तम्। नाम्नोऽपि सत्ता द्रव्यं सङ्ख्या लिङ्ग मित्येतेऽर्थाः। तेषां द्रव्यं प्रधान मित्यतः सत्त्वप्रधानानि नामानीत्युक्तम्॥

एव मेके मन्यन्ते;—"तद्यत्रोभे भावप्रधाने भवतः"। एवं तावद-नयोर्नामाख्यातयोः परस्पराविनाभूतयोः स्वपदार्थापेक्षा वेकस्य भाव-प्राधान्य मेकस्य सत्त्वप्राधान्यम्। अथ पुनर्यत्रैते उभे भवतः। क्व च पुन रेते उभे भवतः? वाक्ये। तत्र कस्य प्रधान मर्थः, कस्य गुणभूत इति? शृणु;—भावप्रधाने भवतः, तस्य चिकीर्षितत्वात्। वाक्ये ह्याख्यातं प्रधानं, तदर्थत्वात् गुणभूतं नाम। तदर्थस्य भावनिष्पत्त्या वङ्गभूतत्वात्। एवं तावदाख्यातं वाक्ये प्रधानम्॥

अथ पुनः कथ मभिनिर्वर्त्त्यमानो भाव आख्यातेनोच्यते? किं वा तदाख्यात मिति? यतो लोकप्रसिद्ध्यैवोदाहरति। तत् प्रसिद्धत्वाच्छब्दार्थसम्बन्धस्य। "पूर्वापरीभूतं भाव माख्यातेनाचष्टे व्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्"। अपूर्व मनपरं सन्त मेकत्वात् पूर्वापरीभूतं पूर्वापर मिव पौर्वापर्येणावस्थित मेक मनेकासु क्रियासु आश्रित मुपानदधिनहनपूर्व्वोत्तरपदविहरणपथिभोजनशयनासनोद-कपानाद्यास्वाश्रितं तदभिनिर्वृत्तिवशेनाभिनिर्वर्त्तमानं कस्मै चित् पृच्छते किं करोति? अन्य आचष्टे व्रजतीति। अविभक्तकर्तृकं द्वितीय मिति उदाहरणद्वयं भावद्वयोपप्रदर्शनार्थम्। उपक्रमप्रभृतीति। उपक्रम आरम्भस्तस्मादारभ्यापवर्गपर्यन्तं यावदन्त्या क्रियेत्यर्थः॥

आह;—अन्त्यासन्निधौ भावनिर्वृत्तिदर्शनादन्त्ययैव निर्वर्त्यत इति? शृणु;—पूर्व्वासा मभावे अन्त्यैव न स्यात्, पूर्व्वापेक्षं हि तस्या अन्त्यत्वम्।

अपि च। प्राप्तिफलो हि व्रजति र्न चैकया क्रिययाऽभिमतदेशा-न्तरे प्राप्तिरस्ति। तस्मादुपक्रमाद्याभिः क्रियाभि रीषदभिनिष्पाद्य-मानो भावोऽन्त्याया मभि सन्तिष्ठते। ततः सन्निकर्षे गृह्यते न त्वसावन्त्ययैव निर्वृत्त इत्यन्ते गृहीतः। अपि च, प्रसिद्ध मेतदुप-क्रमादारभ्य यच्च व्रजितं, यच्च व्रज्यते, व्रजिष्यमाणं, तत्सर्व्वं मेकीकृत्य वक्तारो भवन्ति व्रजति देवदत्त इति। न प्रसिद्धिरुपरोद्धुं न्याय्या। यथावस्थितानां हि शब्दाना मन्वाख्यानमात्र मेव शास्त्रेण क्रियते; नोत्पाद्यन्ते शब्दाः, नाप्यर्थेषु विधीयन्ते। तस्मात् प्रसिद्धशास्त्रसमयो-ऽपि लौकिकप्रसिद्धैव पूर्व्वापरीभूतं भाव माख्यातेनाचष्टे, व्रजति-पचतीत्युपक्रमप्रभृत्यपवर्गपर्य्यन्तम्। तस्मादुपपन्न मनेकक्रियाभिर्निर्वर्त्त्य-मानो भाव आख्यातेनोच्यन्त इति। आह च। "क्रियासु बह्वीष्वभि संश्रितो यः पूर्व्वापरीभूत इवैक एव। क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन त मर्थ माहुः"—इति॥

"मूर्त्तं सत्त्वभूतं सत्त्वनामभिः"। कदाचित्तु तमेव भावं तथै-वोपक्रमप्रभृत्यभिनिर्वर्त्तमान मपवर्गपर्य्यन्तं मूर्त्तं सत्त्वभूतं सत्त्वरूपिणं लिङ्गसङ्ख्यायुक्तैः सत्त्वनामभि राचष्टे॥

कथम्? "व्रज्या पक्तिरिति"। तत्रोक्तो विशेषः। कृदभिहितो भावो द्रव्यवद्भवति सोऽयं प्रयुक्तस्य लक्षणस्य प्रयोग मपेक्ष्य क्वचिदपवादः। आह च। "क्रियाभिनिर्वृत्तिवशोपजातः कृदन्त-शब्दाभिहितो यदा स्यात्। सङ्ख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्य मिवोपलक्ष्यो"—इति॥

आह;—कस्मात्पुनरेकएव भावस्तिङन्तेन कृदन्तेन चान्यथोच्यत

इति? उच्यते;—शब्दस्वाभाव्यादृते नान्यदत्र प्रयोजक मस्ति। अपिचोक्त मस्माभि रवस्थितानां मेव शब्दाना मभिधानाभिधेय-सम्बन्धेनाभिसम्बन्धाना मेव नित्य मन्वाख्यानमात्र मेव क्रियते। नोत्पाद्यन्तेऽर्थेषु वा विधीयन्ते शब्दा इति। शब्द्यापक्तिरित्युदाहरणद्वय मुक्तप्रयोजनम्॥

"अदइति सत्त्वाना मुपदेश" इति*। भावोऽधिकृतः। स च पुनः सत्त्वभूतो नेतरः, यतस्तत्सम्बन्धेनैव नाम्नो यदवशिष्यते तदुच्यते। किं पुनस्तत् सामान्यविशेषवाचित्वम्? तत्रादइति सत्त्वाना मुपदेशः। सामान्यत इति वाक्यशेषः। सर्व्वेषा मपि सत्त्वाना मध्ययने प्राप्ते लिङ्गाविशिष्टत्वा दिद मेवैक मुदाहृत मुपप्रदर्शनार्थम्॥१॥

आह;—विशेषोपदेशः कथ मिति? उच्यते खण्डसूत्रम्;†—

गौरश्वः पुरुषो हस्तीति भवतीति भावस्यास्ते शेते व्रजति तिष्ठतीतीन्द्रियनित्यं वचन मौदुम्बरायण‡ स्तत्र चतुष्ट्वं नोपपद्यते युगपदुत्पन्नानां वा शब्दाना मितरेतरोपदेशः शास्त्रकृतो योगश्च§ व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके

---

* अनेनेतिशब्देन प्रथमं खण्डं समाप्त मिति सूचितम्। परं ग-ङ-च-पुस्तकेषु नात्र खण्डसमाप्तिर्दृश्यते।

† द्वितीयं खण्डं, "गौरश्वः"—इत्यादिक मिति यावत्।

‡ ग-ङ-च-पुस्तकेष्वत्रैव प्रथमखण्डसमाप्तिः। तथा च तेषु "मौदुम्बरायणः॥१॥ तत्र"—इति पाठः।

§ "शास्त्रकृतोपयोगश्च"—इति ग-ङ-पुस्तकयोः पाठः, परं टीकाकारासम्मतः।

**तेषां मनुष्यवद्देवताभिधानं पुरुषविद्यानित्यत्वात् कर्म-सम्पत्तिर्मन्त्रो वेदे* ॥ २ ॥**

"गौरश्वपुरुषो हस्तीति"। सत्त्वानां विशेषोपदेश इति वाक्यशेषः ॥ सोपाधिकनिरुपाधिकोपप्रदर्शनार्थ मनेकोदाहरणम्। सामान्यवृत्त्या विशेषवृत्त्या चोभयथा शब्दः प्रवर्त्तत इत्युभय मुपदर्शितम् ॥

"भवतीति भावस्य"। सामान्येनोपदेशः। अत्र हि सर्वेषां सत्तावाचिना मध्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः। विद्यमानत्व मेवानुभवन्तः सर्वे भवतिशब्दवाच्या अन्याभिर्विशेषक्रियाभिरभिसम्बध्यन्ते। तस्माद्भवतीति सर्वक्रियाप्रसववीजभूत मस्तित्व मात्र मेव निरुपपदेन भवतिशब्देनोच्यत इत्युपपन्नं भवति। सामान्यवाचित्वं विशेषनिर्देशः ॥

कथ मिति? उच्यते;—"आस्ते शेते व्रजति तिष्ठतीति"। सकर्मकाकर्मकोपदर्शनार्थ मुभयेषा मुदाहरणम् ॥

"इन्द्रियनित्यं वचन मौदुम्बरायण स्तत्र चतुष्ट्वं नोपपद्यते"। आह;—इह तावदुक्तं पदचतुष्टयम्। भाववचनता, द्रव्यवचनता; गुणभावः, प्रधानभावः, पूर्वापरीभावः; सामान्यवाचित्वं, विशेषवाचित्व मिति। नोपपद्यते। कस्मात्? वचनानित्यत्वात्। कः पुनरेव माहाऽनित्यं वचन मिति? उच्यते;—इन्द्रियनित्यं वचन मिति। इन्द्र आत्मा, स येन ईयते लिङ्ग्यते अनुमीयते चाल्यमा वात्मा

---

* क-ख-ग-पुस्तकेष्वेतोऽस्याध नाथ स्वण्डसमाप्तिः।

कर्त्ता, यस्येदं करणम्, नाकर्तृकं करण मस्तीति, तदिन्द्रियम्। तस्मिन्नित्य मिन्द्रियनित्यम्। किं पुनस्तत्? वचनम्। उच्यते अनेनेति वचनं वाक्य मित्यर्थः। कतमत्? यदेतन्नामाख्यातोपसर्ग-निपातात्मकम्। औदुम्बरायणः आचार्य्यो मन्यत इति वाक्यशेषः। उदुम्बरस्यापत्य मौदुम्बरिः; तस्यापत्य मौदुम्बरायणः॥

आह;—ततः किमिति? उच्यते;— तत्र तस्मिन्वाक्ये एव मिन्द्रियनित्ये सति यदेतत्पदचतुष्टय मुक्त मेतन्नोपपद्यते. कस्मात्? शृणु;—यावदेव वक्तुर्वागिन्द्रिये वचनम्, तावदेव तदस्तीति शक्यते वक्तुं; प्रच्युतं च नास्ति। अपि च। वाक्य मपि वाक्यं समस्त मुच्चरितं तदिन्द्रियेणावतिष्ठते। यदवयवभूतानि पदान्यवस्थितानि परिसङ्ख्या-तुम्। न च विनष्टाविनष्टयोः पदयोः सह परिसंख्यान मस्ति। तस्माद्वचनानित्यत्वात् पदचतुष्टयानुपपत्तिरित्युपपन्नम्॥

किं चान्यत्;—"अयुगपदुत्पन्नानां वा शब्दाना मितरेतरोप-देशः"। वा शब्दः समुच्चयार्थो "वा विकल्पोपमानद्वन्द्वसमुच्चया-र्थेष्विति" हि निपातविदः पठन्ति। वक्ष्यति चाय मपि*। "वेति विचारणार्थे"—इत्युपक्रम्य "अथापि समुच्चयार्थे भवति"—इति (१,२,३)। एवं चैतेषा मयुगपदुत्पन्नानां शब्दानां वाक्यावयव-भूतानां योऽय मितरेतरोपदेशः। इतरेतरगुणप्रधानभावो नाम्न आख्यातं प्रति गुणभावेनोपदेशः। आख्यातस्य च नाम प्रति प्रधानभावेनोपदेशः। अयं च नोपपद्यते इत्यनुवर्त्तते। किं कारणं? न हि विनष्टं नाम गुणभाव मियादाख्याते; नापि नष्ट माख्यातं

* निरुक्तकार-यास्कोऽपीत्यर्थः।

प्रधानभाव मिथाम्नाचि। न हि विनष्टाविनष्टयोरितरेतरगुणप्रधान-भावोऽस्ति किं वान्यतः ॥

"शास्त्रकृतोयोगश्च"। यस्यायं शास्त्रकृतो योगः शास्त्रदृष्टः शब्दस्य शब्दान्तरेण योगः। तद्यथा। उपसर्गस्य धातुना, धातोः प्रत्ययेन, प्रत्ययस्य लोपागमवर्णविकारैः। अयं वचनानित्यत्वान्नोपपद्यते। किं कारणं? अयुगपदुत्पत्तौ हि सत्यां धातुरुच्चारितो विनष्टः स वाय मुपसर्गेण योक्ष्यते, प्रत्ययेन वा। न हि विनष्टाविनष्टयोर्योगोऽस्ति। तस्माच्च एष नामाख्यातयो रितरेतरगुणप्रधानभाव उपसर्गनिपाता-नां नामाख्याताभ्यां योगे, यच्च पदचतुष्टय मुक्तं, सर्व मेतदसम्यगिति। युगपदुत्पन्नाना मयुगपदुत्पन्नाना मित्येव मारभ्यमाणयोर्वाक्ययोरन्यो व्याख्यामार्गो भवति। नोपपद्यते। युगपदुत्पन्नाना मयुगपदुत्पन्ना-ना मित्युभावपि व्याहारौ प्राप्नुतः। समानसंहितत्वात्। इन्द्रियनि-त्यत्वात्पदचतुष्ट्वानुपपत्तिरित्युच्चार्यमता शङ्काद्वारेणैतदवतार्यते;—युगपदुत्पन्नाना मिति। अथ मतम्,—"अविचालिन एवैते कूटस्था अविनाशिनः शब्दास्ते तु कल्पान्ते"। तस्माच्छास्त्रिकृगादिशीर्षेष्वभिधे-येष्वभिधानेषु कारणभाव मापद्यमानेष्वाश्रयाभावादेवावस्थातु मशक्नु-वतो अभिधेयाभिधानसहिता एव कारणात्मभाव मधिक मनुभूया-भिसंस्तवकाले कल्पादावन्यकल्पविशिष्टकर्मनिर्जितकार्यकारणसर्वभूत-साधारणात्मभूते हिरण्यगर्भे विवर्त्तमाने तद्बुद्धि माश्रयं प्राप्यते; नैवं सह युगपदेवाभिव्यज्यन्ते विशेषात्मलाभाय शब्दा इति। अत्र ब्रूमः;—एव मप्येतेषां युगपदुत्पन्नानां युगपदुत्पत्तावपि सत्यां यद्यपि पदचतुष्टयं प्राप्नोत्येव सहावस्थितानां, तथापीतरेतरोपदेश

इतरेतरगुणप्रधानभावश्च न प्राप्नोति। न हि युगपदुत्पन्नयोर्गो-विषाणयोरितरेतरगुणप्रधानभावोऽस्ति। किं चान्यत्;—कूटस्थेषु चाविचालिषु नित्येषु शब्देषु यएष शास्त्रकृतो योगः, स एष नोपपद्यते। किं कारणम्? अयुक्तो हि युज्यते, नित्यं युक्ता हि धातव उपसर्गैः प्रत्ययैश्च; प्रत्ययाश्च लोपागमवर्णविकारैरिति। तस्मान्नित्यपक्षेऽपि वचनस्य तदेतदुपवर्णितम्। गुणप्रधानभावादि-पदचतुष्टय मधिकृत्य सर्वं मेतदसम्यगिति॥

"व्याप्तिमत्त्वात्तु शब्दस्य"। उच्यते;—सर्वं मेतदुपपद्यते, कस्मात्? व्याप्तिमत्त्वाच्छब्दस्य। व्यापनं व्याप्तिः, सा यस्मिन्नस्ति, सोऽयं व्याप्ति-मान् शब्दः, तद्भावो व्याप्तिमत्त्वम्। तस्माद् व्याप्तिमत्त्वाच्छब्दस्य सर्वं मेतदुपपद्यत इति वाक्यशेषः। आह;—कथं पुनर्व्याप्तिमान् शब्द इति? शृणु;—शरीरे ह्यभिधानाभिधेयरूपा बुद्धिर्हृदयान्तर्गताका-शप्रतिष्ठितयोरभिधानरूपाभिधेयरूपयोर्बुद्ध्योर्मध्येऽभिधानरूपया शा-स्त्राभिमतप्रयोजनविजिज्ञापयिषया बुद्ध्या पुरुषेण तदभिव्यक्तिसम-र्थेन स्वगुणभूतेन प्रयत्नेनोदीर्यमाणः शब्दः उरः-कण्ठादिवर्णस्थानेषु निष्पद्यमानस्तया पुरुषार्थाभिधानसमर्थवर्णादिभाव मापद्यमानः पुरुष-प्रयत्नेन बहिर्विनिक्षिप्तोऽविनाशिनि व्यक्तिभाव मापन्नः श्रोत्रद्वारेणा-नुप्रविश्य प्रत्याय्यास्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमान् शब्दः। आह;—ततः किं यदि व्याप्तिमाञ्छब्दः? उच्यते;—यदि नित्यो यदा नित्यः पदचतुष्टादि सर्वं मुपपद्यतएव। किं कारणम्? न ह्यसंव्याप्य पुरुषस्य बुद्ध्यवस्थ मर्थप्रत्यय मादधीत, न चानवस्थितो व्याप्नुयात्। ततश्च किम्? स शब्दः स्व मर्थं मभिद-

धत् स्वक्रियाप्रवेशोपजनितेनाभिधानेनाख्यात मित्येव मादिना स्व मात्मान मभिसम्बध्य तिरोभवितु मुपक्रमते, विनाशस्तोपेति। तस्य स्वदेशोपजनितैराख्यातादिभिः स्वप्रदेशविशेषानुस्मृतिपूर्वकं परिसंख्यान मुपपद्यत एव। तस्मात्सम्यगेवोक्तम्। यत्पुनरेतदुक्तं न हि विनष्टाविनष्टयोः परिसङ्ख्यान मस्तीति। अत्र ब्रूमः;—पुरुषप्रयत्नोपजनितादङ्गोद्गातात्परस्यार्थप्रत्यय माधाय शब्दव्यक्तय एव ध्वंसन्ते, न तु शब्दाकृतयः। तास्तु तयाभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान् प्रकाशयन्त्यः स्थिता एव भवन्ति। तासु साक्षात्पदपरिसङ्ख्यानं वर्त्तमान मितरासु विनाशिनीषु व्यक्तिषु लक्षणयोपचर्यते। तस्मात् व्याप्तिमत्त्वाच्छब्दस्य पदचतुष्ट्यादि सर्व मुपपद्यत एव। व्याप्तिमत्त्वादित्यनेनैवेतरेतरोपदेशः प्रत्युक्तः। शास्त्रकृतो योगश्च। नामाख्यातपदरूपबुद्धित्वे सत्त्वक्रियाविषये गुणप्रधानभावेनातिष्ठेत्। तयोर्गुणप्रधानभावे सति तच्छब्दे लक्षणयोपचर्यते। तथा च धातुरूपा बुद्धिस्तदर्थया संयुज्यते। बुद्धिरेव हि धात्वादिरूपेण विपरिणममाना शास्त्रेण संस्क्रियते। तस्यां संस्क्रियमाणायां शब्दे संस्कारोपचारः क्रियते। तदभिधायकत्वाच्छब्दस्य। तत्र यदुक्तं वचनानित्यत्वादितरेतरोपदेशः, शास्त्रकृतश्च योगो नोपपद्यत इत्येतदयुक्त मिति। नित्यत्वपक्षेऽपि युगपदुत्पन्नानां गुणप्रधानभावो गोविषाणवन्नास्तीति यदुक्तम्, अनैकान्तिकोऽसौ दृष्टान्तः। दृष्टो हि युगपदुत्पन्नयोः एककाले राजपुत्रामात्यपुत्रयोर्गुणप्रधानभावः। तत्र यदुक्तं युगपदुत्पन्नाना मितरेतरोपदेशो न प्राप्नोतीत्येतदयुक्तं, व्याप्तिमत्त्वाच्छब्दस्य सर्व मुपपद्यत इति; तदेव सम्यगिति॥

अपरो व्याख्यामार्गः।—इन्द्रियनित्यत्वात्पदचतुष्टानुपपत्तिस्तदाश्रयस्य च सर्वस्येत्येव माचिप्ते परिहारपचेणेद मवतार्यते। युगपदुत्पन्नानां वा शब्दाना मितरेतरोपदेश इति। अत्र समञ्जस एव वाशब्दः। कथम्? अयुगपदुत्पन्नानां वा युगपदुत्पन्नानां वा नित्यानां वा अनित्यानां वेत्यर्थः। इतरेतरोपदेशः। इतरस्येत्याख्यातस्य क्रियावचने शब्देऽभिधानत्वेनोपदेशः, इतरस्य च नामशब्दस्य सत्त्ववचने शब्देऽभिधानत्वेनोपदेशः। शास्त्रकृतो योगश्च। लक्षणशास्त्रेण चैते क्रियासत्त्वे आख्यातनामशब्दाभ्यां युज्येते। तस्मादुपपद्यते पदचतुष्टु मिति॥

आह;—आगमनमात्र मेतत्। हेतुरुच्यतां, कथं विनष्टाविनष्टयोः सह परिसङ्ख्यानम्, अवस्थितयोर्वा गुणप्रधानभाव इति? उच्यते;—व्याप्तिमत्त्वात्तु शब्दस्य। हेत्वर्थः समान एव पूर्वेण॥

आह;—यदि व्याप्तिसत्त्वाच्छब्दस्य व्यवहारार्थं पदचतुष्टु मुपादीयते, एव मपि नोपादेयम्। किं कारणम्? अभिनया अपि व्याप्तिमन्तः, पाणिविहाराचिनिकोचादयः; तैरेव कार्यसिद्धिरस्त्विति। अपि चैवं पदचतुष्टयदोषैर्न सम्भत्स्यामहे, न चाय मतिमहान् वेदसमुद्रः पठितव्यो भविष्यति क्लेशेनेति। उच्यते;—स्यादेतदेवं यद्यय मपरो विशेषहेतुर्न स्यात्। कतमः?

"अणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके"। सत्यम्! अभिनया अपि व्याप्तिमन्तः, न त्वणीयांसः; ते महता यत्नेन व्याप्नुवन्ति; न च निःसन्दिग्धं कुर्वन्ति। तत्प्रतीतशब्दार्थसम्बन्धस्यैव नेतरस्य शब्दस्त्वपरिमित मर्थ मल्पीयसा यत्नेनोच्चारितो व्याप्नोति।

तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव सञ्ज्ञाकरणं व्यवहारार्थं लोके इत्युपपन्नम्। यत्पुनरेतदुक्त मध्ययनदोषैर्न सम्भाव्यामहे, न चाय मतिमहान् वेदसमुद्रोऽध्येतव्यो भविष्यतीति। अत्र ब्रूमः;—अभ्युदयो ह्यत्र वेदानुरूप एव भवति, अभ्युदयार्थं नः शास्त्रारम्भो यत्नः॥

"तेषाम्मनुष्यवद्देवताभिधानम्"। आह;—एवं तावन्मनुष्याणां मनुष्येषु शब्देन चतुर्द्धा भक्तेनावबोधकरणम्। अथ मनुष्याणां वेदेषु हविः-सम्प्रदानाशीः-प्रार्थनादिव्यवहारः केनेति? उच्यते;— तेषा मेव शब्दाना मिय मेव व्यवस्था देवेष्वपि देवानपि प्रति। कतमा? मनुष्यवद्देवताभिधानमिति। मनुष्येन तुल्यं मनुष्यवत्, देवताभिधान मभिहितुरभिधानम्। यथैव हि मनुष्याः प्रयोजनेषु नामाख्यातोपसर्गनिपातैर्यथार्थ मभिदधाति। एव मेव देवा अपि। देवेष्वपि शब्दस्याभिधानेनापि शक्तिरपरिहीनेत्यभिप्रायः। तेऽपि हि मनुष्यवद्देवा शक्त्यादियुक्ताः पौरुषविधिकैरङ्गैः कर्मभिश्च संस्तूयन्त इति हि वक्ष्यति तस्मादुपपद्यते मनुष्यवद्देवताभिधानमिति॥

आह;—यदि नामाख्यातोपसर्गनिपाताना मपरिहीना शक्तिर्देवानप्यभिधातु मथ किमर्थं वेदे मन्त्रः समाम्नातः? इत्युच्यते;—"पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे"। पुरुषेषु मनुष्येषु विद्यायाः विज्ञानस्यानित्यत्वात्पुरुषविद्यानित्यत्वाद्धेतोः कर्मसम्पत्तिः फलेन सम्पादनं अविगुणकर्मसम्पत्तिः, फलसम्पन्न मेव कर्म भविष्यतीत्येव मर्थं वेदे मन्त्रः समाम्नातइति वाक्यशेषः। इतरथा हि पुरुषेषु विज्ञानस्यानित्यत्वाद्यथार्थं नाभिदधते देवान्नामाख्यातोपसर्गनिपातैरभि-

चितत्वान्मन्दशिचितत्वाद्विस्मरणशीलत्वाद्वा देवाना मपराध्ये यथावत् प्रयुञ्जाना: नामाख्यातोपसर्गनिपातान्। ततश्च सर्वार्थप्रत्यक्षदृशो देवा: स्वल्प मप्ययथावदभिधानं न मर्षयन्ति। विगुण मेतदिति विद्या-ऽनित्यत्वात्तदभावेनेयु: कर्मणि। ततश्च देवताहीनं कर्मफलं सम्पद्यते। न च केवलं फलासम्पत्ति:। किं तर्हि? दुरिष्टहेतुको दोषोऽपि स्यात्। तस्मादेत एव नामाख्यातोपसर्गनिपाता: प्रयोगानुपरिपाटीविनियमार्थं मन्त्रत्वेन वेदे समाम्नाता:। न हि नामाख्यातोपसर्गनिपातान् परित्यज्य मन्त्रा: सन्ति। एतदेव चतुर्विधं पदजातं प्रयोगानुपरिपाट्या कया चिदवस्थितं मन्त्रा इत्युच्यन्ते।

आह;-कथ मनित्यत्वं विद्याया: पुरुषेष्विति? उच्यते;— इह तु न वाक्यविरचनानुक्रमेण अर्थवस्त्वनुप्रेक्ष्यते, मनुष्य एव मेव ब्रूयात्— 'त्वं गन्तुं देवतत्त्व मिति'। स तेनैव वाक्यविरचनानुक्रमेण वक्तु मपि सन्त मर्थं न शक्नोति प्रतिपादयितुम्। एव मनित्यत्वं विद्याया: पुरुषेषु। तद्दोषं वा मनुष्यान् प्रति, सर्वेषा मेव मनुष्याणा मनित्यत्वाद्विद्याया:। अय मपि हि येन वाक्यानुक्रमेण वक्ति मनुष्य: कश्चिदर्थं, न तेनैव स्वा शक्नोति वक्तुम्। तच्च यदुक्तं—किमर्थं मन्त्रो वेदे समाम्नात इति। इदं न युक्तम्। पुरुषविद्यानित्यत्वात्कर्मफलसम्पत्त्यर्थं मन्त्रो वेदे समाम्नात इति। न ह्यविचारित मेव विज्ञायन्ते। अत इद माह। पदचतुष्टु माचिप्य पक्षप्रतिपक्षशो विचार्य अवधारितम्। विषयास्त्वाक्षेपप्रसङ्गेनैवास्य परिक्षिप्ता:। देवमनुष्यव्यवहारार्थ मेतदिति। तदेतत्सर्वं मपि चोदकवशेन प्रसक्तानुप्रसक्त मुक्तम्। भावस्तु प्रकृतो यतस्तच्छेष मधुना

वर्णयिष्यामः। स च पुनरुभयात्मा भावः। कार्यात्मा कारणात्मा च। तयोर्यः कार्यात्मा त मधिकृत्योक्तम्,—"क्रियानिर्वर्त्त्योऽर्थः स भावः, क्रियैव वा भावः"—इति। इदानीं कारणात्मा भावो निरूप्यते। कथं क्रियाद्रव्ययोः स्वात्मस्थो विशेषः, कार्यात्मप्रध्वस्तयोः पुरुषोपभोगसन्तानोपरमे कार्यात्मभावातीतः, येनात्मभावेन सदनमात्राभिसम्बन्धिना प्रलयकालेऽवतिष्ठते, सोऽत्यन्ताविनाशधर्ममात्र आत्मा भावइत्युच्यते।

आह;— कथ मय मिह प्रसक्तः? शृणु;—तद्विकारा एव हि द्रव्यगुणकर्मभावेनावस्थिताः सन्तो नामाख्यातोपसर्गनिपातैरभिधीयन्ते। स्थितिकाले असावपि च प्रहीनसर्वविशेषभवनमात्रक्रियाभिसम्बन्धी सन् व्याहृतसर्वोपपदाभ्यां नामाख्यातशब्दाभ्या मुच्यते भवतीति भाव इति च शब्दगतत्वादपोढसर्वविशेषा मप्येतावस्था मेतौ शब्दावास्कन्दतः। अत एतयोरेव साधारणार्थ मय मिह प्रसञ्जितः पदचतुष्टाधिकरणे।

आह;— प्रधान मेतत् स्यात्! किं कारणम्? तद्भावे न ह्येतज्जगदवतिष्ठते प्रलयकाल इत्येके मन्यन्ते। तच्च नैव। किं कारणम्? भावविकारएव हि सोऽयं पदशब्दवाच्यत्वात्प्रधानभाव इति ह्युच्यते। पुरुषस्तर्हि? तच्चाप्यय मेव हेतुः, अनुपक्षीणशक्तित्वात्। एतेनैव ईश्वरपरमाण्वादिभावाः प्रत्युक्ताः। ईश्वरभावः परमाणुभाव इति सोपपदत्वात्। शून्यं तर्हि? तदपि न। यस्माच्छून्यशब्देऽपि भावशब्दासङ्गदर्शनम्, न ह्यसत्यर्थे शब्दः प्रयुज्यते। शब्दो हि शब्दस्यार्थेन सम्बन्धः। किं चित्तद्दृष्टि यच्छून्य मिति। लोके हि प्रसिद्धं गृहं शून्यं, ग्रामः

शून्यः, शून्ये शब्दमहत्त्वे इति। तस्मान्न शून्यशब्देनाभाव एवोच्यते। किं तर्हि? अपेक्षाकृतं शून्यत्व मिति। भावशब्द एवात्रोपपदत्वेन युक्त इति चेत्, न; प्रयोगाप्रसिद्धेः। न हि अभावे भाव इति प्रसिद्धः प्रयोगः। न च प्रयुज्यमानोऽपि भावशब्दो भावशब्द एवोपपदत्वेन प्रधानादिशब्दवत्कञ्चिद्विशेषप्रत्यय मादधाति। तस्मात्सर्वोपपदहीनस्य भवतेरात्मभावेनेदं जगन्नित्यम्, इतरैस्तु भावविकारैः परमाण्वादिभिर्भावविकारात्मभिरनित्यम्। कस्मात्? विकारात्मकत्वादेव। विकारो ह्यनित्यः, त मेवं भवनमात्राभिसम्बन्धेन प्रहीनसर्वभावविकारम्। एतत्सद्भावविदोऽवधृतवेदान्तरहस्यसम्पदः परावरविदो मेधाविन आत्मवेदविदो न हृत्स्नकारितया युक्ताधिकारबन्धना एतत्परिज्ञानादेवोपक्षीणकर्मोपभोगसन्ताना: सन्त आत्मकामाः प्रतिपद्यन्ते। नेतरे प्रधानादिविदः। वेदानुशासनैकदेशानीश्वरपुरुषप्रधानादीननित्यान् भावविकारान् स्व मतिकल्पनाहेतुव्यवहितान् मत्वा स्थिरीकृत्यानेन प्रतिपद्यन्ते भवनमात्राभिसम्बन्धेन तदेतस्मादात्मन उद्विजन्त आत्मप्रकाशकान्तर्याम्यर्थं चित्सन्तान मिव मन्यमानाः। केचिच्च शक्तिहानादसन्साधनादेव। स एष इह वेदाङ्गैर्वेदार्थनिर्वचनाभिनिवेशशब्दानां सामान्यविशेषवत्युपदेशप्रसङ्गे प्रवर्त्तमाने भवतेः हृदन्तीभूतस्य भवनमात्र मेव वक्तुं सामर्थ्यम्, नेतरान् भावविकारान् विद्यमानानपीति। एतेन प्रसङ्गेनात्र संसूचितो वेदरहस्यो ब्राह्मणैः ॥ २ ॥

तत्र विस्तरेणायं विधीयते;—

5

षड् भावविकारा भवन्तीति वार्ष्यायणि र्जायते ऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति जायत-इति पूर्वभावस्यादि माचष्टे नापरभाव माचष्टे न प्रति-षेधत्यस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत इत्य-प्रच्यवमानस्य तत्त्वाद्विकारं वर्द्धतइति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा ऽपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं विनश्यतीत्यपरभावस्यादि माचष्टे न पूर्वभाव माचष्टे न प्रतिषेधति ॥ ३* ॥

"षड् भावविकाराः भवन्तीति"। अपि च लक्षणविदो विस्टहन्ति भावशब्दं भवतेः; स्वपदार्थे भवनं भाव इति। "सन्मात्रं भावलिङ्गं स्यात्"—इति पठन्ति। तस्य विकाराः भावविकाराः, भवन्तीति सामा-न्यादात्मनः प्रस्कन्दा इव सन्तत्त्वेन वैशेषिकेन भावविकारात्मलाभाय भवन्ति। इतिपरः प्रयुज्यमानः शब्दपदार्थकः।

क एवमाह "षड् भावविकाराः"—इति? उच्यते;—"वार्ष्या-यणिः"—इति। तिकादिपाठात् फिञ्†। आचार्य इति वाक्यशेषः॥ निर्द्दिश्यत उपलभ्यानां षडित्यवधारणं सुखार्थम्। अतोऽन्ये भावविकारा एतेषा मेव भावविकारा भवन्तीति॥

आह;—कतमतदिति? उच्यते;—"जायतेऽस्ति विपरिणमते वर्द्धतेऽपचीयते विनश्यतीति"॥

* घ-ङ-च-पुस्तकेष्वत्रैव द्वितीयः खण्डः समाप्तः।
† "तिकादिभ्यः फिञ्" पा॰ ४, १, १५४।

आह;—एतेषां जन्मादीनां भावविकारशब्दानां कः कस्यां विकारावस्थाया मवस्थितं भाव माचष्टे, कं वा विद्यमान मपि नाचष्टे, कं वा न प्रतिषेधतीति? उच्यते;—"जायत इति पूर्वभावस्यादि माचष्टे, नापरभाव माचष्टे, न प्रतिषेधति"। जनिः पूर्वो भावः, तस्य पूर्वभावस्य षण्णां भावविकाराणां यदि वान्यो यः पूर्वो भावविकारः, तस्य जायत इत्यनेन शब्देनादि माचष्टे॥

आह;—कि मादि मेव? नेत्युच्यते। उक्त मुपक्रमप्रभृत्यपवर्गपर्य्यन्त मिति। स एव पूर्वापरीभूतो भावस्तावदेव जायत इत्युच्यते। यावन्निष्ठाशब्दवाच्यः संवृत्तो जात इति। नापरभाव माचष्टे, न प्रतिषेधति। नेति प्रतिषेधे, न परो भावः, अपरभावः॥

आह;—कस्मादपरः? पौर्वापर्यं हि देशकालकृतम् उच्यते;—जनिशब्दवाच्यो भावविकारः पूर्वः, तस्मादपरकालोऽस्तिशब्दवाच्यः। तत्रैवं सति जनिशब्दवाच्ये भावविकारे अस्तेरप्यर्थोऽस्ति विद्यमानता। किं कारणम्? न ह्यविद्यमानो जायते। अपि च कारणात्मनि भावे सर्वे एते भावविकाराः सन्ति। सर्वार्थप्रसवशक्तित्वात्तस्य। यथा पृथिव्यां घटादयो भावविकाराः। ते तु द्वारद्वारिभावेन विशेषात्मलाभं प्राप्नुवन्ति। तद्यथा। जनिद्वारेणास्तिः। अस्तिद्वारेण विपरिणमतिः। किं कारणम्? न ह्यजातोऽस्तीत्युच्यते। नाप्यविद्यमानो विपरिणमत इति। तत्रैवं सति जायत इत्येष शब्दो जन्मैव केवलं ब्रवीत्यविवक्षितेतरभावविशेषम्। किं कारणम्? एकार्थवृत्तित्वाच्छब्दस्य। अस्तिशब्दवाच्यस्य भावविकारस्यासम्पूर्णत्वात्। अनवधृतरूपं हि तस्या मवस्थायां तद्भवत्यनुमानगम्यं किमपि

जायत इति । तस्माज्जायत इत्येष शब्दो जायमानावस्थाया मस्तित्वं विद्यमान मपि नाचष्टे ॥

आह;—यदि नाचष्टेऽर्थादापन्नं भवति प्रतिषेधतीति। उच्यते;—"न प्रतिषेधति"—इति । अस्तित्वस्य न प्रतिषेधं करोतीत्यर्थः । किं कारणम्? उच्यते;—अस्तित्वात्मवानपि ह्यसौ जायेतैतस्मिन् प्रतिषिद्धेऽनात्मक एव स्यात् । क मालम्ब्य जायते ? तस्मान्न प्रतिषेधत्यस्तित्वम् । उपस्थितत्वाच्च । उपस्थित एव च प्रत्यासन्नसत्त्वावधारणकाल इत्यतश्च न प्रतिषेधति ॥

एव मेव प्रपञ्च उत्तरेष्वपि भावविकारेषु । समासतस्तु यच्च यद्वक्तव्यं तच्च तद् ब्रूमः ॥

"अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्" । अस्तीति जातस्य सत्त्वस्यावधारणमात्रं ब्रवीति, न विपरिणाम माचष्टे, अपूर्णत्वात्; न प्रतिषेधत्युपस्थितत्वात् ॥

"विपरिणमतइत्यप्रच्यवमानस्य तत्त्वाद्विकारम्" । विपरिणमत इत्येष शब्दो प्रच्यवमानस्य तत्त्वादप्रभ्रश्यमानस्य तत्त्वात्तद्भावाद्विकारम् । योऽस्य भावोऽस्तित्वं पुरुषत्वं वा, तस्माद्विकारं विक्रियामात्रं ब्रवीति; न वृद्धेरर्थं माचष्टे, न प्रतिषेधति ॥

"वर्द्धत इति स्वाङ्गाभ्युच्चयम्, सांयौगिकानां वार्थानाम्"। वर्द्धत इत्येष शब्दः, स्वेषा मङ्गानां शिरोग्रीवाबाहूदरादीनां, सांयौगिकानां वा हिरण्यधान्यादीनाम्, अभ्युच्चय माह, अभ्युच्चिततां ब्रवीति ॥

आह;—कथं प्रयोगः? उच्यते;—"वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा" । वर्द्धते विजयेनेति सांयौगिकेषु उदाह-

रणम्। वर्द्धते शरीरेणेति स्वाङ्गाभ्युच्चये। अत्र वर्द्धत इति ब्रुवन्नप-
चीयति माचष्टे, न प्रतिषेधति॥

"अपचीयत इत्येतेनैव व्याख्यातः प्रतिलोमम्"। यथैव हि स्वाङ्गैः
सांयौगिकैर्वा द्रव्यैरुपचीयते, तथैवापचीयते। तत्रापि माचष्टे, न
प्रतिषेधति॥

"विनश्यतीत्यपरभावस्यादि माचष्टे, न पूर्वभाव माचष्टे, न प्रति-
षेधति"। विनाशएवापरभावस्तस्यादि माचष्टे। किमादि मेव? न
इत्युच्यते। उपक्रमप्रभृत्यपवर्गपर्यन्त मित्युक्तं, यावद्विनष्ट इति।
स च विनाशं ब्रुवन् अपूर्वभाव माचष्टेऽपचीयतेरर्थं विज्ञात मपि
तस्मिन् विनाशे कथं युगपदपचीयतेरर्थोविनाशेऽस्तीति? उच्यते;—
न ह्यनपचीयमाणो विनश्येत्॥ ३॥

**अतोऽन्ये भावविकारा एतेषा मेव विकारा भव-
न्तीति ह स्माह ते यथावचन मभ्यूहितव्या न निर्बद्धा
उपसर्गा अर्थान्निराहुरिति शाकटायनो नामाख्यात-
योस्तु कर्मोपसंयोगद्योतका भवन्त्युच्चावचाः पदार्था
भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तन्नामा-
ख्यातयोरर्थविकरणम्*॥ ४॥**

आह;—एतेभ्यो भावविकारेभ्यः कि मन्येऽपि व्यतिरिक्ताः सन्ति
भावविकारा न वा? इत्युच्यते;—"अतोऽन्ये भावविकारा एतेषा

* क-ख-ग-घ-ङकेभ्योऽन्यत्र नात्र खण्डसमाप्तिर्दृश्यते।

मेव विकारा भवन्तीति ह स्माह"। अतो भावविकारषट्काद्येऽन्यत्वेन भावविकाराः लक्ष्यन्ते, ते पृथक् पृथगत्यन्तभिन्नाः सन्ति। किन्तर्हि? एतेषा मेव विकारा भवन्ति। तद्यथा— जनि-शब्दवाच्यो भावविकारो ऽनेकप्रभेदभिन्नोऽनेकपर्यायशब्दवचनो निष्पद्यतेऽभिव्यज्यते उत्तिष्ठ-तीत्येव माद्युपेक्षितव्यम्। तथा अस्ति-शब्दवाच्योऽनेकप्रभेदभिन्नो-ऽनेकपर्यायवचनश्च; अस्ति, विद्यते, भवतीत्येव मादि। तथा विप-रिणमति-शब्दवाच्यो विपरिणमते, जीर्यति, भावान्तर मापद्यते इत्येवमादि। तथा वर्द्धति-शब्दवाच्यो वर्द्धते, पुष्यति, उपचीयते, अर्थायत इत्येव मादि। तथा अपक्षीयति-शब्दवाच्यो ध्वस्यति, भ्रश्यतीत्येव मादि। तथा विनश्यति-शब्दवाच्यो विनश्यति, म्रियते, विलीयत इत्येव मादि। "इति ह स्माह"। एव माद्याचार्यौवा-र्ष्यायणिरित्यनुवर्त्तते॥

"ते यथावचन मभ्यूहितव्याः"। त एते जन्यादि-शब्दवाच्याः विकाराः, यथावचनं यो यस्मिन्वचने यथावचन मवस्थिताः सन्तः प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणं प्रति अभ्यूहितव्याः वितर्क्याः प्रयुज्यमाना इति वाक्यशेषः। सर्व एव धातवो भाववचनास्तेषा मिहाध्ययने प्राप्ते शास्त्रातिगौरवभया देतद्वचन मुत्सृष्टम्। इह शास्त्रे व्याख्या-शैलीयं द्रष्टव्या;—उद्देशो निर्देशः प्रतिनिर्देश इति। तत्रोद्देशः, सूत्रस्थानीयः। तद्यथा,—षड्भावविकारा इति। निर्देशो वृत्तिस्थानीयः। तद्यथा,—जायतेऽस्ति विपरिणमत इति। प्रतिनि-र्देशो वार्त्तिकस्थानीयः। तद्यथा,—जायत इति पूर्वभावस्यादि माचष्टे इति। एवं सर्वत्र यथासम्भवं योज्यम्॥

सानुषङ्ग मुक्तं नामाख्यातयो र्लक्षणं, नाम्नस्तु किञ्चिदवशिष्यते, तदवसरप्राप्त मपि सद्धुना नोच्यते; पदचतुष्टुलक्षणप्रतिज्ञाव्याघात-भयात्। उक्त्का पदचतुष्टुलक्षणं चतुर्थेन पादेन तद्वक्ष्यामः* ॥

प्रतिज्ञाप्रसक्त मेवाधुनोपसर्गलक्षण मुच्यते ॥

आह;—वक्ष्यति भवानुपसर्गलक्षण मिद मेव तावदुच्यताम्;—किं मिमे उपसर्गनामाख्यातवत्पदचतुष्टाभ्निःकृष्य बद्धाः सतोऽर्था-नाङ्गः? न इत्युच्यते;—"न निर्बद्धा उपसर्गा अर्थान्निराङ्गरिति शाकटायनः"। नेति प्रतिषेधे। निष्कृष्य नामाख्यातमध्यात् पद-वाक्यरूपेण विरचिताः सन्तः। के पुनस्ते? उपसर्गाः। आख्यात मुपसृष्टार्थविशेष मिमे तस्यैव सृजन्तीत्युपसर्गाः। "अर्थान्निराङ्गरिति शाकटायनः"। निश्चयेन सतोऽर्थानाङ्गः। साक्षान्न तेषा मर्थाभि-धानशक्तिरस्ति, पृथग्विरचितानां मित्यभिप्रायः। यथा वर्णानां पदा-द्यगतानां मर्थाभिधानशक्तिर्नास्ति, एव मेतेषा मपि नामाख्यातवि-योगेऽर्थाभिधानशक्तिर्नास्ति। क एव माह? शाकटायनः। शकट-स्यापत्यं नडादिपाठान् फक्†, शाकटायनः ॥

आह;—कथं तेषा मर्थवत्तेति? उच्यते;—"नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति"। तु-शब्दोऽवधारणार्थः। नामाख्यात-योरेव योऽर्थः कर्म, तत्रैव विशेषं कञ्चिदुपसंयुज्य द्योतयन्ति। स एष नामाख्यातयोरेवार्थविशेष उपसर्गसंयोगे सति व्यज्यते। यथा

---

* अत्रैव; "अथापीदमन्तरेण"—इत्यादिना।

† "नडादिभ्यः फक्" पा० ४, १, ९९।

प्रदीपसंयोगे द्रव्यस्य गुणविशेषोऽभिव्यज्यमानो द्रव्याश्रय एव भवति, न प्रदीपाश्रयः ॥

आह ;— कोऽन्यथा ब्रवीति येनैव मुच्यते 'शाकटायन एव माहेति'? शृणु ;—"उच्चावचाः पदार्था भवन्तीति गार्ग्यः"। उच्चाश्चावचाश्च उच्चावचाः, बहुप्रकारा इत्यर्थः। एषा मुपसर्गपदाना मर्थाः पदार्था भवन्ति वियुक्ताना मपि नामाख्याताभ्या मिति गार्ग्यः। आचार्यो मन्यत इति वाक्यशेषः। एकैकोऽप्येषां प्रादीनां नामाख्यातवियोगेऽपि अनेकार्थ इत्यभिप्रायः। तद्यथा ;—प्रेत्यादिक मौदीर्णो भूशार्थे इत्यभिधाने शक्तिरस्त्येवेत्येव मात्युपलक्षितव्यं लक्षणशास्त्रे। यत्पुनरेतदुक्तं वर्णवदिति, अनभ्युपगमादयुक्तं; न ह्यभ्युपगत मस्माभि रेतदनर्थका वर्णा इति। सामान्या हि वर्णेष्वभिधानशक्ति रस्त्येव। यथा मृदोऽवयवेषु सर्वमृण्मयभाण्डारम्भशक्तिः। सा तु पदत्वेन समुदितानामऽर्थविशेषेऽवतिष्ठते। यथा मृदोऽवयवानां घटे घटारम्भशक्ति रभिव्यज्यते. एवं तत्र यदुक्तं "वर्णवदनर्थका उपसर्गाः, नामाख्यातवियोगात्"-इत्येतदयुक्तम्। अपि च। वर्णैरनर्थकै रारभ्यमाणं पद मप्यनर्थक मेव स्यात्? न ह्यशुक्लै स्तन्तुभि रारभ्यमाणः पटः शुक्लो भवति। ततश्च पदै रनर्थकै रारभ्यमाणं वाक्य मनर्थक मेव स्यात्? वाक्यैश्चानर्थकै रारब्धं शास्त्र मप्यनर्थक मेव स्यात्? ततश्चाभ्युदयनिःश्रेयसार्थो योऽय मभ्युद्य मस्त्यप्रत्ययेन विदुषा मय मनर्थक एव स्यात्? अनिष्टञ्चैतत्। तस्मादर्थवन्तो वर्णा इत्युपपन्नम्। यत्पुनरेतदुक्तं 'प्रदीपवदनर्थका उपसर्गाः'—इति। तत्रोच्यते ;—प्रदीपोऽपि स्वेनार्थेन प्रकाशाख्येनार्थवानेव सत्यपि

स्वार्थतत्त्वे प्रकाश्य मर्थ माधारभूतं प्रत्याययन् स्वं, प्रकाशनशक्ति मभिव्यनक्ति । एव मुपसर्गा अर्थवन्तोऽपि सन्तः स्वार्थाभिधानशक्ति मनेकप्रकारां विद्यमाना मपि स्वार्थाभिधानशक्त्याधारभूते नामाख्याते प्रत्याय्य अभिव्यञ्जयेयुः । तत्र यदुक्तं 'प्रदीपवदनर्थका उपसर्गाः' इति; एतदयुक्तम् । नामाख्यातयोरेवासावर्थ उपसर्गसंयोगे सति उपजायत इति, तत्र ब्रूमः; न हि लोके यो यत्र समर्थो भवति, स तत्रान्य मपेक्षते । नामाख्याते स्वार्थविशेषं प्रत्युपसर्गसंयोग मपेक्षते । तस्मादुपपन्न मुपसर्गस्य क्रियाविशेषोऽर्थः । क्रियासामान्यमात्र माख्यातस्येति ॥

तत्र यदुक्तम् 'अनर्थकाः पृथगवस्थिता उपसर्गाः'-इति, तदयुक्तम् । कुतः? "तद्य एषु पदार्थः प्राहु रिमे तम्" । तदेतदुपपन्नं भवति । य एषूपसर्गेषु स्वोऽनेकप्रकारोऽर्थ इति प्राहु रेव, त मिमे उपसर्गाः पदविशेषाः पृथगपि सन्तः ॥

कः पुनरसाविति? उच्यते;—"नामाख्यातयोरर्थविकरणम्" । अर्थविक्रिया मित्यर्थः । तस्मादर्थवन्त एवेति ॥ ४ ॥

आ इत्यर्वागर्थे प्रपरेत्येतस्य प्रातिलोम्य मभीत्याभिमुख्यं प्रतीत्येतस्य प्रातिलोम्य मति सु इत्यभिपूजितार्थे निर्दुरित्येतयोः प्रातिलोम्यं न्यवेति विनिग्रहार्थीया उदित्येतयोः प्रातिलोम्यं समित्येकीभावं व्यपेत्येतस्य प्रातिलोम्य मन्विति सादृश्यापरभाव मपीति संसर्ग मुपेत्युपजनं परीति सर्वतोभाव मधीत्युपरि-

भाव मैश्वर्यं वैव मुच्चावचानर्थान् प्राहुस्त उपेक्षितव्याः(३*) ॥ ५ ॥

## प्रथमाध्यायस्य प्रथमः पादः† ॥ १, १.

उच्यतां तर्हि क एषां कस्मिन्नर्थविशेषे वर्त्तते? उच्यते;— अयं तावत्—"आ इत्यर्वागर्थे"। तद्यथा ;— आ पर्वतादिति। अर्वागिति गम्यते। अनेकार्थत्वेऽपि सत्युपसर्गाणा मेकैकोऽर्थ उदाहरणत्वेनोच्यतेऽर्थतत्त्वप्रकाशनार्थम् ॥

"प्र-परेत्येतस्य प्रातिलोम्यम्"। प्र-परा-इत्येतावुपसर्गावेतस्यैवाङोऽर्थस्य प्रातिलोम्य माहतुः। प्रगतः परागतः ॥

"अभीत्याभिमुख्यम्"। आह। अभिगतः ॥

"प्रतीति", "एतस्य" एव अभेः "प्रातिलोम्यम्" आह। प्रतिगत इति ॥

"अति-सु-इत्येतावभिपूजितार्थे" वर्त्तेते। अतिधनः सुब्राह्मण इति ॥

"निर्दुरित्येतयोः प्रातिलोम्यम्"। निर्धनो दुर्ब्राह्मण इति ॥

"न्यवेति विनिग्रहार्थीयौ"। निगृह्णाति। अवगृह्णातीति ॥

"उदिति" अय मेक एव "एतयोः" द्वयोः "प्रातिलोम्यम्" आह। उद्गृह्णातीति ॥

"समित्येकीभावम्" अर्थं माह। सङ्गृह्णातीति ॥

---

* घ-ङ-च-पुस्तकेषु अत्रैव तृतीयखण्डःसमाप्तिः।

† क-ख-ग-पुस्तकेभ्योऽन्यत्र नैव दृश्यते पादबन्धः।

"व्यपेत्येतस्य प्रातिलोम्यम्" आहतुः । विगृह्णातिर्विग्रहार्थीयः विगृह्णाति, अपगृह्णातीति ॥

"अन्विति सादृश्यापरभावम्" आह । अनुरूप मस्येद मिति सादृश्यम् । अनुगच्छतीत्यपरभावः ॥

"अपीति संसर्गम्" आह । सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् ॥

"उपेत्युपजनम्" । उपजायते ॥

"परीति सर्वतोभावम्" आह । परिधावतीति ॥

"अधीत्युपरिभावम्" आह । "ऐश्वर्यं वा" । अधितिष्ठति, अधिपतिरिति ॥

आह ;—नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीत्युक्तम् । अत्र नाम्नः कर्मोपसंयोगद्योतका भवन्तीत्येवं न गृह्यते । "उपसर्गाः क्रियायोगे (पा० १,४,५९)"—इति प्रसिद्धेर्ह्युपसर्गाणां क्रियापदेन योगो न नाम्ना । उपसर्गा हि क्रियाङ्गत्वेनैव नामान्याश्क्नुवन्तीति* ॥ ५ ॥

इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ निरुक्तव्याख्यायां षष्ठस्याध्यायस्य† प्रथमः पादः ॥ १ ॥

---

* एव मुच्चावचेत्यादि-मूलस्य व्याख्या न दृश्यतेऽत्र ।

† निघण्टुनाम निरुक्तं पञ्चाध्यायात्मक मस्यैव पूर्वद्ल मिति मत्वाह षष्ठस्येति । पर मेतन्मूलग्रन्थविरुद्धम्, तत्र सर्वेष्वेव पुस्तकेषु प्रथमाध्यायस्येत्यादिदर्शनात्, निघण्टुनिरुक्तयोर्मूलभाष्यरूपत्वाभ्यां पार्थक्योपलब्धेः स्फुटत्वाच्च ।

॥ द्वितीयपादः ॥

**अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्यप्युपमार्थेऽपि कर्मोपसङ्ग्रहार्थेऽपि पदपूरणास्तेषा मेते चत्वार उपमार्थे भवन्तीवेति भाषायाञ्चान्वध्यायञ्चाग्निरिवेन्द्र इवेति नेति प्रतिषेधार्थीयो भाषाया मुभय मन्वध्यायन्नेन्द्रं देव ममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचार*स्तस्य यत्प्रतिषेधति दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचार†स्तस्य येनोपमिमीते‡ ॥ १ ॥**

"अथ निपाताः"। उक्त मुपसर्गलक्षणं सामान्यम् (३७पृ०),—"नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति"—इति; विशेषलक्षण मपि (४१पृ०),—"आ इत्यर्वागर्थे"—इत्येव मादि। अन्या इति कृत्वा च ते प्रत्येकं समाम्नाताः। अधुना सामान्यलक्षणानुक्तं प्रतिज्ञाप्रसक्त मेव निपातलक्षणं वर्णयिष्यामः। तदधिकारोऽय मथशब्दः॥

"उच्चावचेष्वर्थेषु निपतन्ति"। उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः॥

आह;—कतमे पुनस्ते? उच्यते;—"अप्युपमार्थेऽपि कर्मोपसङ्ग्रहार्थेऽपि पदपूरणाः"। उपमैवार्थ उपमार्थः, तस्मिन्नुपमार्थे।

---

*, † "दुपचार"—इति क, इतिग्रन्थेषु च।

‡ घ-ङ-च-पुस्तकेष्वत्र खण्डसमाप्तिर्नास्ति।

उपमा नाम,—कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुणः, तदन्यस्मिन्नप्रसिद्धस्तद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुणप्रकाशनं क्रियते सोपमा। कर्मोपसंग्रह एवार्थः कर्मोपसंग्रहार्थः, तस्मिन् कर्मोपसंग्रहार्थे। अर्थोपसंग्रहार्थे इत्यर्थः। कर्मशब्दो हि प्रायेणार्थपर्यायवचन एतस्मिञ्छास्त्रे। "गतिकर्माण उत्तरे धातवः (२,१४,१)", गत्यर्था इति गम्यते। पद मेव पूरयितव्यं, येषा मर्थः, ते पदपूरणाः। तदेतत् त्रिधात्व मर्थभेदकृतं निपातानां समासेन॥

आह;—किं मविशेषेण सर्वे एतस्मिन्नर्थे निपतन्ति? नेत्युच्यते। "तेषा मेते चत्वार उपमार्थे भवन्ति"। तेषां सर्वेषां मध्ये एत एव चत्वारः—इव, न, चित्, नु च प्रायोवृत्त्या उपमार्थे भवन्ति॥

अधुनैव मुक्त्वा भाषा-छन्दः-प्रविभागेनोदाहरण मेकैकं दर्शयति। समासविस्ताराभ्यां हि शास्त्राणि प्रतीयन्ते। तत्रायं तावत्;—"इवेति भाषायां च" उपमार्थीयः। "अग्निध्यायञ्च"। छन्दसि चेत्यर्थः। कश्चित् छन्दस्येव भवति, न भाषायाम्; कश्चिद्भाषाया मेव, न छन्दसि; कश्चिदुभयत्र; इत्यतो विभागेन प्रदर्श्यते॥

आह;— किं मुदाहरण मिवेत्यस्योपमार्थीयस्य? का चोपमाशब्दस्य व्युत्पत्तिरिति? उच्यते;—उपगम्यातथागुणैर्मीयत इत्युपमा। "अग्निरिवेन्द्र इवेति"—इत्येतदत्रोदाहरणम्*। तपसः पुत्रो मन्युर्नाम, तस्येय मार्षम्†॥

---

* ऋमन्त्रयमध्यश्रुत मुदाहरणद्वय मित्यर्थः। तथाहि;—ऋ॰ सं॰ ८, ३,१९, १या; किञ्च ऋ॰सं॰ ८ ८ ३१, १या।

† प्रथमोदाहरण मवश्यैव मन्त्रम्।

आह;—ननु सर्व्व एवाय मृग्यजुःसामाथर्वात्मको मन्त्रराशि-रादित्यान्तरपुरुषस्य भगवतो हिरण्यगर्भप्राणस्यार्ष मैतरेयके रहस्य ब्राह्मणे “शतर्चिनो मध्यमाः”—इत्येव माद्यनुपरिक्रम्य पुनः पर्यावृत्य “एत मेव सन्तं शतर्च्चिन इत्याचक्षत एत मेव सन्तं गृत्समद इत्याचक्षते”—इत्येव मादिना क्रमेण मन्त्रदृक्शब्दान् प्राणे निगमयति। अथापीदृशः,—शौनकेन सन्दृष्टा, यस्या मार्षाणि विद्यन्ते। सा च स्मृतिः। ‘श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी’—इति न्यायविदः। स्वल्पपि पठन्ति—“विरोधे त्वनपेक्षं स्यात् (जै॰ सू॰ १,३,३)”—इति। तस्माद्विशेषाभिधान मनर्थक मेवेति? उच्यते;—न ह्येकस्मादात्मनः परिशयमाचशेषः सन् शौनकः कुर्यात्, पश्यतो ह्युभावपि। तेन क्षेत्रज्ञावुभावपि मन्त्राभिव्यक्तौ व्यापृतौ। बुद्धि-देवतात्वेन हिरण्यगर्भः क्षेत्रज्ञोऽवस्थितः, सर्वभूतानां कर्मविपाकानु-रूप्येण। य मर्थं शब्दं वा दर्शयति। तदितरो विशिष्टकर्मकारी क्षेत्रज्ञो बुद्धिस्थः पश्यति। तत्रैवं सति वसिष्ठादिर्मन्त्रदृक् क्षेत्रज्ञः। तेनैवोपदर्शितं मन्त्रं पश्यतीत्युभय मुपपद्यते। एवं सत्युभावपि याथात्म्यतस्तावदनुसन्धेयौ मन्त्रप्रयोगकाले उभयोरर्थवत्त्वाय॥ यत्पुन-रेतदुक्तं भवति, श्रुतिस्मृत्योर्विरोधे श्रुतिरनपेक्ष्येति। न हि विरो-धोऽस्त्युभयोरपि सन्धीयमानयोः। अपि च श्रुतिपूर्वक मेवेदं स्मरणं, न स्वतन्त्रम्। ताण्डके हि रहस्यब्राह्मणं दर्शयति;—“यत् साम्ना स्तोष्यन् स्यात्, तत्सामोपधावेत्। यस्या मृचि ता मृचम्। यदार्षं त मृषिम्”—इति। तत्र यदुक्तं स्मृतिरिय मिति, तदयुक्तम्। तस्माद्वक्तव्य मेव विशिष्यार्ष मिति॥

त्रिष्टुबेषा, मान्यवी, श्येनादिषु निष्केवल्ये शस्यते*। मन्युः पुनरिन्द्र एव,† माहाभाग्यात्कर्मपृथक्त्वाच्च। अथवा देवतान्तरम्, पृथगभिधानस्तुत्यभिधानसम्बन्धात्॥

आह;— ननु मान्यवो मन्त्रो माहेन्द्रग्रहयजिसन्निधौ निष्केवल्ये शस्यमानो महेन्द्र मभिहितसंस्कारेणासमर्थ एव वक्तुम्। अथ किमर्थ मयं निष्केवल्ये शस्यते इति? उच्यते;—अन्यदेव हि स्तुत्य-भिव्यङ्ग्य मपूर्व मारादुपकाराङ्गभूतं माहेन्द्रग्रह-यजि-व्यङ्ग्यस्या-पूर्वस्य। अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदधाता मिति न्यायविदो याज्ञिका पठन्ति। वक्ष्यति चाय मर्षि‡;—"इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भा-जश्च भूयिष्ठाः (७,३,६)"—इति। स एष मन्युस्तुतिभाक् एव। यथा—"अभि त्वा शूर (ऋ०सं०५,३,२१,२)"—इति इन्द्र एव तस्मिन्निष्केवल्ये, यथा "आपो हि ष्ठा (ऋ०सं०७,६,५,१)"—इत्याप आग्निमारुते, सूर्यादय आश्विने, एवम्॥

हे 'मन्यो'! 'सहुरे' सहनशील! एतस्मिन् शत्रूणा मभिभवन-काले प्रत्युपस्थिते 'हूतः' आहूतः सन् अस्माभिः, 'सेनानीः' सेनाप्रणेता 'नः' अस्माकम् 'एधि' भव। ततश्च 'अग्निरिव' 'त्विषितः' दीप्तस्त्वं तेजसा

---

* "अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि।
हत्वाय शत्रून् भजस्व वेद ओजो मिमानो वि मृधो नुदस्व॥"
(ऋ०सं० ८, ३, १९, १.)

† "मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः।"
(ऋ०सं० ८, ३, १८, १.)

‡ निबन्धकारो यास्कएव।

'सहस्व' अभिभव तानस्मच्छत्रून्। 'इलाय' इत्वैव यदेतेषा मस्मच्छत्रूणां 'वेदः' धनं तत् त्व मादाय तेषा मस्मद्योधानाम् 'ओजः' बलं 'मिमानः' निर्माय यथावस्तु यथार्हं 'वि भजस्व'। येऽपि च के चिद्धतावशिष्टाः 'मृधः' मृधकारिणः अस्मद्विषः अस्मत्तः प्रत्याजिहीर्षन्त्येतद्धनम्, तेषा मोजो मिमानः तूलयित्वा कियदवशिष्टबला ह्येते न शक्ताः प्रत्याहर्त्तु मित्येवं मिमानस्तावन्मात्रशेषबलान् कृत्वा त्वं 'वि नुदस्व' एनान् दूरं प्रक्षिप अपुनरागमनाय ॥

द्वितीय मुदाहरण मेतस्यैव;—"इहैवैधि ०—— ० धारय"*। अनया चानुष्टुभा ध्रुव आङ्गिरसो राजान मभिषिषेच। 'इहैव' राष्ट्रे त्वम् 'एधि' भव। 'मा' चातस्त्वम् 'अप च्योष्ठाः'। 'पर्वत इव' 'अविचाचलिः' अविचलनशीलः। 'इन्द्र इव' च 'इह' 'ध्रुवः' शाश्वतः 'तिष्ठ'। स्थित्वा च इदं 'राष्ट्रम्' 'इह' 'उ' एव विभूतियोगेन स्थितं 'धारय'—इत्याशीः ॥

भाषायां प्रसिद्ध मेवेति कृत्वा नोदाहरणं पठितम्। अथ वा एते एव। 'अग्निरिव तीक्ष्णः', 'इन्द्र इव विक्रान्तः' ॥

"नेति प्रतिषेधार्थीयो भाषायाम्"। प्रसिद्धः। "उभय मन्वध्यायम्"। "नेन्द्रं देव ममंसतेति (ऋ० सं० ८, ३, २८, १)"। नेन्द्रं देव मात्मनो दीपयितार ममन्यन्तादित्यरश्मयः ॥

आह;—किं पुनर्लक्षण मिति? उच्यते;—"प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति"।

---

* इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्र मु धारय ॥" (ऋ० सं० ८, ८, ११, १)

"दुर्मदासो न सुराया मित्युपमार्थीय उपरिष्टा दुपचार स्तस्य येनोपमिमीते"—इति । येनार्थेनोपमेय मर्थ मुपमिमीते । तद्यथा;—"दुर्मदासो न सुराया मिति" । "हृत्सु पीतासो ०——० जरन्ते" * । काण्वो मेधातिथि राङ्गिरसस्य प्रियमेध ऐन्द्रं सूक्तं ददृशाते । तत्रैषा गायत्री । येषा मपि विनियोगः क्वचि दन्यत्र नास्ति, तेऽपि वाचःस्तोमे विनियुज्यन्ते । 'हृत्सु' 'पीतासः' पीताः सन्तो हृदयेष्ववस्थिताः सोमाः 'युध्यन्ते' सम्प्रहार मिव कुर्वन्ति । अहं विशिष्ट इत्येवं स्पर्द्धमानाः । क इव ? 'दुर्मदासो न' दुर्मदासः "आज्जसे रसुक् (पा० ७,१,५०)" यथा कुत्सितमदाः केचित् पुरुषाः सुरायां पीतायां सत्यां युध्येरन्; एवम् । किञ्च, त मेव यजमानं 'जरन्ते' स्तुवन्तीव आत्मलाभपरितुष्टाः । कथं जरन्ते ? 'ऊधर्न' ऊधरिव रात्रि मिव 'नग्नाः' भूत्वा स्त्रियं सम्प्रयोक्ष्यामह इत्येव मभिप्राया इव† । के चिद्विशिष्टाः पुरुषा ॥ १ ॥

चिदित्येषोऽनेककर्माऽऽचार्यश्चिदिदम्ब्रूयादिति पूजा-या माचार्य‡ आचारङ्ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धि मिति वा दधिचिदित्युपमार्थे कुल्माषांश्चिदाह-रेत्यवकुत्सिते कुल्माषाः कुलेषु सीदन्ति नु इत्येषो-

---

* "हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम् ।
ऊधर्न नग्ना जरन्ते ॥" (ऋ०सं० ५, ७ १९, १.)

† "नग्नाः' स्तोतारः । ते च 'ऊधर्न' पयसा पूर्णं मवादे रूध इव सोमपूर्णं त्वां 'जरन्ते' स्तुवन्ति ।" इति सायणः ॥

‡ "पूजाया माचार्यः कस्मादाचार्य"—इति ख, ङ, च ।

ऽनेककर्मेदन्नु करिष्यतीति हेत्वपदेशे कथन्नु करिष्यतीत्यनुपृष्टे नन्वेतदकार्षीदिति* चाथाप्युपमार्थे भवति† ॥ २ ॥

चिदित्येषोऽनेकार्थोऽपि सन्नुपमार्थीयसंयोगादत्रोदाहृतः ॥

कथ मय मनेकार्थइति? उच्यते;—"आचार्यश्चिदिदं ब्रूयादिति पूजायाम्"। आचार्य एवं ब्रूयात्, कोऽन्य एवं वक्ष्यतीति। "दधिचिदित्युपमार्थे" दधिरूप ओदन इति। "कुल्माषांश्चिदाहरेत्यवकुत्सिते"। अत्रं कुत्सिते। कुल्माषानपि तावदाहरेति किं त्वान्यदाहरिष्यसि। "नु इत्येषोऽनेककर्मा"। कथं? "इदन्नुकरिष्यतीति"। कथं हि क्रियाया हेतुर्निमित्त मित्यर्थः। कथं नु करिष्यतीति पृष्ट्वा करिष्यतीत्युक्ते यत्पुनरनुपृच्छति कथं नु करिष्यति? तदनुस्थान मेतस्मिन्ननुपृष्टे। "नन्वेतदकार्षीदिति च"। अनुपृष्ट एवायं भवतीति ॥

नन्वय मकार्षीदेतत्, कथ मयं ब्रवीति कथं करिष्यतीति? "अथाप्युपमार्थे भवति" तद्यथा—॥ २ ॥

वृक्षस्य नु ते पुरुहूत वयाः वृक्षस्येव ते पुरुहूतशाखा वयाः शाखा वेतेर्वातायना भवन्ति शाखाः

---

* "कार्षीदिति"—इति च०, अन्यत्र च शोधिततया दृश्यते,—इत्तो चैव मेव। परं क-ख-ग-घ-ङ-पुस्तकेषु पश्चस्वेव "कार्षीरिति" एव मेव पूर्वलिखितः पाठोऽनुभूयते।

† नेहापि खण्डसमाप्तिः घ-ङ-च-पुस्तकेषु।

खश्रयाः शक्नोतेर्वाऽर्थे यस्यागमादर्थपृथक्त्वं मह* विज्ञायते न त्वौद्देशिक मिव विग्रहेण पृथक्त्वात्स†कर्मोपसङ्ग्रहश्चेति समुच्चयार्थ उभाभ्यां सं प्रयुज्यतेऽहं च त्वं च वृत्रहन्नित्येतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारो वेति विचारणार्थे हन्ताहं पृथिवी मिमां निदधानीह वेह वेत्यथापि समुच्चयार्थे भवति (४‡) वायुर्वा त्वा मनुर्वा त्वेति ॥ ३ ॥

"अवो न ० —— ० पूर्वीः"§। भरद्वाजो वार्हस्पत्योऽस्याम्रिष्टुभः, पूर्व्वेणार्द्धर्चेन इन्द्रं स्तुत्वोत्तरेणोपालब्धवान्। हे 'शूर' इन्द्र! 'पुरुहूत!' महानच इव चक्रयोः 'प्र रिरिचे' प्रकर्षेणातिरिच्यते। तव 'मह्ना' महत्त्वेन विभूतिः। कुतोऽतिरिच्यते? 'रोदस्योः' द्यावापृथिव्योः। तथापि चैवं विभूतियुक्तस्य सतस्तव लब्धकाना मेवास्माकं सतां वृक्षस्येव 'वयाः' शाखाः 'पूर्व्वीरूतयः' पूर्वास्मद्यज्ञागमनमार्गाः 'वि रुरुहुः' खिलीभूतास्तवानागमनात्। अहो कष्टं मन्दभागधेयतास्माकम्! येषां नो धनं, न तदस्ति येन त्वां यजेमहि। किं

---

* "मितिह" घ, ङ।

† "पृथक्त्वाच्च' क, ख, ग। परं द्वत्तिविरुद्धः।

‡ घ-ङ-च-पुस्तकेष्वत्र प्रथमाध्यायस्य चतुर्थः खण्डः समाप्तः।

§ "अवो न चक्र्योः शूर बृहन् प्र ते मह्ना रिरिचे रोदस्योः।
वृक्षस्य नु ते पुरुहूत वया व्यूतयो रुरुहुरिन्द्र पूर्वीः॥"
(ऋ०सं० ४, ६, १७, ३।

मत्र त्वां वक्ष्याम इति ॥* "वयाः शाखाः"—इति पर्यायवचनः। "वेतेः" वया इति निगमप्रसक्तस्य निर्वचनम्। "शाखाः ख-शयाः" इति पर्यायप्रसक्तस्य। व्याख्याता उपमार्थीयाः ॥

अथानन्तरं प्रतिज्ञाप्रसक्तानेव कर्मोपसङ्ग्रहार्थान् वक्ष्यामः ॥

"अथ यस्यागमादर्थपृथक्त्व मह विज्ञायते, न त्वौद्देशिक मिव विग्रहेण पृथक्त्वात्स कर्मोपसङ्ग्रहः"। यस्यागमादध्याहारादश्रूयमाणस्यैव निपातस्य सरूपविरूपैकशेषादर्थतो वा 'पृथक्त्व मह' पृथग्भाव एव 'विज्ञायते'। तद्यथा,—देवदत्तयज्ञदत्तौ, देवदत्तश्च यज्ञदत्तश्चेति ॥

आह;— द्वावप्यत्र देवदत्तयज्ञदत्तौ श्रूयेते; न तु तयोरौद्देशिक मिव पृथक्त्व मिति। यथा गाः, अश्वान्, पुरुषान्, पशूनिति प्रत्येक मुद्दिश्यमानानाम्। इह तु विग्रहेण च शब्दागमादेतत् पृथक्त्व मुपजायते। नानाग्रहणं द्वयो र्बहूना मर्थानां विग्रहः स एष पृथक्त्वाद्धेतोः पृथक्त्वेन निमित्तेनोपलक्ष्यमाणः, यस्माद् द्वावर्थौ बहून् वा गृहीत्वैकस्मिन् कर्मणि उपसमावेशयति। तद्यथा;—'देवदत्तयज्ञदत्तौ पचेते'—इत्येवम्। तस्मात् 'कर्मोपसङ्ग्रहः'—इत्येतन्नामैव तद्भवति। अथ वा बृहस्पतिश्चेत्युक्ते प्रजापतिरनुक्तोऽपि द्वितीयो गम्यते प्रजापतिश्चेति ॥

कतमः पुनरसाविति? उच्यते;—"चेति" कदाचिदय मेव

---

* "हे 'पुरुहूत' बहुभिराहूतेन्द्र 'पूर्वीः' बह्व्यः 'जनयः' रथाः 'वि ववृद्धः' विशेषेण रोहन्ति। तत्र दृष्टान्तः—'वृक्षस्य नु'। यथा वृक्षस्य वयाः शाखाः विरोहन्ति तद्वत्"—इति सायणव्याख्यांशः।

'समुच्चयार्थः' 'उभाभ्याम्' अप्यर्थाभ्यां विगृहीताभ्या मेव संयुक्तः 'प्रयुज्यते' । तथा च,—"अहं च त्वं च वृत्रहन्निति" । "अहं च ०——० रातयः"* । घोरपुत्रः प्रगाथोऽनया ऐन्द्र्या पङ्क्त्या इन्द्रस्य सख्यार्थी सन्नब्रवीत् । हे 'वृत्रहन्' इन्द्र ! 'अहं च' प्रगाथ 'त्वं च' 'संयुज्याव' । एकस्मिन्नर्थे सति प्राप्तिलक्षणे युज्यावहै 'आ सनिभ्यः' आप्राप्तेः । 'अरातीवा'-इत्येकं पदम् अथैव मावां संयुक्तौ दृष्ट्वा हे 'अद्रिवः' । 'अरातीवा चित्' अदानशीलोऽपि दानशीलता मुपेत्यानुमंस्यत एवावयोर्दानम् । 'भद्रा' भन्दनीया 'इन्द्रस्य' 'रातयः' दानानीत्येवं मन्यमानः । को हि नाम त्वत्संयुक्ताना मस्माकं न दद्यादित्यभिप्रायः ॥

अथाप्याकारः "एतस्मिन्नेवार्थे" समुच्चयार्थे । "देवेभ्यश्च पितृभ्य आ"—इति । अथ मस्मिन्मन्त्रे आकारः । "यो अग्निः ०——० पितृभ्य आ"† । अनुष्टुप्, आग्नी, पितृयज्ञे विनियुक्ता । 'योऽग्निः' कव्यस्य वोढा, यस्याय मधिकारः, कव्यानि वोढव्यानीति; स इहास्माकं पितृयज्ञे होतृत्वेन स्थितः, 'पितॄन्' 'यक्षत्' पूजयत्वित्यर्थः । किंलक्षणान्? 'ऋतावृधः' सत्यवृधो वा यज्ञवृधो वा । किञ्च । 'प्रेदु हव्यानि' वोचति, वोचतु च । प्रब्रवीत्वितानि हवींष्यस्मत्प्रदत्तानि । कस्मै ? 'देवेभ्यश्च पितृभ्यश्च'-इति ॥

---

* "अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥" (ऋ०सं० ६, ४, ४१, ५) ।

† यो अग्निः कव्यवाहनः पितॄन् यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥" ( ऋ० सं० ७, ६, ११, १)

"वेति" अयं "विचारणार्थे"। समुच्चयार्थीयप्रसङ्गेनोदाह्रियते। "हन्ताहं ०——० मिति"* । ऐन्द्रो लवस्तस्येय मार्षं, गायत्री । 'हन्त' इदानी मेव 'अहम्' 'इमां पृथिवीम्' 'इह वा' अन्तरिक्षलोके, 'इह वा' द्युलोके। अथवा 'इह' दक्षिणे स्कन्धे, 'इह वा' सव्ये 'निदधानि' अवस्थापयामि। अतः स्थानादुद्धृत्य। अथ किमर्थं ब्रूते? 'कुवित्सोमस्य' बहुत्वं सोमम् 'अपाम्' पीतवानिति। अस्य मे सोमपानस्यानुरूप मेव वीर्य मस्तीत्यभिप्रायः॥

"अथापि," "वेति" अयं "समुच्चयार्थे भवति"। "वायुर्वा त्वा मनुर्वात्वेति"। "वायुर्वा त्वा मनुर्वा त्वा † गन्धर्वाः सप्तविंशतिः। ते अग्रे अश्व मयुञ्जंस्ते अस्मिञ्जव मादधुः (य० स० ९,७)"। अनुष्टुबेषा। वाजपेयेऽश्वयोजने विनियुक्ता। हे अश्व! वायुश्च त्वा मनुश्च त्वा; गन्धर्वा एते सप्तविंशतिर्युञ्जन्ति त्वा मस्मिन् रथे। ते हि विदुर्यथा त्वं योक्तव्यः। एवं च पूर्व मप्यश्वं युक्तवन्तो देवाना मृषीणां च। त एव च तस्मिन् जव मादधुः आहितवन्तो यस्मादतो ब्रवीमि ममापि चाग्ने! त मश्वं त एव युञ्जन्तु; जवं चास्मिन्नादधत्विति॥ २॥

अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते अय महेदं करोत्वय मिद मिदं ह ‡ करिष्यतीदं

* "हन्ताहं पृथिवी मिमां निदधानीह वेह वा।
कुवित्सोमस्यापामिति॥" (ऋ० सं० ८, ९, १०, २)

† "वातोवा मनोवा"—इति माध्यन्दिनीपाठः।

‡ "करोत्वय मिदं च"—इत्य च। "हि" च।

न* करिष्यतीत्यथाप्युकार एतस्मिन्नेवार्थ उत्तरेण मृषेमे वदन्ति सत्यमु ते वदन्तीत्यथापि पदपूरण इदमु तदु हीत्येषोऽनेककर्मेदं हि करिष्यतीति हेत्वपदेशे कथं हि करिष्यतीत्यनुपृष्टे कथं हि व्याकरिष्यतीत्यसूयायां किलेति विद्याप्रकर्ष एवं किलेत्यथापि न ननु इत्येताभ्यां संप्रयुज्यतेऽनु पृष्टे न किलैवं ननु किलैव मेति प्रतिषेधे मा कार्षीर्मा हार्षीरिति च खल्विति च खलु कृत्वा खलु कृत मथापि पदपूरण एवं खलु तद्बभूवेति शश्वदिति विचिकित्सार्थीयो भाषायां शश्वदेव मित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे नून मिति विचिकित्सार्थीयो भाषाया मुभय मन्वध्यायं विचिकित्सार्थीयश्च पदपूरणश्चागस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्सां चकार स इन्द्र एत्यपरिदेवयाञ्चक्रे (५†) ॥ ४ ॥

इति प्रथमाध्यायस्य द्वितीयः पादः ॥ १, २.

"अह इति च, ह इति च" द्वावप्येतौ "विनिग्रहार्थीयौ"। तयोः पुनरेतयो रेतत् प्रयोगस्वाभाव्यम् । द्वयोरर्थयोरेककाले प्रकृतयोः "पूर्वेण" पूर्ववाक्यगतेनार्थेन संयुक्तौ "प्रयुज्येते"। तद्यथा ;— "अय महेदं करोत्वय मिदम्"। अय मह यज्ञदत्तो गाः पाययतु, अयं देवदत्तो भुङ्क्ता मिति ॥

---

* "नु" क, ख, ग, घ। परं इति विवरः।

† घ-ङ-च-पुस्तकेष्वत्र प्रथमाध्यायस्य पञ्चमः खण्डः समाप्तः।

हकारस्योदाहरणम् "इदं ह करिष्यतीति"। यज्ञदत्त इदं ह करिष्यति। "इदं न करिष्यतीति"। ओदनं न पक्ष्यतीति॥

"अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण"। विनिग्रहार्थे भवति। स पुन रुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तः प्रयुज्यते। तद्यथा;— "मृषेमे" वृषला "वदन्ति"। "सत्य मु ते" ब्राह्मणाः "वदन्तीति"। विनिग्रहो नाम, विभागेनावस्थितयोर्यज्ञदत्तदेवदत्तयो रेकस्मिन् यज्ञदत्तेऽभिमतरसगोपायनस्य नियमेन ग्रहणं यत् स विनिग्रहः। तदर्थो विनिग्रहार्थः, विनिग्रहार्थ एव विनिग्रहार्थीयः॥

"अथापि" उकारः "पदपूरणः" भवति। "इद मु त्यत् ०——० जनाय"*। वामदेवो गौतमोऽनया त्रिष्टुभोषसं तुष्टाव। प्रातरनुवाकाश्विनयोः शस्यते। 'इदं' तत् 'ज्योतिः' यत् जनाः कथयन्ति। उकारः पदपूरणः। एतत् 'पुरुतमं' बहुतमम्। कुतः? पुरुतमम्। 'तमसः' यदभिभूय आवरं तमः स्व मात्मान मभिव्यनक्ति। अत एव तद्बहुतमम्। 'पुरस्तात्' प्राच्यां दिशि ज्योतिः 'वयुनवत्' प्रज्ञानवदुत्तिष्ठति। 'नूनं' निश्चयेन एताः 'उषसः' दिवो दुहितरः। रूपसामान्यात् दुहितृत्वात्। 'विभातीः' विभासमानाः 'गातुं' गमन मपि कृतार्थं जनानां 'कृणवत्' कुर्वन्त्य आगच्छन्ति। यथेय मनुरज्यते प्राची दिक्, विध्वंस्यते च तमः। एकस्या एव पूजनार्थे बहुवचनम्॥

---

* "इद मु त्यत् पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात्।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय॥"
(ऋ॰ सं॰ ३, ८, ९, १)

"तदु प्रयक्षतम ०——० वतस्तः"*। द्वितीय मुदाहरण मस्यैव। गौतमो नोधाश्चानया त्रिष्टुभेन्द्र मस्तौत्। प्रवर्ग्ये विनियुक्ता। 'तत्' प्रकर्षेण 'यक्षतमं' पूज्यतमम्। उ इति पदपूरण एव। 'अस्य' इन्द्रस्य 'दस्मस्य' दासयितुर्दर्शनीयस्य वा 'चारुतमं' शोभनतम मन्यदपि तस्य 'अस्ति' 'दंसः' कर्म्म किमपि बहुप्रकारम्। तत् चात्रैव पूज्य मेव। इद मेव तस्य चारुतमं च पूज्यतमं च। तत् किम्? 'उपह्वरे यत् उपराः अपिन्वत्'। उपह्वान मर्हन्ति यस्मिन् देशे ऽवस्थिताः सहायाः, स उपह्वरो देशः; जनैरनाकीर्णो यस्मिन्नेकाकी 'यत्' 'उपराः' मेघपूरिताः 'मध्वर्णसः' मधूदकाः 'वतस्तः' 'नद्यः' नदीः 'अपिन्वत्' अपातयत् अचारयत्। वर्षद्वारेण यज्ञादि प्रावर्त्तयत्;—इत्यतः। एतदेवास्य चारुतमत्वम् पूज्यतमत्वञ्चेत्यभिप्रायः॥

"शीत्येषोऽनेककर्मा"। तद्यथा;– "इदं हि करिष्यतीति हेत्वपदेशे। कथं हि करिष्यतीत्यनुपृष्टे। कथं हि व्याकरिष्यतीत्यसूयायाम्"। कथ मयं व्याकरिष्यतीत्यकृतप्रयत्नोऽय मित्यभिप्रायः। अमर्षादसाचाच्छब्दपूर्वकोऽभिप्रायः परिवादोऽसूयेत्युच्यते। परगुणानभिज्ञेत्यर्थः॥

"किलेति विद्याप्रकर्षे" विज्ञानातिशय इत्यर्थः॥ अन्यत उपश्रुत्यातिशय इत्यर्थः। अन्यत उपश्रुत्यातिशयेनावधार्यान्यस्मा आचष्टे कश्चित्—"एवं किल" एतदासीद्युद्ध मिति॥

* "तदु प्रयक्षतम मस्य कर्म दस्मस्य चारुतम मस्ति दंसः।
उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्य१श्चतस्रः॥"
(ऋ० सं० १, ५, १, १)

"अथापि न ननु इत्येताभ्यां" संयुक्तः किलेत्ययं प्रयुज्यते। "अनु पृष्टे" अर्थे। अन्यत उपश्रुत्य कश्चिदर्थं नाय मेव मिति; ततस्त मेवार्थं मन्य मनुपृच्छति। अथेतर मश्रद्दधत्पूर्वस्य। "न किलैवम्"—इति। "ननु किलैवम्"—इति॥

"मेति" अयं "प्रतिषेधे"। तद्यथा;—"मा कार्षीर्मा हार्षीरिति च"। अयं च प्रतिषेधार्थीय एव।

"खल्विति च"। तद्यथा;—"खलु कृत्वा"। अकृत्वेत्यर्थः। देशभाषाव्यवस्थयैवञ्जातीयाना मुपेक्षितव्यः क्वचित्प्रयोगः॥

"अथापि" खल्वित्ययं "पदपूरणे" भवति। तद्यथा;—एवं खलु तद्बभूवेति। अन्वीक्ष्यः प्रयोगः क्वचित्पादवृत्तेषु॥

"शश्वदिति विचिकित्सार्थीयो भाषायाम्"। छन्दसि पुनरन्येष्वप्यर्थेषु भवति। यथासम्भवं द्रष्टव्यः। इयं चास्य शैली अर्थ मपेक्ष्य। एवं शब्दस्य पुरस्तात् प्रयोगो वा भवति, उपरिष्टाद्वा। तद्यथा;—"शश्वदेव मित्यनुपृष्ट एवं शश्वदित्यस्वयं पृष्टे" अर्थे इति वाक्यशेषः॥

"नून मिति विचिकित्सार्थीयो भाषायाम्"। विचिकित्सा नाम विवेकपूर्वको अवधारणाभिप्रायः। तत्रायं भाषायां भवति। "उभयम् अन्वध्यायम्"। पुन रय मर्थद्वये भवति—"विकित्सार्थीयश्च पदपूरणश्च"॥

उदाहरण मत्र निर्विवक्षुर्निदान मेवाह;—"अगस्त्य इन्द्राय"—इत्यादि। निदानवतां मन्त्राणां निदान मेव पूर्वं वक्तव्यम्, तेन ह्यतितरा मर्थ उच्यमानः प्रकाशते। ततः पदानि। ततोऽर्थः। ततः प्रत्येकं विग्रहेण

निर्वचनम्। एष हि व्याख्याक्रमः। अगः कुम्भः, तत्र स्त्यानः संहत इत्यगस्त्यः। सः "इन्द्राय हविर्निरूप्य मरुद्भ्यः सम्प्रदित्सां चकार"। सम्प्रदातुमैच्छदित्यर्थः। "स इन्द्र एत्य परिदेवयाञ्चक्रे"। परिदेवना नाम मन्युपूर्वको विलापः॥ ४॥

इति निरुक्तवृत्तौ षष्ठाध्यायस्य द्वितीयः पादः*॥ ६, २॥

---

॥ तृतीयः पादः॥

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम्। अन्यस्य चित्तमभि सञ्चरेण्यमुताधीतं वि नश्यति॥ न नूनमस्त्यद्यतनं नो एव श्वस्तनमद्यास्मिन् द्यवि द्युरित्यह्नो नामधेयं द्योतत इति सतः श्व उपाशंसनीयः कालो ह्यो हीनः कालः कस्तद्वेद यदद्भुतम् कस्तद्वेद यदभूतमिदमपीतरदद्भुतमभूतमिवान्यस्य† चित्तमभिसञ्चरेण्यमभिसञ्चार्य्यन्यो‡ नानेयश्चित्तं चेततेरुताधीतं वि नश्यतीत्याध्यात§मभिप्रेतमथापि पदपूरणः(६॥)॥ १॥

---

* इतिग्रन्थे तु 'न नूनमस्ति'—इत्याद्यग्रिमखण्डान्तो द्वितीयः पादो दृश्यते, परं सर्वमूलग्रन्थविरोधादिदोपेक्षितः सः। तथाचानुपदवक्ष्यमाणोऽयं 'न नूनमस्ति'—इत्यादि-खण्डस्तृतीयपादस्याद्य इत्येव ज्ञेयम्।

† "मिति चान्यस्य" क·ख·ग·ङ·घ-पुस्तकेऽपि शोधिततया दृश्यते, परमयं पाठो इतिविरुद्धः।

‡ "मभिसञ्चार्यमन्यो" घ,ङ।

§ "वि नश्यत्यथाध्यातं वि नश्यत्याध्यात" घ, ङ, च।

‖ घ·ङ·च·पुस्तकेष्विह षष्ठः खण्डः समाप्तः।

"न नून मस्ति (ऋ० स० २,४,१०,१)"—इति। विचार्य्य मेतन्मन्त्रमेतत्तावत्;—अद्यतनं हविर्मम नास्तीति। नकारं दृष्ट्वाद्यतन-शब्दोऽध्याहृतः आचार्य्येण। प्रतिषेधे हि सति प्रतिषेध्येनाप्यवश्यं भवितव्य मिति। एते च मन्त्रैकदेशा एव सन्तोऽध्याहाराः, पदा-तिरेकादध्ययनकालेनाधीयन्ते। ते त्वर्थनिर्वचनकाले प्रकाशयि-तव्याः। अथापि स्यात् श्वस्तनं भविष्यतीति। 'नो श्वः' इदं ताव-दस्मदर्थ मेव निरुक्तं सदस्मन्नो व्याप नून मथ श्वस्तने का प्रत्याशा। किङ्कारणं? 'कस्तद्वेद यदद्भुतम्'। को हि नाम तद्वेद जानाति यदद्भुत मनुत्पन्नं कस्य भविष्यतीति मम वा अन्यस्य वा इति। कस्मात्पुनर्न विज्ञायत इति? अतः; यस्मात् 'अन्यस्य चित्त मभि सञ्चरेण्यम्' सञ्चरणशील मनवस्थित मित्यभिप्रायः। 'उत', अपि, अथेति छन्दसि समानार्थाः। एतदद्यतनं हविः 'आधीतम्' आध्यात मभिप्रेतं सत् मया ममेद मित्येवं तथापि 'वि नश्यति' एवान्यस्मै प्रदीयते। तच्चैवं सति श्वस्तन मस्माकं भविष्यतीति कुत एतदिति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"अस्मिन् श्वि;—द्युरित्यह्नो नामधेयम्; द्योतत इति सतः"। द्योततेर्द्युरिति। द्योतत इति कर्तृकारकम्। सदिति यच्च ब्रूयात्, तच्चोच्चारित एव कारकनियमो द्रष्टव्यः; अन्यच्च यथेष्टं योज्यम्। "श्व उपाशंसनीयः" उपगम्यः, सर्वेतथा आशास्तव्यो भवति, अनागतत्वात्। "ह्यो हीनः कालः" अतिक्रान्तो हि स भवति॥ श्वः-सम्बन्धात् ह्यः-शब्दोऽविमानोऽपि निरुक्तः,—"अद्भुतम् अभूतम्"। "इद मपीतरदद्भुतम्"—शोणितवर्षादि; "अभूत मिव" कादाचि-

त्कत्वात्। शब्दसारूप्यप्रसङ्गेनेदं निरुक्तम्। "अन्यो नानेयः" नानात्वेन व्यवस्थितस्यापत्य मसत्कुलजस्येत्यर्थः। अथवा न सता मानेयः। "चित्तश्चेततेः" चेतत्यनेनार्थानिति चित्तम्। "उताधीतं वि नश्य-तीत्याध्यात मभिप्रेतम्"—इतिपर्यायवचनम्॥

"अथापि" अथ मस्मिन्मन्त्रे "पदपूरणः" भवति—॥ १॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी। शिक्षा स्तोतृभ्यो माति धग् भगो नो बृहद्वदेम विदथे सुवीराः॥ सा ते प्रति दुग्धां वरं जरित्रे वरो वरयितव्यो भवति जरिता गरिता दक्षिणा मघोनी मघवती मघ मिति धननामधेयं मंहतेर्दानकर्मणो दक्षिणा दक्षतेः समर्द्धयतिकर्मणो व्यृद्धं समर्द्धयतीत्यपि वा प्रदक्षिणागमनाद्दिश मभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दानकर्मणो हस्तो हन्तेः प्राशुर्हनने देहि स्तोतृभ्यः कामान् मास्मानतिदंहीर्मास्मानतिहाय दा भगो नो अस्तु* बृहद्वदेम स्वे वेदने भगो भजतेर्बृहदिति महतो नामधेयं परिवृळ्हं† भवति वीरवन्तः कल्याणवीरा वा वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा

* "नोऽस्तु" ग, ङ, च।

† "परिवृढं"—इति च-पुस्तकपाठो मुद्रितपुस्तकेषु च; परं हस्तलिखितसर्वमूल-पुस्तकविरुद्धः। वस्तुतश्छन्दसि ढकारं खलु ळ्हत्व मेवापद्यते, विद्यते च छन्दोवश मङ्गानाम्।

सी मिति परिग्रहार्थीयो वा पदपूरणो वा प्र सीमा-दित्यो असृजत् प्रासृजदिति वा प्रासृजत्सर्वत इति वा वि सीमतः सुरुचो वेन आवरिति च व्यवृणोत् सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरोचनादपि वा सीमेत्येतदनर्थक मुपबन्ध माददीत पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विसीव्यति* देशाविति त्व इति विनिग्रहार्थीयं सर्वना-मानुदात्त मर्द्धनामेत्येके(७†] ॥ २ ॥

"नूनं सा ते (ऋ॰सं॰ २,६,६,६)"—इति। गृत्समदस्येय मार्षम्। पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीये शस्यते। 'नूनम्' इति पदपूरण एव। 'सा' 'दक्षिणा' 'ते' तव या पुत्रभावके कर्मणि। सा किं करोतु? 'प्रति' दुग्धाम्। किम्? 'वरम्'। कर्मणो दक्षिणा-गुणकात् फलप्राप्तिस्तथापि तु दक्षिणाया मुपचर्यते। कस्मै? 'जरित्रे' स्तुवते यजमानाय। किंलक्षणा? 'मघोनी' मघवती हिरण्यधान्यादिधनेन संयुक्ता, तद्वतीत्यर्थः। किञ्च; 'शिक्षा'‡ देहि। कस्मै? 'स्तोतृभ्यः' ऋत्विग्भ्योऽनुकामान्। किञ्च; 'माति धक्' मास्मानतिशयातीत्या-न्येभ्यो देहीति मादा इत्यर्थः। अस्मभ्यं तावद्देहि, ततोऽन्येभ्योऽपि दास्यसि चेत्यभिप्रायः। किञ्च; 'भगो नः' धनं नोऽस्तु। येन किं कुर्याम? 'बृहद्वदेम' महदूर्जितं वदेम दीयतां भुज्यता मिति।

---

* "विषीव्यति"—इति ख, ङ, च।

† ख-ङ-च-पुस्तकेष्विह सप्तमः खण्डः समाप्तः।

‡ "द्व्यचोतस्तिङः (पा॰ ६, ३, १३५)"—इति दीर्घः।

क ? 'विदथे' यज्ञे । अथवा स्वे गृहे । किञ्च; युष्मदनुग्रहाच्च सुवीराः' वीरवन्तो भवेम पुत्रवन्तः । यद्यपुत्राः, एव मयं मत्वर्थीयः सुः ; अथ पुनः पुत्रवन्तः, एवं ततः कल्याणवीरा इति समस्तार्थः ॥

अथैकपदनिरुक्तम् ।—"वरो वरयितव्यो भवति" म्रियते ह्यसौ । "जरिता गरिता" इति स्तुत्यर्थस्य । "मघ मिति मंहतेर्दानकर्मणः" दीयते हि तत् । "दक्षिणा दक्षतेः" समर्द्धयत्यर्थस्य; यज्ञे हि यत्किञ्चिद्विगतर्द्धिकं भवति, तदियं समर्द्धयति; विश्लिष्टं यज्ञस्य साधन मेतदिति । "अपि वा प्रदक्षिणागमनात्" दक्षिणा । दक्षिणां "दिश मभिप्रेत्य",—सा हि दक्षिणस्यां वेदिश्रोण्यो, अग्रेण गार्हपत्यं, जघनेन सदो, दक्षिणेनाग्नीध्रीयं गत्वा अन्तर्वेदिं स्थित्वा अन्तरेण चात्वालोत्करौ त माग्नीध्रं चोत्सृज्यमाना गच्छन्तीति "दिक्" पुनर्दक्षिणा । "हस्तप्रकृतिः" प्राङ्मुखस्य प्रजापतेर्दक्षिणो हस्तो बभूव, सा दक्षिणा दिगभवत् । अथ "दक्षिणो हस्तः" कस्माद्दक्षिण इति ? "दक्षतेः" उत्साहार्थस्य,—स ह्युत्साहवान् भवति कर्मसु ; न तथा सव्यः । "दाशतेर्वा स्यात्" दानार्थस्य,—तेनैव हि प्रायेण दीयते । अथ "हस्तः" कस्मात्? "हन्तेः",—तेन हि हन्यते । न, अन्येनापि केनचिदङ्गेन हन्यते । एवं यो हन्तव्यो भवति तस्य "हनने", अथ मेव तु "प्राशुः" शीघ्रः इत्यर्थः । "ह्यहदिति महतो नामधेयम्; परिवृढं भवति"—इति । "वीरो वीरयत्यमित्रान्" नानाप्रकारं मारयतीत्यर्थः । "वेतेर्वा स्याद्गतिकर्मणः" गत्यर्थे वर्त्तमानस्य; गच्छत्येवासावभिमुखं शत्रून् । "वीरयतेर्वा" विक्रमार्थस्य; विक्रान्तो ह्यसौ भवति ॥

"सी मिति" अयं "परिग्रहार्थीयो वा पदपूरणो वा"। "प्र सीमादित्यो असृजत् (ऋ० सं० २,७,८,४)"। अस्या मेव तावदुभय मपि प्रदर्शयति। ततः परिग्रहार्थीयत्वे द्वितीय मुदाहरणं वक्ष्यति। गृत्समदस्य तत्पुत्रस्य वा कूर्मस्येय मार्षम्*, त्रिष्टुप्, सौरी। सूर्यः पुनरस्यां वरुणनाम्ना स्तूयते॥ प्रासृजत्सूर्यो रश्मीन्। सी मिति पदपूरण एव; कुतोऽपीत्यविवक्षित मेवैतत्पदपूरणपक्षे। अथ परिग्रहार्थीयं सर्व मेव परिगृह्णाति;—"प्रासृजत् सर्वत इति वा"। 'वि धर्त्ता' वि धारयिता; रसानां, रश्मीनां वा, स्वरश्मिजालान्तर्गतस्य वा, धर्त्ता सर्वस्य जगतः। 'ऋतम्' उदक मादाय, पृथिवीलोकादन्तरिक्षलोकाच्च। 'सिन्धवः' स्यन्दनाः सूर्यरश्मयः,— ते हि आदित्यमण्डलात् प्राञ्चो वर्त्तमानाः स्यन्दन्ते वर्षकाले; सूर्येण प्रसृष्टा उदक मादाय सार्वलौकिकं 'वरुणस्य' सूर्यस्य स्थानं मण्डलं 'यन्ति'। तदेव मप्यनिश मुत्सर्गादानलक्षणं स्व-कर्म कुर्वाणो 'न श्राम्यन्ति'। 'न' वा श्रान्ता अपि सन्तो विरागादप्येतत् कर्म 'वि मुञ्चन्ति' एते। कथं पुनः पतन्तो न श्राम्यन्ति? किं शनकैः? न। 'वयो न' वय इव पक्षिण इव शीघ्रं 'पप्तुः' पतन्तः 'रघुया' लघुया लघ्व्या शीघ्रिकया गत्यापि 'परिज्मन्' परिजमन्तः परिगच्छन्तः सर्व मप्येतज्जगन्न श्राम्यन्ति न विमुञ्चन्त्येतत्कर्म॥ एतद्गुणयुक्ताना मप्येतेषां सूर्य एव प्रतिसर्गे संयमे च ईश्वर इत्येवं सूर्यस्य स्तुतिरेषा॥

---

* "प्र सी॑मादि॒त्यो अ॑सृजद् वि ध॒र्त्ताँ ऋ॒तं सिन्ध॑वो॒ वरु॑णस्य यन्ति।
न श्रा॑म्यन्ति॒ न वि मु॑चन्त्ये॒ते वयो॒ न प॑प्तू रघु॒या परि॑ज्मन्॥"

"वि सीमतः सुरुचो वेन आवरिति च"। इदं द्वितीय मुदाहरणम्। ब्रह्मजज्ञान मिति* । वामदेवपुत्रो नकुलोऽनया त्रिष्टुभा आदित्यं तुष्टाव। प्रवर्ग्यविनियुक्ता रुक्मोपधाने चाग्निचयने। 'ब्रह्म' आदित्याख्यं 'जज्ञानं' जायमानं 'प्रथमम्' अनुत्पन्नेषु आदितः 'पुरस्तात्' प्राच्यां दिशि; तदुद्भवोपलक्षित मेव प्राच्याः प्राचीत्वम्। 'वि आवः' व्यवृणोत्, विवृतानकरोत्। 'सुरुचः' प्रशस्तरोचनान् रश्मीन् 'सीमतः' सर्वतः। किञ्च; 'सः' 'वेनः' मेधावी 'बुध्न्याः' बुध्न मन्तरिक्षं तदवयवभूताया दिशः 'उपमाः' उपनिर्मात्र्यः; तासु ह्येतत्प्रतिष्ठितं सर्व मुपनिर्मीयते जगदित्येतत्;— तस्मात्ता एवोपनिर्मात्र्य उच्यन्ते। 'विष्ठाः' विस्थाः;—तासु ह्येतज्जगद्विभिन्नं तिष्ठतीति ता एव विष्ठाः। 'सतश्च' अभिव्यक्तस्य स्थूलस्य 'असतश्च' अनभिव्यक्तस्य सूक्ष्मस्य 'योनिं' 'विवः' व्यवृणोदित्यर्थः। आदित्योदये ह्येतद्गुणयुक्ता दिशोऽभिव्यज्यन्त इत्यभिप्रायः। अथवा बुध्न्या आप आन्तरिक्षास्ता उपमा इत्येव मादि सर्वं योज्यम्॥

"अपि वा सीमेत्येतदनर्थक मुपबन्ध माददीत पञ्चमीकर्माणम्। सीम्नः सीमतः सीमातो मर्यादातः। सीमा मर्यादा विषीव्यति देशाविति"। विगतसन्तानौ देशौ करोतीति॥

"त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्" निपातत्वेनैतदपि

* "ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनि मसतश्च विवः॥"
य॰ वा॰ सं॰ १३, ३। सामवेदसंहितायां मपि छ॰ आ॰ ४, १ २, ९।

सन्दिह्यते। वक्ष्यति हि "निपात इत्येके"—इति*। अतः त्व इति ह्येवं निपातकाण्ड उदाह्रियते। संशयपरिशोधनाय त्व इत्येतद्विनिग्रहार्थीय मिति व्याख्यातम्। किन्तु तत् सर्व्वनामविप्रतिपन्नस्वरत्वात्स्वर मप्यवधारयन् अस्यानुदात्त मित्याह; कथं पुनर्विप्रतिपन्नस्वर मेतदिति? उच्यते;—प्रातिपदिकस्यान्तउदात्त इत्यौत्सर्गिकं लक्षणम् (फि॰ सू॰ १,१)—अन्यच्च चापवादात्,—लक्षणविदोऽपि चास्यापवादं पठन्ति,—"त्वत्वनेमसमसिमेत्यनुच्चानि (फि॰ सू॰ ४,८)"—इति।

"अर्द्धनामेत्येके"। अर्द्धस्यैतन्नामेत्येव मेके आचार्या मन्यन्ते। वक्ष्यति चाय मपि "त्वो नेम इत्यर्द्धस्य (निरु॰ ३,४,१)"—इति। तदेतत् प्रकरणोपपदाभ्या मध्यवसेयम्,—क्वार्द्धनाम? क्व सर्वनाम? इति ॥२॥

यथाच सर्वनाम तथैव मृगुदाह्रियते;—

ऋचां त्वः पोषं मास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः॥ इत्यृत्विक्कर्मणां विनियोग माचष्ट ऋचा मेकः पोष मास्ते पुपुष्वान् होतर्गर्चनी गायत्र मेको गायति शक्वरीषूद्गाता गायत्रं गायतेः स्तुतिकर्मणः शक्वर्य ऋचः शक्नोते स्तद्यदाभिर्वृत्र मशकद्धन्तुं तच्छक्वरीणां शक्वरीत्व मिति विज्ञायते ब्रह्मैको जातेजाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितु मर्हति ब्रह्मा

* उत्तरस्मिन्नेव खण्डे। ९० पृ॰ ५ पं॰, ९९ पृ॰ १० पं॰।

परिवृढः श्रुततो ब्रह्म परिवृढं सर्वतो यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं* युनक्त्यध्वरस्य नेताध्वरं कामयत इति वापि वाधीयाने युरुपबन्धोऽध्वर इति यज्ञनाम ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो निपात इत्येके तत्कथ मनुदात्तप्रकृति नाम स्याद्दृष्टव्ययन्तु भवति। उत† त्वं सख्ये स्थिरपीत माहुरिति द्वितीयाया मुतो त्वस्मै तन्वं विसस्र इति चतुर्थ्या मथापि प्रथमाबहुवचने—॥ ३‡ ॥

"ऋचान्त्वः (ऋ० सं० ८,१,२४,५)"—इति। बृहस्पतेरार्षम्। ऋत्विक्कर्मणां विनियोग मनयर्चाऽऽचष्टे। "ऋचां त्वः पोष मिति"। य एते चत्वारो महर्त्विजः, एतेषां 'त्वः' एक इत्यर्थः। कि मेकः करोति? 'ऋचां' 'पोषं' पुष्टिं 'पुपुष्वान्' पुनः पुनः भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानमर्मस्थानकरणानुप्रदानवतीर्यथाकाल मृचोऽधीयानः 'आस्ते';—स हि तासां पोषः। कतमः? 'एकः' एतत्कर्म कुर्व्वन्नास्ते इति;—होता; एतत्तावदृगध्ययनकर्म तस्मिन् होतरि विनियुक्तम्; उक्तं च—"यदृचैव होत्रं क्रियते"—इति (ऐ० ब्रा० ५,५,८)। 'गायत्रं' त्वः? गायत्र मेको 'गायति' 'शक्वरीषु' ऋक्षु। कतमः? उद्गाता; तस्मिन्नप्येतत्सामगानकर्म विनि-

* "एकोऽध्वर्युरध्वरयुरध्वर्युरध्वरं" क, च, ग।
† "भवत्युत" ख, ङ, च।
‡ ख-ङ-च-पुस्तकेष्वित्यष्टमः खण्डः समाप्तः।

युक्तम्; उक्तञ्च—"साम्नोद्गीथम्"—इति (ऐ० ब्रा० ५,५,८)। "ब्रह्मा त्वः" ब्रह्मा नाम एक ऋत्विक् 'जाते' प्रायश्चित्ते 'विद्यां वदति'। विद्याचयहेतुत्वादात्मनो विद्यां विज्ञानं वदतीतरेभ्य ऋत्विग्भ्यः; इद मत्र कुरुतेति। तत्रापि ह्येतत् कर्म विनियुक्तम्। स पुनरेष सर्वविद्यः सर्वविज्ञानस्तथाविधो ह्यसावधिकारी त्रयीविद्यासंयुक्तो येनासौ सर्व मेव वेदितु मर्हति। न ह्यसर्ववित् त मधिकारं शक्नु-यान्निर्वर्त्तयितुम्। उक्तञ्च—"अथ केन ब्रह्मत्वं क्रियत इति? त्रय्या विद्यया"—इति (ऐ० ब्रा० ५,५,८)। "यज्ञस्य मात्रां वि मिमीत उ त्वः"। एक इति। मीयत इति मानं कर्म, तन्मात्रेत्युच्यते। या का चिदितिकर्त्तव्यता* यज्ञस्य, तां विमिमीतेऽध्वर्युः; नानाप्रकारं करोतीत्यर्थः॥

अथैकपदं निरुक्तम्।—"गायत्रं गायतेः" स्तुत्यर्थस्य,—स्तूयते ह्यनेन। "शक्वर्य्य ऋचः शक्नोतेः"—इत्युक्त्वा शक्वरी-शब्दे वृत्तिं दर्शयति;—"तद्यदाभिर्वृत्र मशकद्धन्तुं" "तत्" एव "शक्वरीणां शक्वरीत्वम्"। तत् यदस्मादाभिरभिष्टुत इन्द्रो वृत्र मशकद्धन्तुं तच्छक्वरीत्वम् "—इति विज्ञायते"। ऋचां शक्वरीत्व मित्येवं ब्राह्मणेऽपि शक्नोतेरेव शक्वर्य्य इति विज्ञायते†। लिङ्गतोऽपि हि दर्शितं भवति, आख्यातजानि नामानीति॥

"ब्रह्मा परिवृढः श्रुततः" स हि त्रयीं विद्यां वेद। शब्दसाम्य-प्रसक्त मुच्यते;—"ब्रह्म परिवृढं सर्वतः"। ऋगादिपरं चोभय

---

* मीमांसायाः अर्थसङ्ग्राख्ये ग्रन्थे भावनाप्रकरणे द्रष्टव्या।

† "इन्द्रो वा एताभिः————————शक्वरीत्वम्"—इति ऐ० ब्रा० ५, १, १। अन्यत्र च द्रष्टव्यम्।

मपि तत्परिवृढं सर्वासु दिक्षु। "अध्वर्युः अध्वरयुः" एव मपि च्छगूह्यत इति। पुनरप्याह;—"अध्वरं युनक्त्यध्वरस्य नेता" प्रापयितेत्यर्थः,—स ह्यन्तं प्रापयत्यध्वर मेव। अथवा "अध्वरं कामयते" कर्तुम् "—इति" अध्वर्युः। एतस्मिन्निर्वचने युः, वसूयव इति यथा*। अथ वा "अधीयाने" त मध्वरं कस्मिंश्चिद् ब्राह्मणे अध्वर इतीय मेव सञ्ज्ञा भवति, मञ्चाक्रोशनवत्। एतस्मिंश्च निर्वचने "युः" अयम् "उपबन्धः" नामकरणम्। अध्वर मधीते यः सोऽध्वर्युः। विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्व माचष्टे;—"अध्वरः—इति यज्ञनाम"। ध्वरः-इत्यधुना निर्वक्तव्यः;—"ध्वरतिर्हिंसाकर्मा"। ध्वरति धूर्वतीति हिंसार्थेषु पठितौ (१भा०२८०,२८१धा०), "तत्प्रतिषेधः" अध्वरः अहिंस्र इत्यर्थः॥

आह;— नन्वत्र हन्यन्ते पशवः, छिद्यन्ते तृणवनस्पतय; तत् कथ महिंस्रः? उच्यते;—अभ्युदय एव हि सः। एवं हि श्रूयते—"न वा उ एतन्म्रियसे (य०वा०सं०२३,१६)"—इति। तथाच—"कुशल मिच्छन्ति तृणानि राजन्" —इति। तस्मादभ्युदययोगादहिंस्र इत्युपपद्यते॥

"निपातः" अयम् "इत्येके" मन्यन्ते॥

एव मेकीयपक्षे निपातत्व मस्योक्त्वा अधुना चोदकपक्षे स्थित्वा परपक्ष माक्षिपन्नाह;—"तत् कथ मनुदात्तप्रकृति नाम स्यात्"—

---

* "वसूयवः। वसु धन मात्मन इच्छन्तः। सुप आत्मनः क्यच्। अकृत्सार्वधातुकयोरिति दीर्घः। क्याच्छन्दसीत्युप्रत्ययः।"—इति सा० भा०; ऋ० सं० १, ४, ९, ४।

इति। तदेतच्छन्दस्यप मनुदात्तस्वभावं सत् कथं नाम स्यात्? ननु भवतैवोक्तम्—उत्सर्गेणैवाद्योदात्तानि प्रातिपदिकानि—इति (६६पृ० ५प०)। उच्यते;—सत्य मुक्तम्। ननु तत्रैवेदं प्रत्युक्तम्—अन्यत्र चापवादात्—इति (६६पृ० ६पं०)। स एषोऽपवादांशः—लक्षनेमसम सिमेत्यनुदात्तानीति (६६पृ० ७पं०)। उत्सर्गादपवादो बलीयान्। तस्मादप्रतिपन्नस्वर मपि एतन्नामैव। किं च; "दृष्टव्ययं तु भवति"। तु-शब्दो हेत्वर्थः,—हेतुसमुच्चयार्थो वा। अनुदात्तप्रकृतित्वेऽपि स तु 'दृष्टानुविधयश्छन्दसि'—इति दृष्टव्ययत्वान्नामेति तद्भवति। एवं हेत्वर्थः। अथ वैव मन्यथाहेतुसमुच्चयार्थः; अपवादस्मरणात्—व्ययदर्शनाच्च अनुदात्त मपि सदेतन्नामैव भवति। निपाता आद्युदात्ता भवन्ति (फि०सू०४,१२)। तस्मात् कृतापवादत्वाद्—दृष्टव्ययत्वाच्च नामैवैतदित्युपपन्नम्॥

आह;—क्व पुनरस्य व्ययो दृष्टः? उच्यते;—"उत त्वं सख्ये स्थिरपीत माहुरिति* द्वितीयायाम्" एकवचने। एवम् "उतो त्वस्मै तन्वं१ वि सस्र इति† चतुर्थ्याम्" एकवचने व्ययो दृष्टः। उपरिष्टाच्छेषः। "अथापि प्रथमा-बहुवचने"— व्ययो दृष्ट इत्यध्याहारः ॥३॥

**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः। आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे। अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेरनक्षि**

---

* ऋ० सं० ८, २, २३, ४।

† ऋ० सं० ८ २, २३ ५।

रित्याग्रायणस्तस्मादेते व्यक्ततरे इव भवत इति ह विज्ञायते कर्णः कृन्ततेर्निकृत्तद्वारो भवत्यृच्छतेरित्याग्रायण ऋच्छन्तीव खे उदगन्ता मिति ह विज्ञायते मनसां प्रजवेष्वसमा बभूवुरास्यदघ्ना अपर उपकक्षदघ्ना अपर आस्य मस्यतेरास्यन्दत एनदन्न मिति वा दघ्नं दघ्यतेः स्रवतिकर्मणो दस्यतेर्वा स्याद्विदस्ततरं भवति प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे* स्नानार्हा ह्रदो ह्रदतेः शब्दकर्मणो ह्लादतेर्वा स्याच्छीतीभावकर्मणोऽयापि समुच्चयार्थे भवति†—॥ ४ ॥

"अक्षण्वन्तः कर्णवन्तः (ऋ० मं० ८, २, ३४, २)"—इत्येतस्या मृचि‡। बृहस्पतेरार्षं विद्यासूक्तं नाम। 'अक्षण्वन्तः' अक्षिसंयुक्ताः; एव मपि समानेन्द्रियाः समानपृष्ठोदरपाणिपादाः सन्तः। अपि च; 'सखायः' समानख्यानाः सर्वे मनुष्याः। अथवा समानेषु शास्त्रेषु कृतश्रमाः। वैयाकरणा वैयाकरणाना मेव समानख्यानाः, नैरुक्ता एव नैरुक्तानाम्। 'मनोजवेषु' मनोगम्येष्वर्थेषु 'असमा बभूवुः'। केचिदूहापोहनधारणवक्तृत्वसमर्थाः, केचिदमेधसः। कथ मसामान्य मिति? यतो दृष्टान्तेन प्रतिपादयति।—"आदघ्नास उपकक्षास उ त्वे ह्रदा इव"। आदघ्ना एव आदघ्नासः। आस्यदघ्नह्रदपरिमाणाः,

---

* 'ददृशिरे' क, ख, ग। घ-पुस्तके तु 'ददृशिरे प्रस्नेयाः'—इति व्यत्ययपाठश्च।
† घ-ङ-च-पुस्तकेषु नास्ति खण्डसमाप्तिः।
‡ 'प्रथमावऊवचने बयो हष्टः'—इति (७० पृ० १२ पं०) पूर्वेणान्वयः।

केचित् प्रज्ञया। उपकक्षासः कक्षमनिकृष्टदेशतुल्योदका इवहृदाः।
एके प्रज्ञया हृदाः 'स्नात्वा' अक्षोभ्याः अपरिमेयप्रज्ञानाः। 'ददृश्रे'
ददृशिरे—दृश्यन्त इति समस्तार्थः॥

अथैकपदं निरुक्तम्।—"अचि,चष्टेः"पश्यत्यर्थस्य,—दृश्यते ह्यनेन।
"अनक्तेः" व्यक्त्यर्थस्य—"इत्याग्रायणः" मन्यते। वाह्य मपि चैतस्मिन्नि-
र्वचने भवति। "तस्मादेते व्यक्ततरे इव भवतः"—इति। यस्मादिदन्ना-
म्नेति कि मिति प्रकृत मपेक्ष्य। अथवा यस्मादेते तेजोऽवयवभूयिष्ठे,
तस्मात्कारणादित्येवं यच्छब्द मन्वाकृष्य विद्यमान मविद्यमानं चोत्पद्य
तस्माच्छब्दस्य सामर्थ्य मुत्पाद्यते। तथाहि स निराकाङ्क्षो भवति।
सर्वत्र च साकाङ्क्षेषु शब्देष्वेवं व्याख्यान-धर्मो द्रष्टव्यः। एते
अक्षिणी इतरेभ्योऽङ्गेभ्यो व्यक्ततरे स्पष्टतरे प्रकाशतरे भवतः,—
अन्धकारेऽपि ह्येते प्रकाशेतैव नक्तञ्चरादीनाम् न तथेतराण्यङ्गानि।
एवं ब्राह्मणेऽपि अनक्तेरेवाक्षिणी"—इति ह विज्ञायते"। "कर्णः
कृन्ततेर्निकृत्तद्वारो भवति, ऋच्छतेरित्याग्रायणः" मन्यते। ब्राह्मण
मपि चैतस्मिन्निर्वचने भवति;—"ऋच्छन्तीव खे उदगन्ता मिति
ह विज्ञायते"—इति। ऋच्छन्तीवैतौ कर्णौ खेऽभिव्यक्ताः सन्तः
शब्दाः एतावपि च उदगन्तां प्रत्युदृच्छत इव ग्रहणाय। विचार्य-
माणे ज्ञायते खे कर्णाविति। "आस्य मस्यतेः" क्षेपार्थस्य,—क्षिप्यते
ह्येतदाभिमुख्येनान्नम्। स्यन्दतेर्वा स्यादाङ्पूर्वस्यैव स्रवणार्थस्य,—
शुष्केऽपि ह्येतदन्ने आगते स्रवत्येव श्लेष्माणं, येन तदार्द्रीकृतं ग्रसितुं
शक्यते। "दघ्नं, दघ्यतेः" स्रवत्यर्थस्य। सुततर मिव तद्भवत्युत्तरा-
त्परिमाणात्। "दस्यतेर्वा स्यात्" क्षयार्थस्य। "विदस्ततरं" ह्युपचौ

णतरं, तद् "भवति" उत्तरस्मात्परिमाणात् । "प्रस्नेयाः" प्रकर्षेण स्नातुं येषु योग्यम्, अगाधत्वात्; ते प्रस्नेयाः स्नानार्हा इत्यर्थः । "ह्रदो ह्रादतेः" शब्दार्थस्य,— शब्दं ह्यसावभिहन्यमानः करोति । "ह्लादतेर्वा स्यात्" शीतीभावार्थस्य,—ग्रीष्मेऽपि ह्यसौ शीतल एव भवति ॥

"अथापि" अथ मपरो निपातः "समुच्चयार्थे भवति" एकतमः —त्वन् इति ॥४॥

किं मुदाहरणम् ?—

पर्याया इव त्वदाश्विन माश्विनञ्च पर्यायाश्चेत्यथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति*। नि-ष्टक्वासश्चिदिन्नरो भूरितोका वृकादिव । बिभ्यस्यन्तो ववाशिरे शिशिरञ्जीवनाय कम् । शिशिरञ्जीवनाय । शिशिरं शृणातेः शम्नातेर्वा† । एमेनं सृजता सुते । आसृजतैनं सुते‡ । तमिद्वर्द्धन्तु नो गिरः । तं वर्द्ध-यन्तु नो गिरः । स्तुतयो गिरो गृणातेः§ । अयमु ते समतसि । अयन्ते समतसीवोऽपि दृश्यते॥ ॥ ५ ॥

---

* घ-ङ-च-पुस्तकेष्विह नवमखण्डः समाप्तः ।

*, †, ‡, §, ॥ एषु स्थानेषु स्वरचिह्नानि न दृश्यन्ते घ-ङ-च-पुस्तकेषु ।

॥ क-ख-गेभ्योऽन्यत्र नेह खण्डसमाप्तिः ।

"पर्याया इव त्वदाश्विनम् (ऋ॰प्राति॰१२,१०)"—इति। आह; किं मुक्तं भवति? उच्यते;—"आश्विनं च पर्यायाश्चेति"—एवं समुच्चयार्थे भवति। "अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति"। व्याख्याताः क अपि संग्रहार्थीयाः*, तत्-प्रसङ्गेन चौत्येव माद्यो अन्यार्थां अप्युक्ताः†। प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान् वक्ष्यामः। तेषां सामान्य मेव तावल्लक्षण मुच्यते। तत्राधिकारार्थोऽय मथशब्दोऽथ ये प्रवृत्ते परिसमाप्ते अर्थे अन्यैरेव वाक्यगतैः पदैरमिताक्षरेषु गद्यग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणार्थास्तएव मिताक्षरेषु भवन्ति। उभयत्रापि तु ते अनर्थकाः अनर्थान्तरवाचकाः, प्राकृतादर्थात् न किञ्चिदर्थान्तरं द्योतयन्ति। पद मेव वाक्य मेव वा पूरयितव्य मित्यय मेव हि तेषा मर्थो नान्यदर्थान्तरम्। उक्तं च;—

"क्रियावाचक माख्यात मुपसर्गो विशेषकृत्।
सत्वाभिधायकं नाम, निपातः पादपूरणः॥"—इति।

कतमे पुनस्ते? "कमीमिद्विति" एते चत्वारः। कम्, ईम्, इत्, उ,—इति॥

आह;—ननु ये प्रवृत्तेऽर्थ इति पदे तदुपदिष्टं लक्षण मत एव विज्ञास्यामो येऽमिताक्षरेषु वाक्येषु पठितास्ते मिताक्षरेषु पदपूरणा भविष्यन्तीति॥

---

* "तेषा मेते चत्वारः"—इत्यादयः ४४ पृ॰ ३ पं॰।

† "चौत्येषोऽनेककर्मा"—इत्यादयः ५५ पृ॰ १ पं॰।

अथ किमर्थं मेते विशेषतः कर्मोपमिद्यो निर्दिश्यन्त इति? उच्यते;—एते हि प्रायेण पदपूरणा एव। अन्ये पुनः इव-न-चि-न्वादयो अर्थवन्तोऽप्यर्थासम्भवे सति पदपूरणा भवन्ति;—सकलं हि तानपि व्याप्नोति। एते पुनः प्रायेणानर्थका एवेति विशेषतो निर्दिश्यन्ते। अथ वा ते प्रायेणार्थवन्तः कदाचिदनर्थकाः इत्यतो विशेषतो निर्दिश्यन्ते॥

आह;—एव मपि स उकारो न निर्देष्टव्यः। किं कारणम्? स हि पुरस्तान्निर्दिष्ट एव (५५पृ० २पं०) "अथापि पदपूरण इद मु तदु"—इति। उच्यते;—सत्यं निर्दिष्टः। प्रासङ्गिकस्तु स तस्य निर्देशो-ऽय मेवाद्योकारस्य पदपूरणत्वे मुख्यो निर्देशः; स्वप्रकरणत्वात्। तत्र तर्हि अकिञ्चित्कर इति? न अकिञ्चित्करः। किं कारणम्? शृणु;—यदि ह्यय मुकारः तत्र पूरणत्वेन नोच्यते, इहैवोच्येत; ततः पूर्वोक्तस्य विनिग्रहार्थीयत्वस्याय मपवाद इति गम्येत। अथापि तत्रैव केवल मस्य पदपूरणत्व मुच्यत, नेह; तथापि पादपूरणेषु परिसङ्ख्यायमानेषु नाय मुक्त इति पदसङ्ख्या पदपूरणत्व मस्य बाध्येत। अनिष्टं चैतत्। तस्मादुभयत्राप्यधीत इति॥

आह;—नन्वेवं खलु-नून मित्येतयोः पदपूरणत्वस्य बाधः प्राप्त इति? उच्यते;— नैवम्। किं कारणम्? उकारवन्तौ ह्युभावपि। यथैव ह्युकारोऽर्थवांश्चानर्थकश्च; एवं तावपि। तस्मादुकारग्रहणेनापि तावप्यत्र गृहीतौ द्रष्टव्यौ। न केवल मुभावेव; किन्तर्हि? अन्येऽपि तावन्त एव सन्ति। तद्यथा;—"आ घा ता गच्छानुत्तरा"—इति*

---

* ऋ० सं० ७ ६, ७, ५।

अथ घकारः। तेऽपि चाचावदद्भा द्रष्टव्याः। उदाहरणमात्रप्रद-र्शनार्थं ह्येतावन्त एवोदाहृताः। त एते सर्व एवार्थासम्भवे सत्यन-र्थका एव, सम्भवे त्वर्थवन्त इति। किं कारणम्?—न हि कस्मिंश्चि-दर्थे तावत्सम्भवति अनर्थत्वकल्पना न्याय्या शब्दस्य;—अर्थप्रधानो हि शब्दः। स नाकस्मादभिधेयेनार्थेन विना वाक्ये संहन्येत। तस्माद्याव-द्भम्य मेव तावदर्थः कल्पनीयः। यत्पुनरेतदुक्तम्—'वाक्यपूरणाः' इति (७३पृ० १०पं०)। अगतिरेषा। तदेतत् सर्वथाप्यर्थासम्भवे सति अगतौ सत्यां भवति। त एते प्रायोवृत्त्या इव-न-चि-न्वादयोऽर्थ-वन्तः। प्रायोवृत्त्या च कमीमिद्वोऽनर्थका इति द्रष्टव्यम्॥

आह;— ननु आदौ च मध्ये च पूरणाना मागमो दृष्टः; तद्यथा— "नूनं सा ते"—इति; अथ कथ मुच्यते,—'ये प्रकृतेऽर्थे आगच्छन्ति, ते पदपूरणाः'—इति? उच्यते;— न ह्येतदध्ययनकालीन मानुपूर्व्य मक्षराणां पदानां व्याख्याकाले नियत मस्ति, अर्थप्रकाशनार्थनिर्व-चनवशेनान्यपदानुपूर्व्य मुपजायते समाख्याकाले। तत्रैवं सत्याख्या-तपदम् प्रधानम्, तदनु नाम, तदनूपसर्गाः, तदनु निपाताः;—इत्येता मानुपूर्वी मपेक्ष्यैतदुक्तम्। तत्र ये प्रकृतेऽर्थे आगच्छन्ति, ते पद-पूरणा भवन्ति। एता मानुपूर्वी मपेक्ष्य पूर्वं माख्यातलक्षण मुक्तम्, तदनु नामलक्षणम्। तस्मादादावपि निपातः, तन्मध्ये वा अतएव द्रष्टव्यः। लोकेऽपि हि दत्तानुयोगानां ब्राह्मणाना मवस्थानक्रमो-ऽकिञ्चित्कर एव भवति। मध्येऽन्ते वावस्थितो यः प्रधानः, सोऽग्र्य इत्युच्यते। तस्मात्सम्यगेवोक्तं 'ये प्रकृतेऽर्थे'—इति॥

व्यत्ययं चाधिकृत्य श्लोक मप्युदाहरन्ति;—

"आदिमध्यान्तलुप्तानि प्रच्छन्नापिहितानि च ।
ब्रह्मणः परिगुप्त्यर्थं वेदे व्यवहितानि च ॥"—इति

अधुना एव मेतानुदाहृतान् कमीमिद्नून् समासतः प्रत्येक मुदाहरणैर्दर्शयति ;—"शिशिरं जीवनाय कम्"—इत्यत्र क मित्येष पदपूरणः। शिशिरं जीवनाय, जीवनार्थं मित्यर्थः। तत्र हि प्रायेण प्रचुराणि शरद्धान्यानि भवन्ति। क मिति पदपूरण एव*। शाखान्तरेषु शेषो द्रष्टव्यः ॥

केचिदेवं कृतशेष मत्राधीयते† ;—

"निष्टृक्वासश्चिदिन्नरो भूरितोका वृकादिव ॥
बिभ्यस्यन्तो ववाशिरे शिशिरञ्जीवनाय कम्॥"—इति ।

निष्टृक्वा एव 'निष्टृक्वासः' निर्वसना इत्यर्थः। अपि च। 'भूरितोकाः' बहुपत्या इत्यर्थः। के पुनस्ते? दरिद्राः; के 'चिन्नरो' मनुष्या इत्यर्थः। किं तेषामिति? 'वृकादिव बिभ्यस्यन्तः' पुनः पुनर्भृशं वा बिभ्यतो वृकादिव हिमाद् 'ववाशिरे' पुनः पुनर्भृशं वा वश्यन्ते। कि मिति ववाशिरे? शिशिरम्। अस्माकं 'जीवनाय' जीवनार्थं मागच्छति ;—इत्येवं हेमन्ते ववाशिरे। अल्पतरशीतं हि शिशिरं, सुखं तत्र जीविष्याम इत्यभिप्रायः ॥

निगमप्रसक्तस्य शिशिरशब्दस्य निर्वचनम्,—"शिशिरं शृणातेः"

---

* "मुञ्चामि त्वा हविषा जीवनाय कम्"—इति ऋ० सं० ८, ८, १९, १। अत्र सायणः,—'किमर्थम्? "जीवनाय कम्" जीवनार्थम्; इह लोके चिरकालावस्थानार्थं मित्यर्थः। क मिति पूरकः।'—इति।

† एवेमात्रैतन्मन्त्रस्य पाठो न वृत्तिकाराभिमतः।

हिंसार्थस्य “श्नातेर्वा” हिंसार्थस्यैव; नार्थकृतो विशेषः। हिनस्ति तस्मिन् काले अप्रतिबध्यमानो अतिशयेन दावाग्निः शुष्काणोषधिवनस्पतीन्॥

ई मित्यस्योदाहरणम्—“एमेनं ० —— ० चक्रये”*। ऐन्द्रेषा, गायत्री। मधुच्छन्दस आर्षम्। पृष्ठ्याभिप्लवस्तोमवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे महाव्रते च हचाशीतिषु विनियुक्ता। ‘आ सृजतैनम्’ आभिमुख्येन सृजत। ‘ईम्’—इति पदपूरण एव। इन्त्रोक्थ-पात्रेण चमसैश्च सोमं हे अध्वर्यवः!। किं मासृजत? योऽय मिन्द्रस्य ‘सुते’ अभिषुते सोमे स्तोमः, उक्थपात्रचमसस्थः; एन मासृजत। ‘मन्दिं’ मन्दयितारम्। ‘मन्दिने’ इन्द्राय हर्षवते। ‘चक्रिं’ चकनवन्तं क्रमणवन्तं वा। अपि वा हविर्द्धानशकटचक्राभ्यां चक्रवन्त मपि। चक्रदिति कर्मनाम (१भा० १६८पृ०)। अतिविशिष्टवीर्यजनकैः संस्कारकर्मभिस्तद्वन्तं ‘विश्वानि’ सर्वाणि भूतानि वा। ‘चक्रये’ कृतवते इन्द्राय। सोमो प्रत्यक्षः, दातारश्च; परोक्षा त्विन्द्रस्य स्तुतिः। “अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति, परोक्षकृतानि स्तोतव्यानि” —इति वक्ष्यति†॥

“तमिद्वर्द्धन्तु नो गिरः”—इति। इदित्यस्योदाहरणम्। “त मिद्वर्द्धन्तु ० —— ० हृदं सनिः”‡। अमहीयोराङ्गिरसस्येय मार्षम्। गायत्री,

* “एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये॥”
ऋ० सं० १, १, १०, १।

† दैवोत्तरषट्के १, १, २।

‡ “त मिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव। य इन्द्रस्य हृदं सनिः॥”
ऋ० सं० ७, १, १०, ५।

सौमी। ग्रावस्तुतौ विनियुक्ता। 'तम्' वर्द्धयन्तु 'नः'। तं सोमम् । 'इत्'— इति पदपूरणः। वर्द्धयन्तूपजातवीर्यं कुर्वन्तु । देवतृप्तये। नः एताः अस्मद्-'गिरः'स्तुतयः । कथं पुनर्वर्द्धयन्तु ? 'वत्सं संशिश्वरीरिव'। वत्स मिव; एकशिशुका बह्वो गावः, ता यथा पर्यायेण वत्स मेकं मृत-वत्साः स्वैः स्वैः पयोभिर्वर्द्धनादिसमर्थं कुर्युः। एव मेवास्माभिः एतं सोम मुपजातवीर्यं देवतर्पणाय कुर्वन्तु वर्द्धयन्तु। कतमः? 'यः' 'इन्द्रस्य' 'हृदं सनिः' हृदयसम्भक्ता, त मेनं वर्द्धयन्त्वित्यभिप्रायः॥

आह;— कस्मात् पुनरत्र केचिदुदाहरणमन्त्रा अशेषाः पठ्यन्ते, निरुच्यन्ते; केषां चिदेकदेशाः? इति । उच्यते;— ये तावदशेषाः पठ्यन्ते, निरुच्यन्ते च; ते व्याख्याधर्मोपदेशनार्थम्। यदि पुनः सर्व एव पठ्येरन् निरुच्येरंश्च, अतिगुरुशास्त्रं सम्पद्येत। अथापि सर्वेषा मप्यु-दाहरणमन्त्राणा मेकदेशः पठ्येत निरुच्येत च, तथापि व्याख्याधर्मो न प्रदर्शितः स्यात्। तस्माद्व्याख्याधर्मोपदर्शनार्थं केचिदशेषाः पठ्यन्ते, निरुच्यन्ते च; केषाञ्चिदेकदेशाः; शास्त्रातिगौरवभयात् ।—इति प्रतिमन्त्र मपि सकलार्द्धर्चपादाध्ययने शक्यते प्रयोजन मन्वेष्टुम्, तदेतत्समासेन ब्रूमः। यस्मिन् यस्मिन्मन्त्रे यद्यत्पद मेकार्थं मनेकार्थं मनवगतसंस्कारं वा निर्ब्रवीति, किञ्चिदान्यच्छब्दरूप मध्याहरति, अन्यद्वापोहति, अन्यथा वा कञ्चिद्विपरिणामं करोति, सन्दिग्धं वा निर्णयति; तदर्थ मेव तं सकल मधीते। यस्मिन्वार्द्धर्चे पादे तावत्पदं भवति, यदभिमतं निर्वक्तुं तावन्मात्र मेवाधीते । तन्निर्विवक्षया तदेतदेवं निपुण मन्वेष्टव्यं सर्वत्र ॥

उकारस्योदाहरणम्—"अयमु ०——० ओहसे"*। शुनःशेपो यूपे नियुक्त आत्मानं मोचयितु मिच्छन्नेतया गायत्र्येन्द्रं तुष्टाव†। 'अयम्' इति वर्त्तमानः सन् कर्मणि निर्विलम्बात् । 'ते' तव युष्मदर्थे सोमः यं प्रति नित्यकाल मेव 'समतसि' सम्पतसि। त्वं तासु क्रियास्वाह्वयमानः समतसि सम्पतसि । कथं पुनर्यं प्रति समतसि? 'कपोत इव' कम्पतनः कपोतः, कुत्सितपतनः; स यथा 'गर्भधिं' गर्भधात्रीं कपोतिकाम्, अण्डाश्रयं वा नीडं प्रति पुनः पुनः पतति; एवं यं प्रति नित्यकाल मेव सम्पतसि त्वम्, स एवाय मभिषुतः सोमः, एभिर्ऋत्विग्भिः। अथ कि मस्माभिः करिष्यसि? मोचय अस्मान्। किं वा 'वचः' एवेदं नः स्तुतिलक्षणं 'नोहसे' न वितर्कयसि रोरूयमाणानाम्? केनाप्यभिप्रायेण वय मेतद् ब्रूमः,—कैर्वा युष्मद्गुणैर्न युक्त मेतदिति; यतो न मोचयस्यस्मानतो यूपात्। अस्त्वेतदवबुध्यार्थ मार्त्तता मस्माक मवधार्य कारुण्यान्मोचयास्मान्। किं तेऽस्माभिरय मेव तेऽस्मत्तः प्रति विशिष्टतरः सोमोऽभिषुत इत्यभिप्रायः॥

"इवोऽपि दृश्यते"। कदाचिदनर्थकः—इति वाक्यशेषः॥५॥

कि मुदाहरणम्?—

---

* "अयमु ते समतसि कपोत इव गर्भधिम्। वचस्तच्चिन्न ओहसे॥"
ऋ० सं० १, २, २८, ४।

† तथा चैतरेयब्राह्मणस्य सप्तमपञ्चिकायां तृतीयेऽध्याये चतुर्थे खण्डे;—"इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तमु कृपाय स्तोत्वध्याम इति। स इन्द्रं तुष्टाव,—'यच्चिद्धि सत्य सोमपा (ऋ० सं० १, २ २०,१)'—इति चैतेन सूक्तेनोत्तरस्य पञ्चदशभिः' सूक्तैरिति शेषः। सहायसूक्ते रचायं मन्त्रश्चतुर्थः।

सु विदुरिव सु विज्ञायेते इवाथापि नेत्येष इदित्येतेन सं प्रयुज्यते परिभये*। हविर्भि रेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्। शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकम्पतामेति। नरकं न्यरकं नीचैर्गमनं नास्मिन्नमणं स्थान मल्प मप्यस्तीति वाथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे न चेत्सुरां पिबन्तीति सुरा सुनोतेरेव मुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः (११†) ॥ ६ ॥

इति प्रथमाध्यायस्य तृतीयः पादः ॥ १, ३.

"सु विदुरिव, सु विज्ञायेते इव"—इत्येते उदाहरणे। सुष्ठु विदुर्यज्ञं ब्राह्मण इति; इवोऽनर्थक एव वाक्यपूरणः। सुष्ठु विज्ञायेते यज्ञो नक्षत्रं ब्राह्मणैरिति; अत्रापीवोऽनर्थक एव ॥

व्याख्याताः पदपूरणाः, निपातसमाहार मधुना दर्शयति; तदधिकारार्थोऽयम् "अथ" शब्दः। "अपि" इति सम्भावने। अथाय मेव इदिति केवलः प्रयुज्यमानः पदपूरणो भवति। अपिचाय मेव "न—इत्येतेन" "सं" युक्तः, "प्रयुज्यते परिभये" अर्थे। सर्वतो भयं परिभयम्। कथं प्रयोगः? "नेज्जिह्मायन्त्यो नरकं पतामेति"। सुगमः शेषः ॥

के चित्त्वेतं क्षतशेष मत्राधीयन्ते;—

---

* घ-ङ-च-पुस्तकेषु इहैव दशमखण्डसमाप्तिः।

† घ-ङ-च-पस्तकेष इहैकादशखण्डः समाप्तः।

"हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान्।
शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम"–इति॥

नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तॄन् प्रति त मनेन मन्त्रेण प्रत्यूचुः। 'एके' तावत् 'इतः' लोकात् 'हविर्भिः' पुरोडाशादिभिर्निमित्तभूतैः 'स्वः' 'सचन्ते' स्वर्गं लोकं प्राप्नुवन्ति स्म। अथ 'एके' 'सवनेषु' यज्ञेषु सोमान् सुन्वन्तः अभिषुण्वन्तः; तेन कर्मणेत्यर्थः। 'शचीर्मदन्तः' अन्ये शच्या वाचा स्तुतिभिरेके देवान् मादयन्तः सन्तर्पयन्त इत्यर्थः। अप्यन्ये 'दक्षिणाभिः' स्वः सचन्त इत्येतदेवानुवर्त्तते*। तत्रैवं सति, तेन तेनाभ्युद्यतेषु प्राणिषु श्रेयः प्रति यदि वय मेतानपि भर्तॄन् सम्यक् परिचरेम। अन्येषां जपहोमादीनां कर्मणा मसम्भवे सति। "न इत्" वय मेतेषा मप्युप "जिह्मायन्त्यो" जिह्म माचरन्त्यो भगवन् "नरकं पताम",—न ह्यन्यो भर्तृपरिचर्यातः स्त्रियाः कश्चन धर्मोऽस्तीत्यभिप्रायः॥

नरकशब्दं निर्ब्रवीति;—नीचैरस्मिन्नर्यते गम्यत इति नरक मथवा नास्त्यस्मिन् रमणं रतिकरं स्थान मल्प मप्यस्तीति नरकम्। अथाप्यय मपरो निपातसमाहारो नचेत्येष इदित्येतेनैव सम्प्रयुक्तः प्रयुज्यते। केन चिदनुपृष्टे सति प्रतिवचनं भवति। तद्यथा;—कश्चित् कञ्चित् पृच्छति,—'तिष्ठन्ति वृषलाः?' इति। ततः प्रत्याचष्टे,—'तिष्ठन्ति' इति। ततो 'यदि तिष्ठन्ति, किमर्थं नागच्छन्ति?' इति पुनरनुपृष्टे ब्रवीति,—'न चेत्सुरां पिबन्त्यागमिष्यन्ति' इति; यदि सुरां न पिबन्तीत्यर्थः॥

* 'इत्येतदनवर्तते'—इति रोथ-ज्ञूस मु॰ पाठः।

अथ "सुरा" कस्मात्? "सुनोतेः",—सा ह्यभिषूयते अनेकैर्द्रव्यैः पिष्टादिभिः ।

"एव मुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्याः" । एव मनेन प्रकारेण उच्चावचेष्वर्थेषु बहुकारेषु समाहृताश्चान्ये प्येवं बहुप्रकारा निपतन्ति । प्रयुज्यमानास्ते लक्षणशास्त्र मेतच्चार्थनिर्वचनशास्त्र मुपेत्योपगम्य अनुप्रवेश्य, ईक्षितव्याः,—कः कस्मिन्नर्थे वर्त्तते? इत्येवं द्रष्टव्याः परीक्ष्या इत्यर्थः* ॥ ६ ॥

॥ इति निरुक्तवृत्तौ षष्ठाध्यायस्य तृतीयः पादः ॥ ६, ३ ॥

---

॥ चतुर्थः पादः ॥

इतीमानि चत्वारि पदजातान्यनुक्रान्तानि नामाख्याते चोपसर्गनिपाताश्च तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति गार्ग्यो वैयाकरणानां चैके तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि† तानि यथा गौरश्वः पुरुषो हस्तीत्यथ चेत्सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्त्वं तथाऽऽचक्षीरन् यः कश्चाध्वान मश्नुवीताश्वः स वचनीयः स्याद्यत् किञ्चित्‡

---

* वृत्तिग्रन्थेषु अस्मिन्नेव पादे ऽग्रिमखण्डादिभागो निपातायेत्यन्तः; परं सः सर्वमूलग्रन्थविरुद्धः । † "संविज्ञानानि" पाठोऽपि वृत्तिकारसम्मतः । ‡ "किञ्च" घ ।

तृन्द्यात् तृणं तदथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः* स्यात् तत्रैवं स्थूणा दरशया† वा सञ्जनी‡ च स्यात् (१२§) ॥ १ ॥

"इति"-करणोऽधिकारपरिसमाप्त्यर्थः। "इमानि चत्वारि पदजातान्यनुक्रान्तानि, नामाख्याते चोपसर्गनिपाताश्च" इति। प्रतिज्ञाभ्यासो निगम इत्यर्थः। इतीमानि चत्वारि पदजातानीति व्याख्याय अनुक्रान्तानि;—पूर्व माख्यातम्, ततो नामानि, तत उपसर्गाः, ततो निपाता इत्येव मानुपूर्व्येण क्रान्तानि वर्णितानि। व्याख्ययेति वाक्यशेषः। कतमानि पुनस्तानि? नामाख्याते चोपसर्गनिपाताश्च—इति। तदपि व्याख्यात मेव ॥ यच्च तदुक्तं,—'नाम्नः किञ्चिदवशिष्यते, तच्चतुर्थेन पादेन वर्णयिष्यामः'—इति (१९पृ० २प०), तदिद मेवावसरप्राप्तं पदचतुष्टयलक्षणानन्तर मारभ्यते;—"तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च"। तत्र तस्मिन्नेव पादचतुष्टये यानि नामानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं शाकटायन आचार्यो ब्रवीतीति वाक्यशेषः। नैरुक्तानां चैष समयः सिद्धान्तः सर्वेषा मविशेषेण गार्ग्यवर्ज्यम् ॥

आह— कः पुनरन्यथा ब्रवीति, येनैव मुच्यते,—शाकटायनो

---

* "प्रतिलम्भ"—इति निर्विसर्गपाठ एव सर्वत्र हस्तलिखित-मूलेषु।

† "दर्भया" क, ख, घ, ङ। ‡ "सज्जनी" ख।

§ घ-ङ-च-पुस्तकेष्विह द्वादशखण्डसमाप्तिः।

ब्रवीतीति? उच्यते;—"न सर्वाणीति गार्ग्यः" ब्रवीति। किं गार्ग्य-एव ब्रवीति? नेत्युच्यते;—"वैयाकरणानां चैके" व्याकरण मधीयन्ते ये, ते वैयाकरणाः, तेषां चैके न सर्वाण्याख्यातजानि नामानीत्येवं ब्रुवत इति वाक्यशेषः॥

"तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि"—इति। तदेतत् प्रपञ्च्यते गार्ग्यपक्षेण। यान्या-ख्यातजानि नामानि, यानि यावन्ति, एवं पर्युपयुक्तस्तच्छब्दः। इह त्रिधा व्यवस्था नाम्नाम्। तद्यथा,—प्रत्यक्षक्रियाणि, प्रकल्पक्रियाणि, अविद्यमानक्रियाणि। तत्र, प्रत्यक्षक्रियाणि;—कारको हारक इति। प्रकल्पक्रियाणि, तद्यथा;—गौरश्व इति। अविद्यमानक्रियाणि, तद्यथा;—डित्थो डवित्थः, अरविन्दोऽर्वाङ् चन्द्र इति। तत्रैवं सति यत्र येष्वित्यर्थः। केषु नामसु स्वरसंस्कारौ; स्वरश्चोदात्तादिः, संस्कारश्च प्रकृतिप्रत्ययादिः, तौ स्वरसंस्कारौ। समर्थौ, समर्थता नामोपपत्ति रुच्यते; सङ्गतार्थौ; लक्षणशास्त्रविहितयोपपत्त्या युक्तावित्यर्थः। यथैव लक्षणाविप्रतिपत्त्या स्वरोऽवस्थितः, एवं संस्कारोऽपि। येष्वपि च प्रादेशिकेन, प्रदिश्यते द्रव्य मनयेति प्रदेशः क्रिया, या तस्मिन् द्रव्ये अवस्थिता यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभिप्रेतः, तस्याः प्रदेशाख्यायाः क्रियायाः अभिधायको धातुः स गुण इत्यु-च्यते। अन्यत्र हि गुणशब्दो प्रधाने वर्त्तते। शेषः, अङ्गं, गुणः इति समानार्थाः। प्रधानन्तु तत्र क्रियाप्रदेशाख्या, तदभिधायको धातुः गुणाख्यः, स प्रदेशवाचकत्वात् प्रादेशिको गुण इत्युच्यते। तेन धातुरूपेणान्वितावनुगतौ स्वरसंस्कारौ स्यातां भवेताम्।

येषा माह, किन्तेषा मिति? उच्यते;—संविज्ञातानि तानि। सम्मं विज्ञातानि ऐकमत्येन विज्ञातानीत्यर्थः। तेषु तावदविप्रतिपत्ति-रेवास्माक माख्यातजानि नामानीति। तद्यथा;—कर्त्ता, कारकः; पक्ता, पाचक इति। न पुनर्यथा गौरश्वः पुरुषो हस्तीति। किङ्का-रणम्? एतेषु प्रकल्पन्ते क्रियाः; न साक्षादुपलभ्यन्ते। अपि चैतेषु कल्पयितु मपि तावच्छक्यन्ते। तदिच्छादिषु पुनः कल्पयितु मपि शक्यन्ते। तस्मान्न सर्वाण्याख्यातजानि नामानीति। तत्र यदुक्तं 'सर्वा-ण्याख्यातजानि नामानि' इति तदयुक्तम्। रूढिशब्दे च क्रियाः केवलं शब्दव्युत्पत्तिकर्म्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते, न वस्तु-तोऽर्थक्रियास्वनुसहायभावं प्रति। तत्र शब्दस्य प्रच्युतानुपलक्षिते-ऽनुप्रवृत्तेऽभिधाने निर्वृत्तायां क्रियाया मुपरतसाधनव्यापारं निरूप्य क्रियाया मभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते॥

अपरो व्याख्यामार्गः। "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्"। यत्र यस्मिन्नाम्नि स्वरसंस्कारौ, समर्थौ अष्टाध्यायीलक्षणोपपत्त्या युक्तौ, प्रादेशाभिधायिना च धात्वाख्येन प्रादेशिकेन गुणेनान्वितौ अनुगतौ, स्यातां न्यायवत्कार्मनामिक-संयुक्तेन संस्कारेण। तद्यथा;—कर्त्ता, कारकः; पक्ता, पाचक इत्येव मादि। तदाख्यातजं गुणकृत मिति प्रतीम इति वाक्यशेषः। येषु पुनरष्टाध्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावनुगतौ, न च न्याय्य-कार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरूपेण। किं तेषामिति? उच्यते;—"संविज्ञानानि तानि"। संविज्ञानपद मितीह शास्त्रे रूढि-शब्दस्येयं सञ्ज्ञा। वक्ष्यति हि, अग्निरिन्द्र इत्येव मादीनां संविज्ञान-

पदत्वम्;—"यत्तु संविज्ञानभूतं स्यात्" इति*। तथा वृत्रहा पुरन्दर इत्येव मादीनां गुणपदत्वम्†। स एव मिहापि त्रिभागो द्रष्टव्यः। तत्र गुणपदानि,—कारक-पाचकादीनि। संविज्ञानपदानि तानि "यथा;—गौरश्वः पुरुषो हस्ती" इत्येव मादीनि,—न ह्येषां गवादीनां अष्टाध्याय्यां व्युत्पत्तिलक्षण मस्ति, तस्माद्रूढ़िशब्दा एवैत इति॥

अन्ये तु प्रदेशो व्याकरण मिति व्याचक्षते। तत्र हि शब्दानां लक्षणानि प्रदिश्यन्ते। तत्कुतः? कश्चिल्लक्षणानुग्रहः लक्षणावयवो वा गुण इत्युच्यते,—प्रसिद्धो हि गुणशब्दोऽनुग्रहेऽवयवे च। तद्यथा;—'गुणे ममायं वर्त्तते' इत्युक्तेऽनुग्रहे वर्त्तते इति गम्यते; अवयवेऽपि,—'द्विगुणा रज्जुः', 'त्रिगुणा' इति चोक्ते द्व्यवयवा त्र्यवयवेति गम्यते। शेषं समान मेव पूर्वाभ्या मर्थाभ्याम्॥

अथवा संविज्ञानानि तानि, संविज्ञातानि तानि चेत्युभावपि पाठौ। तस्मादुभयथाऽपि व्याख्यातम्;—सत्त्वं प्रदेश इति। केचिदङ्गभूता क्रिया गुण इति व्याचक्षते॥

किं चान्यत्? "अथ चेत् सर्वाण्याख्यातजानि नामानि स्युः"। तथाप्यय मपरो दोषः प्रसज्येत। आह, कतम इति? "यः कश्च तत् कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्, यः कश्चाध्वान मश्नुवीत, अश्वः स वचनीयः स्यात्, यत् किञ्चित् तृन्द्यात् तृणं तत्"—इति। यः कश्चाविशेषेण प्राणी तत् कर्म कुर्यात्; यत् किञ्चिद्-

* अत्रैवाग्रे दैवतकाण्डे १, १, ९।

† "अथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा पुरन्दर इति।" नि० दै० १,१,९।

मेकप्राणाश्रय मेकवदभिप्रेत्योच्यते,—तत्कर्म कुर्यादिति। सर्व मेव तं प्राणिनं तेनैवैकेन नाम्ना आचक्षीरन्। तद्यथा। यः कश्चाध्वान मविशेषेणानश्वोऽप्यश्नुवीत, अश्व इत्येवं स वचनीयः स्यात्। कस्मादाश्वः अश्नुवन्नश्व इत्युच्यते, अन्योऽश्नुवन्नपि नोच्यते? इति विशेषहेतुर्नास्तीति। तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते; किन्तर्हि? शब्दव्यवहार एवाय मर्थप्रत्यायनार्थः ईदृशः क्रियानिरपेक्षः। एव मेव, यत् किञ्चित् हन्यादविशेषेण तत्सर्वं तर्द्दनक्रियायोगात् तृण मित्येव मुच्यते। तस्मान्न सर्वाण्याख्यातजानि नामानीति॥

किञ्चान्यत्? "अथापि चेत्" अथापि यदि। "सर्वाण्याख्यातजानि नामानि स्युः"। तथाप्यय मपरो दोषः स्यात्। आह, कतमः? उच्यते;—"यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेय-प्रतिलम्भः स्यात् तत्रैवम्"। तद्यथा;—"स्थूणा दरशया वा सञ्जनी च स्यात्"। क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुज्येत, तावद्भ्यो भावेभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यात्। किं कारणम्? न हि तत्र काचाश्चिद्व्यावर्त्तको विशेषहेतुरस्ति, अन्यासां वा नियामकः। तत्रैवं सति स्थूणा एकैव सती दरे शेते इति दरशया इत्युच्येत, न चोच्यते। तथा च सज्यतेऽस्यां वंश इति सञ्जनीत्युच्येत, न चोच्येत। एव मनेकानि सत्त्वानि एकक्रियायोगादेकनामानि स्युः; एकं वानेकक्रियायोगादनेकनाम; उभयथापि च व्यवहाराप्रसिद्धिः। तस्मान्न सर्वाण्याख्यातजानि नामानि स्युः॥ १॥

अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्या*चक्षीरन् पुरुषं पुरिशय इत्याचक्षीरन्नष्टेत्यश्वन्तर्दन मिति तृण मथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात् पृथिवीत्याहुः क एना मप्रथयिष्यत् किमाधारश्चेत्यथानन्वितेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्द्धान्त्सञ्चस्कार शाकटायन एतेः कारितञ्च यकारादिञ्चान्तकरण मस्तेः शुद्धञ्च सकारादिञ्चाथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते (१३†) ॥ २ ॥

आह;—किमिति? उच्यते;—"य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्" । एषां पुरुषाश्वादिनाम्नां न्यायवान् लक्षणन्यायेन युक्तः।

आह;—कः पुनरसाविति? उच्यते;—कार्मनामिकः संस्कारः। कर्मकृतं नाम तत्पुनः पाचक-लावकादि, तस्मिन् भवः कार्मनामिकः संस्कारः। किञ्च। यथाचापि प्रतीतार्थानि स्युः, प्रतीतक्रियाणि स्युः तथैव नान्याचक्षीरन् जनाः॥

आह;—कथं पुनराख्यायमानान्येतानि न्यायवता कार्मनामिकानि संस्कारेणोपेतानि स्युः, कथं वा प्रतीतक्रियाणीति? उच्यते;—

* "तथैतान्या" ख, ङ।

† घ-ङ-च-पुस्तकेष्विह त्रयोदशखण्डः समाप्तः।

"पुरुषं" तावत् पुरि शय इत्याचक्षीरन्"। पुरि ह्यसौ शेते पुरिशय इति प्राप्नोति। एव मसौ न्यायवता कार्मनामिकसंस्कारयुक्तेन शब्देनोक्तः स्यात्। एवं चैष प्रतीतक्रियः शब्दो भवति। एव मेव "अष्टा इत्यश्वम्" आचक्षीरन्,—अश्नोति हि असौ इति अष्टा प्राप्नोति। एव मेव छन्द्यते तमिति "तर्द्दन मिति तृणम्" आचक्षीरन्। न चैव माचक्षते। न चासति कारणे विद्यमाना क्रिया परोक्षीकर्तुं न्याय्या, तस्मात् न सर्वाणि आख्यातजानि नामानीति॥

"अथापि" इद मपर मप्राप्तं कुर्वन्ति; ते शाकटायनादयः। किम्? "निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति, प्रथनात् पृथिवी त्याहुः, क एना मप्रथयिष्यत्"—इति। निष्पन्ने, कस्मिन्? अभि-व्याहरण मभिव्याहारः, तस्मिन्नभिव्याहारे; ततः पश्चादाभिमुख्येन स्थित्वा तस्याभिधानस्य, ततो विचारयन्ति।

कतमस्य धातोरस्य रूप मिति? आह;—प्रथनात्पृथिवीत्याहुः ते शाकटायनादयः।

आह;— ततः कि मिति? उच्यते;—तत्र वयं पृच्छामस्तावत्, यदीयं स्वभावत एव पृथिवी नाम अभविष्यत्, ततः क एना मपृथिवीं सती मप्रथयिष्यत्? कोऽस्याः प्रथन मकरिष्यदित्यभिप्रायः॥

अथापि कश्चिदस्याः अपृथिव्याः सत्याः प्रथनकर्त्ताभ्युपगम्येत, ततोऽपि च वय मिद मपरं पृच्छामः;—"किमाधारश्च इति"। च शब्दः समुच्चयार्थः,—सर्वस्य हि प्राणिजातस्येय मेवाधारः प्रतिष्ठा; अथ पुनर्यदेय ममथितासीत्, तदा योऽस्याः प्रथयिता स किमा-धार आसीत्?–न ह्यनाधारेणाप्रतिष्ठितेन शक्येयं प्रथयितुम्, स

चाधारो नास्तीति प्रथनक्रियाभावः ; प्रथनक्रियाभावे च सति क्रियाजान्येवमादीनि नामानीत्येतदयुक्तम् । तस्मान्न सर्वाण्याख्यातजानि नामानीति ॥

"अथ" अपि इद मपर मप्राप्तं शाकटायनः कृतवान् ।

आह ;—किं मिति? उच्यते ;—"अनन्विते ऽर्थे" इत्येव मादिर्दोषः।

आह ;— वेदाङ्गाना मेकैक मनेकप्रभेदम् । तद्यथा ;— निरुक्तं चतुर्दशप्रभेदम्। व्याकरण मष्टप्रभेदम्। तत्र, केषां चिन्नैरुक्तानां कैश्चिद्वैयाकरणैः सार्कं केषु चिच्छब्देष्वेकमत्यं केषां चिद्वैमत्यम्। तत्र, शाकटायनो नैरुक्ताश्च गार्ग्यवर्जं कानि चिदभिधानान्यनेकैर्धातुभिरनुविदधति ; कानि चिदेकेनैव। किं कारणम्? प्रति नियतो हि स्वेषु स्वेषु व्याकरणेषु शब्दानुविधानसमयः। तद्यथा ;—पाणिनीया भू इति प्रकृति मुपादाय लडित्येतं प्रत्यय मुपाददते । ततः कृत्वा सानुबन्धलोपस्य लस्य स्थाने तिबादीनादिशन्ति* ; तथा हि ते तं शब्द मनुविधातुं शक्नुवन्ति । स हि तेषां शब्दानुविधानोपायः पाणिनिना परिक्लृप्तः। सैषा शब्दानुविधाने तन्त्रशीलीत्येतदेवैकं प्रयोजन मुक्त्वा नान्यत् प्रयोजन मस्ति लडादीना मध्ययने लोपे च। अपरे पुनर्वैयाकरणा लट मकृत्वैव तिबादीनेवोपाददते । तेषा मपि हि शब्दानुविधाने सा तन्त्रशीली। एवं प्रतिनियतया स्वया स्वया तन्त्रशील्या भवतीत्येवमादि समान मेव शब्दरूपं साधयन्ति। तत्रैवं शब्दानुविधानोपायविप्रतिपत्तौ सत्यां शाकटायन आचार्योऽनेकैश्च

* पा० सू० १, ४, ७७-७८।

धातुभिरेक मभिधान मनुविहितवान्; एकेन चैक मेव। तच्च यदनेकैरनुविहितवान्, तदितरैर्गार्ग्यपाणिन्यादिभिर्न मृष्यते। किं कारणम्? अप्रसिद्धो हि स तेषां शब्दानुविधानमार्गः। धातुसमुदायमात्र मेव नामेति। अतस्ते शाकटायन माचिचिप्सन्तः आहुः;—"अथानन्वितेऽर्थे" इति। अनन्वितेऽर्थे अननुगते शब्देनार्थे; यत्र संस्कार्यमाणोऽपि शब्दोऽर्थ मनुगन्तुं न शक्नोति। एवं धातुज(?) असमर्थो* भवति।

"अप्रादेशिके विकारे" च। यया हि क्रियया तद्द्रव्यं प्रदिश्यते, तदभिधायको यो धातुः, स तदभिधानं विगृह्यमाणं विकर्तुं न शक्नोति यत्र।

तत्र हीयमानप्रतिभः शाकटायनः सर्वाण्याख्यातजानि नामान्युपपादयिष्यन्नसम्भवे सति काशकुशावलम्बनमिव कुर्व्वन् किमकरोदिति? "पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः"। पदेभ्यः आख्यातपदेभ्यः समस्तेभ्योऽवयवानुपादाय पदेतरार्द्धान् अन्यान् अन्यांश्च इतरेतराख्यान् पदावयवैरन्यैरन्यैश्चान्यदर्द्धं नाम्नः संस्कृतवान्॥

तद्यथा;—'सत्यम्'—इत्येतदभिधानं सञ्चस्कार। कथम्? "एतेः कारितं च यकारादिं चान्तकरण मस्तेः शुद्धं च सकारादिं च"। एतेः 'इण् गतौ (अ॰प॰)'—इत्यस्य कारितं एडन्तं रूपं कृत्वा ततो यकार मन्त मादाय यकारान्तं कृत्वा सत्यशब्दस्यान्त मर्द्धं सञ्चस्कार; ततो 'यम्'—इति भवति। अस्तेः शुद्धस्य। 'अस् भुवि (अ॰प॰)'—इत्येतस्य शुद्ध मेव रूपं कृत्वा तकारान्त मित्यर्थः।

---

* "एवं धातु चसमर्थो" ख, ग।

ततः सकारादिशब्दरूपं गृहीत्वा 'सत्'—इत्येतत्, 'सत्यम्'—इत्येतस्य शब्दस्य आदिं मकरोदाप्य मर्थं सञ्चस्कार; तत्सदिति भवति। अत्र योऽय मस्तेस्तकारः, स यकार मधिरोहति। एव मेतदेक मभिधानं द्वयोर्धात्वोः सञ्चस्कार सत्य मिति भवति॥

अथ कोऽर्थः? सन्त मर्थ मापयति प्रत्यापयति गमयन्तीति सत्यम्। कारितं च यकारादिञ्च शब्दस्य सकारादिं चेति इतरस्य चेतरं चार्द्ध मिति समुच्चयार्थाश्चकाराः। एवं पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः; तदेतदन्याय्यं कृतवान्,—को हि नाम पदं विभज्यानेकधातुजं कुर्यात्। तदेतदकृतपूर्वं मन्यैर्विद्वद्भिः शाकटायनोऽतिपाण्डित्याभिमानादकरोत्,—यदभिनत् पदानि॥

अपि चोपजायते नः शङ्का;—यथासौ प्रवृत्तो नासौ पदेषु स्थास्यति, अपि चासौ वर्णानपि भेत्स्यति, अनेकार्थांश्च कल्पयिष्यति। यो हि पदान्यभिनत्, तस्य वर्णभेदे विशेषहेतुः को भविष्यति? तस्मादतिप्रसङ्गदोषोपपत्त्या नानेकधातुजानि नामानि, नापि सर्वाण्याख्यातजानि नामानीति॥

"अथापि" अथ मपरो दोषः प्रसज्येत। कतमः? "सत्त्वपूर्वो भाव इत्याहुः" अभियुक्तास्तद्विदः। सत्त्वं पूर्व मस्मात्सोऽयं सत्त्वपूर्वः। किं कारणम्? सत्त्वाश्रय एव ह्यसौ। तत्रैवं सति, "अपरस्माद्भावात्" अपरकालीनेन भावेन क्रियया "पूर्व्वस्य" पूर्वोत्पन्नस्य "प्रदेशः" प्रदेशनं सञ्ज्ञा प्रतिलम्भो "नोपपद्यते"। किं कारणम्? उत्पत्तिसहभूता हि सा, स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसम्बद्ध मेव द्रव्य मुत्पद्यते,—नित्यसम्बद्धौ हि शब्दार्थौ। "इति तदेतत्" सर्वथा सर्वा-

ख्याख्यातजानि नामानीति शाकटायनमतं "नोपपद्यते"। तदनुपपत्तावस्मत्पक्षसिद्धिः,—कानि चिदाख्यातजानि नामानि, कानि चिदनाख्यातजानीति। अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयता मिति परिसमाप्तो गार्ग्यपक्षः॥ २॥

शाकटायनपक्षेणेदानी मेतान् दोषान् प्रतिसमाधास्यामस्तदर्थ मिद मारभ्यते;—

यथो हि नु वा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिक मित्येवं सत्यनुपालम्भ एष भवति यथो एतद्यः कश्च तत्कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयप्रतिलम्भ मेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इत्येतेनैवोत्तरः प्रत्युक्तो यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जात्य आट्णारो जागरूको दर्विहोमीति यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः प्रथनात् पृथिवीत्याहुः क एना मप्रथयिष्यत् किमाधारश्चेत्यथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः॥ ३*॥

---

* नेद खण्डसमाप्तिर्दृश्यते घ-ङ-च-पुस्तकेषु।

"यथो हि नु वा एतत्" इति। यथेति वाक्योपादाने; यथा येन प्रकारेण। उ-कारोऽवधारणार्थः। व्याख्यात मेतद्,—"अथा-प्युकार एतस्मिन्नेवार्थे (५६पृ०)"। इतरेण येनैव प्रकारेण प्रसिद्ध माचार्येणाख्यातजत्वं प्रतिषिद्धं नाम्नः, तेनैव प्रकारेण प्रत्यनुभाष्या-मीति। हि—इत्यसूयायाम्। कथं हि व्याकरिष्यतीति। नु—इत्येष हेत्वपदेशे। वै—इत्ययं यथोक्तपूर्वपक्षोपदेशार्थः। येनैव प्रकारेणास-मर्था हेतव उक्ताः, तेनैव प्रकारेण प्रत्यनुभाष्य प्रतिवक्तृधर्मेण समी-करिष्यामः॥

यथैतदुक्तं किमिति? "तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्" इति। आह तत्र किमिति? उच्यते;—तदेतत् प्रत्युच्यत इत्युपयुक्तस्तच्छब्दः॥

आह,—केन पुनः प्रकारेण प्रत्युच्यत इति? उच्यते;—"सर्वं प्रादे-शिक मित्येवं सत्यनुपालम्भ एष भवति"। सर्व मेव प्रादेशिकं सर्व मेव क्रियाजं नाम। आह,— ततः किम्? इत्येवं सत्यनुपालम्भ एष भवति। आह,—कथम्? शृणु। प्रदेशवाचिन आख्यातानुत्प्रेक्ष्य तदाश्रयौ स्वरसंस्कारौ यावद्गम्य मनुविधेयौ,—विभ्वी हि लक्षण-गतिर्नैष शब्दापराधो नाप्यस्माकम्। भवत एवाय मपराधो मन्द-शिक्षितत्वात्,—येनानुविधातुं स्वरसंस्कारौ विद्यमानावपि प्रदेशवा-चिनि धातौ न शक्नोषि; स त्वं तावत् पुनः पुनः शिक्षस्वान्यद्व्याकरणं यावच्छक्तिस्त्वानुविधातु मिति। व्याकरणेऽप्यष्टधा भिन्ने लक्षणैरेकदेशो विक्षिप्तः। कश्चित् सौत्रो धातुः, कश्चित् तुशब्द-चशब्द-वाशब्दाति-रिक्ताध्याहारविभागादिगम्यः। तद्यथा। मतान्तरेष्वप्यभिन्नेषु कश्चित्

क्वचिद्विधिरुच्यते। ते च सर्व एव प्रयोग मिच्छता प्रयोगकाल उपसंहर्त्तव्याः। एव मिहापि सर्वाण्येव लक्षणशास्त्राण्यपेक्ष्याणि अखिलस्वरसंस्कारसिद्धये।—इति स त्वं तावत् शिक्षस्वानिर्घिषः, यावदखिलशब्दानां स्वरसंस्कारावनुविधातु मुपशक्नोतुं सामर्थ्य मिति॥

"अथो एतत्" यत् पुनरेतदुक्तम्,—"यः कश्च तत् कर्म कुर्यात्, सर्वं तत् सत्त्वं तथाऽऽचक्षीरन्निति"। अनेकेषा मेकक्रियायोगादेकनामता प्रसज्येतेति॥

अत्र ब्रूमः;— न हि प्रसज्यते। त्व मपि पश्यसि, वय मपि च "पश्यामः समानकर्म्मणां" तुल्यकर्म्मणां अपि सतां कर्म्मकृतां "नामधेयप्रतिलम्भ मेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति"। तक्षन् कश्चित् तक्षेत्युच्यते। अन्यः तक्षन्नपि न तक्षेत्युच्यते। आह,—कोऽत्र हेतुरिति? शृणु;—लोक मेव पृच्छ, त मेवोपालभस्व, न मयैव नियमः कृत इति। अत्र च तद्यथा;—समान मीहमानानां कश्चिदेवार्थेन संयुज्यते, कश्चिन्न; वेदादीनाम्, एकार्थेन संयुज्यत इति अन्यैरपि संयुक्तः; सत्य मेकेन चालब्धम्। स्वभावतो हि शब्दानां क्रियाजत्वेऽपि सति का चिदेव क्रिया मङ्गीकृत्यावस्थितिर्भवतीति। अथवा क्रियातिशयकृतो नियमः स्यात्,—यो हि यदतिशयेन करोति, तस्यानेकक्रियावत्त्वेऽपि सति तद्धेतुक एव नामधेयप्रतिलम्भो भवति॥

अयं समाधिः;—अथवा न ब्रूमो यो यत्र यदा च तक्षति, स एव तक्षेति। किन्तर्हि? यो यदा यत्र तक्षा भवति, स एव तक्षेति। तदेतल्लक्षण मनियतं, काम मन्येष्वप्यस्तु कदाचित् क्वचित् तेषा मप्यन्याः क्रिया नियततराः सन्ति, यद्धेतुको नामधेयप्रतिलम्भ इति। तेषां तु

| | Rs. | |
|---|---|---|
| Categories of the Nyáya Philosophy, (Sans.) Fasc. II | 0 | 10 |
| Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Gopatha Bráhmana, (Sans. & Eng.) Fasc. I and II @ /10/ each | 1 | 4 |
| Gopála Tápaní, (Sans.) Fasc. I | 0 | 10 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each | 7 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /10/ each | 1 | 14 |
| Íśá Kena Katha Praśna Muṇḍa Máṇḍukya Upanishads, (Sans.) Fasc. VI | 0 | 10 |
| Kátantra, (Sans.) Fasc. I—VI @ 1/ each | 6 | 0 |
| Kathá Sarit Ságara, (English) Fasc. I—X @ 1/ each | 10 | 0 |
| Lalita Vistara, (Sans.) Fasc. I—VI @ /10/ each | 3 | 12 |
| Ditto (English) Fasc. I—II @ 1/ each | 2 | 0 |
| Maitri Upanishad, (Sans. & English) Fasc. I—III (in one volume) | 1 | 14 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XVI @ /10/ each | 9 | 6 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /10/ each | 2 | 8 |
| Nṛisiṃha Tápaní, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Nirukta, (Sans.) Vol. I, Fasc. 1—6 ; Vol. II, Fasc. 1, @ /10/ each | 4 | 6 |
| Nárada Pancharátra, (Sans.) Fasc. III—IV @ /10/ each | 1 | 4 |
| Nyáya Darśana, (Sans.) Fasc. I and III @ /10/ each | 1 | 4 |
| Nítisára, or, The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—IV | 1 | 14 |
| Piñgala Chhandaḥ Sútra, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Prithiráj Rásau, (Sans.) Fasc. I—V @ /10/ each | 3 | 2 |
| Ditto (English) Fasc. I | 1 | 0 |
| Páli Grammar, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I | 1 | 8 |
| Parásara Smriti (Sans.) Fasc. I | 0 | 10 |
| Rig Veda, (Sans.) Vol. I, Fasc. IV | 0 | 10 |
| Śrauta Sútra of Ápastamba, (Sans.) Fasc. I—V @ /10/ each | 3 | 2 |
| Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /10/ each | 6 | 14 |
| Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /10/ each | 5 | 10 |
| Sáma Veda Saṃhitá, (Sans.) Fasc. I—XXXVII @ /10/ each | 23 | 2 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /10/ each | 2 | 8 |
| Sáñkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Súrya Siddhánta, (Sans.) Fasc. IV | 0 | 10 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II | 0 | 10 |
| Sañkara Vijaya, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Sáñkhya Pravachana Bháshya, (English) Fasc. III | 0 | 10 |
| Sáñkhya Sára, (Sans.) Fasc. I | 0 | 10 |
| Suśruta Saṃhita, (Eng.) Fasc. I | 1 | 0 |
| Taittiríya Áraṇyaka, (Sans.) Fasc. I—XI @ /10/ each | 6 | 14 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /10/ each | 15 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc. I—XXXII @ /10/ each | 20 | 0 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Ditto Aitareya Śvetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /10/ each | 11 | 14 |
| Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each | 6 | 14 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. 1—6 ; Vol. II, Fasc. 1—3 @ /10/ each | 5 | 10 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /10/ each | 1 | 4 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each | 4 | 6 |

### *Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each | 8 | 2 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each | 27 | 8 |
| Ditto (English) Vol. I (Fasc. I—VII) | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXII @ 1/4 each | 27 | 8 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each | 11 | 14 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to, thick paper, @ 4/12 ; thin paper | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each | 26 | 4 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each | 17 | 8 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each | 3 | 0 |
| Futúḥ-ul-Shám Waqídí, (Text) Fasc. I—IX @ /10/ each | 5 | 10 |
| Ditto Azádí, (Text) Fasc. I—IV @ /10/ each | 2 | 8 |
| Haft Ásmán, History of the Persian Mansawi, (Text) Fasc. I | 1 | 0 |

| | | |
|---|---|---|
| History of the Caliphs, (English) Fasc. I—VI @ 1/ each .. .. | 6 | 0 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Iṣabáh, with Supplement, (Text) Fasc. I—XXXII @ /12/ each .. | 24 | 0 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each.. .. | 9 | 6 |
| Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc. XIX with Index @ /12/ .. .. .. .. | 12 | 0 |
| Mu'áṣir-i-'Álamgírí (Text), Fasc. I—VI @ /10/ each .. .. | 3 | 12 |
| Nukhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. | 0 | 10 |
| Niẓámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. | 2 | 0 |
| Suyúṭy's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. .. .. | 8 | 12 |
| Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| Ditto (English) Fasc. I—XIV @ 1/ each .. .. | 14 | 0 |
| Táríkh-i-Fírúz Sháhi, (Text) Fasc. I—VII @ /10/ each .. .. | 4 | 6 |
| Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. .. | 5 | 10 |
| Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. .. .. | 3 | 2 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | Asiatic Researches. Vols. VII—XI; Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each .. .. | 90 | 0 |
| | Ditto Index to Vols. I—XVIII .. .. | 5 | 0 |
| 2. | Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. | Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers. | | |
| | *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| | General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. .. .. .. | 2 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. .. | 4 | 0 |
| | Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. | 4 | 0 |
| | A Grammar and Vocabulary of the Northern Balochí Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. .. | 4 | 0 |
| | Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. .. | 2 | 0 |
| | Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882).. | 4 | 0 |
| 4. | Aborigines of India, by B. H. Hodgson .. .. .. | 3 | 0 |
| 5. | Anis-ul-Musharrihin .. .. .. .. .. | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata .. .. .. .. | 2 | 0 |
| 7. | Ditto of Arabic and Persian Manuscripts .. .. .. | 1 | 0 |
| 8. | Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. | 2 | 0 |
| 9. | Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. | 1 | 8 |
| 10. | Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. | 1 | 0 |
| 11. | Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. | 32 | 0 |
| 12 | Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. | 2 | 0 |
| 13. | Khizánat-ul-'ilm .. .. .. .. .. | 4 | 0 |
| 14. | Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. | 40 | 0 |
| 15. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. .. | 12 | 0 |
| 16. | Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. | 1 | 0 |
| 17. | Sharaya-ool-Islám .. .. .. .. .. | 4 | 0 |
| 18. | Tibetan Dictionary .. .. .. .. .. | 10 | 0 |
| 19. | Ditto Grammar .. .. .. .. .. | 8 | 0 |
| 20. | Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. | 2 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. I—XVII @ 1/ each .. | 17 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. | 5 | 0 |

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 506.



# सभाष्यवृत्ति-निरुक्तम् ।

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAS'RAMÍ.

VOL. II.

FASCICULUS II.

CALCUTTA:

PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1884.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 AND 59, LUDGATE HILL, LONDON, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Átharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /10/ each.. | Rs. | 3 | 2 |
| Áśvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each | .. | 2 | 8 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /10/ each .. | .. | 8 | 12 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each | .. | 3 | 2 |
| Aphorisms of Sáṇḍilya, (English) Fasc. I .. .. | .. | 0 | 10 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each | .. | 6 | 14 |
| Brahma Sútras, (English) Fasc. I .. .. .. | .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. | .. | 5 | 0 |
| Bṛihat Áraṇyaka Upanishad, (Sans.) Fasc. II—IV, VI—IX @ /10/ each | | 4 | 6 |
| Ditto (English) Fasc. II—III @ /10/ each .. | .. | 1 | 4 |
| Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each | .. | 3 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each | .. | 1 | 4 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, 1—6, @ /10/ each Fasc. .. .. .. | .. | 26 | 14 |
| Chhándogya Upanishad, (English) Fasc. II .. .. | .. | 0 | 10 |
| Categories of the Nyáya Philosophy, (Sans.) Fasc. II .. | .. | 0 | 10 |
| Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each .. .. | .. | 1 | 14 |
| Gopatha Bráhmaṇa, (Sans. & Eng.) Fasc. I and II @ /10/ each | .. | 1 | 4 |
| Gopála Tápaní, (Sans.) Fasc. I .. .. .. | .. | 0 | 10 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each.. | .. | 7 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /10/ each .. | .. | 1 | 14 |

*(Continued on third page of cover.)*

तथा नियमतः तक्षतीति विशेषः । जीवन इक्षुरसः, शाकजातिर्वा । भूमिजोऽङ्गारकः ।

“एतेनैवोत्तरः प्रत्युक्तः”। आह;— कतमः? यावद्भिर्भावैः संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यादित्येषः । पश्यामोऽनेकक्रियायुक्ताना मपि एकक्रियाकारितो नामधेयप्रतिलम्भो भवति । तद्यथा,— तक्षा, परिव्राजक इत्येतान्येवोदाहरणानि । तक्षा ह्यन्यान्यपि कर्माणि करोति । न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति । तच्च, यदुक्त मेकस्यानेकक्रियायोगादनेकनामता (प्रसज्येतेति । एतदयुक्तम् । न हि प्रसज्येत । यदि चोक्त मनेकेषा मेकनामता, एकस्य चानेकनामता*) प्राप्नोति,—ततश्च व्यवहाराप्रसिद्धिरिति ; न हि तदुभय मस्ति । अनेकेषा मेकक्रियायोगे हि सति एकस्य चानेकक्रियायोगेऽपि हि सति व्यवस्थित एव शब्दनियमः स्वभावत एव लोके । तस्मान्न व्यवहाराप्रसिद्धिदोषोऽस्ति। तच्च, यदुक्तं व्यवहाराप्रसिद्धिदोषप्रसङ्गान्न सर्वाण्याख्यातजानि नामानीति ; एतदयुक्तम् ॥

“यथो एतत्” यत् पुनरेतदुक्तम्—“यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति” । अत्र ब्रूमः ;—शब्दस्वाभाव्य मेतद्,— यत् तथा सर्वाण्याख्यायन्ते, यथा यथा प्रतीतार्थानि भवन्ति ; न तत्राह मपराध्ये भवतः, नापि शास्त्रम् । यथावस्थितानां हि शब्दाना मन्वाख्यानमात्र मेव क्रियते, नाहं शब्दानां कर्त्ता ; य एषां प्रयोक्तारस्तानेवोपालभस्व, निराकुरु वा यदि शक्नोषि ॥

---

* बन्धनी-चिह्नान्तर्गतपदानि क-पुस्तके न दृश्यन्ते ।

आह;—कस्मात् पुनः कानि चिदाख्यायन्ते लोके? तदभिधाने स्वाभाव्य मेव,—कानि चित् प्रतीतार्थानि, कानि चिदप्रतीतार्थानि; तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्त्तव्यानि; एतदेव शास्त्रस्य शास्त्रत्वम्,—यदप्रतीतार्थान्यपि प्रकृत्यादिना प्रतीतार्थानि स्युस्तथैनान्याचचीरन्निति आख्यायन्त एव कानि चित्, कानि चिच्छास्त्रेण प्रतीतार्थानि क्रियन्ते। छन्दोनुविधायित्वाल्लक्षणस्य*; गुणतस्तेषु लक्षणम्। अपि च। "सन्ति" एव "अल्पप्रयोगाः" प्रतीतार्थक्रियाः केचित् "कृतः" कृत्प्रत्ययान्ताः शब्दाः "अपि" "एकपदिकाः" एकपदप्रकरणान्तर्वर्त्तिनस्तद्धर्माणः। तद् "यथा,—व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति"। व्रततिर्वृणातेर्वल्ली†। दमूना दममना वेत्येव मादि‡, अग्निरतिथिर्वा। जाट्यः§ जटावान्। आट्णारो|| अटनशीलः। जागरूको¶ जागरणशीलः। दर्विहोमीति दर्व्या जुहोतीत्येवं प्रतीतार्थान्यपि शाकटायनाभिप्रायः। तत्र यदुक्तं—'न सर्वाण्याख्यातजानि नामानीति' तद् युक्तम्॥

"यथो एतत्"—यत् पुनरेतदुक्तम्,—"निष्पन्नेऽभिव्याहारेऽभि-

---

* "लक्षणशास्त्रस्य"—इति क।

† 'व्रततिर्वरणाच्च सयनाच्च ततनाच्च' नैग० का० ९, ५, ९।

‡ 'दमूना दममना वा दानमना वा दान्तमना वापि वा, दम इति गृहनाम, तन्मनाः स्यात्' नैग० का० ४, १, ४। किञ्चान्यत्रापि—'दमूनाः क्षेत्रसाधाः' नैघ० का० २, १, २।

§ "रूपादाहतप्रशंसयोर्यप् (पा० ५, २, १२०)"—इत्यत्र 'अन्येभ्योऽपि दृश्यते'—इति वचनात् मत्वर्थे यपि रूप मेतत्।

|| "आरगुदीचाम् (पा० ४, १, १३०)"—इत्यत्र 'रका सिद्धे णकारोच्चारण मन्यतोऽपि विधानार्थम्'—इति वचनात्। शतपथ-ब्राह्मणे च ८, २, ९ द्रष्टव्यम्।

¶ "जागरूकः"—इति पा० ३, २, १६५।

विचारयन्तीति"। अत्र ब्रूमः ;— युक्तं ते कुर्वन्ति—"भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः"। योगपरीष्टिर्नाम योगस्य परीक्षणम्॥

कथं चानुत्पन्नः सन्नभिधानयोगः परीक्ष्येत। तत्र यदुक्तं—"प्रथनात् पृथिवीत्याहुः"। "क एना मप्रथयिष्यत् किं माधारस्येति"। वय मेवं ब्रूमः ;—प्रथितेयं केन चिदतः पृथिवीय मित्याह। कथ मिय मप्रथिता सती पृथिवीत्व मापेति? उच्यते ;—"अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः"। दृश्यमाना ह्रीयं पृथिवी। तस्मात् यद्यप्यप्रथिता कैश्चिदन्यैस्तथापीयं पृथुदर्शनयोगात् पृथिव्येव। तत्र, यदुक्तं—'क एना मप्रथयिष्यत् किमाधारस्य?', एतद् युक्तम्; अन्यथा हि धात्वर्थो नोपपद्यत एव। तत्रैवं सति, यथा न विरोत्स्यते, तथा निर्वक्ष्यामः। तस्मादविरुद्धः शाकटायनाभिप्रायः॥ ३॥

अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते यथो एतत्पदेभ्यः पदेतरार्द्धांत्सञ्चस्कारेति योऽनन्विते ऽर्थे सञ्चस्कार स तेन गर्ह्यः* सैषा पुरुषगर्हा† यथो एतदपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वाना मपरस्माद्भावान्नामधेयप्रतिलम्भ मेकेषां नैकेषां यथा बिल्वादो लम्बचूडक‡ इति बिल्वं भरणाद्वा भेदनाद्वा (१४§)॥ ४॥

॥ इति प्रथमाध्यायस्य चतुर्थः पादः॥ १, ४.

---

* "गर्ह्य" घ, ङ, च।

† अतः परं "न शास्त्रगर्हा"—इत्यधिकः पाठः घ, ङ, च।

‡ "लम्बचूलक" क, ख, ग।

§ घ-ङ-च-पुस्तकेष्विह चतुर्दश-खण्डः समाप्तः।

"अथ"। "अपि" च, यदि दृष्टेऽप्यस्याः पृथुत्वे न वय मुपलभ्यामहे। ननु "एवं" सति, "सर्व एव दृष्टप्रवादा उपालभ्यन्ते", न केवल मह मेव। योऽयं दृष्ट्वा ब्रवीति, स तत्र दोष एव। तथा सति, दृष्टहानं प्रसज्येत; अनिष्टं चैतत्। तस्मात् पृथुदर्शनात् पृथिवीत्युच्यते॥

"यथो एतत्" यत् पुनरेतदुक्तम्—"पदेभ्यः पदेतरार्द्धान्त्सञ्चस्कारेति", अत्र ब्रूमः;—"योऽनन्विते" शब्देनानभिधेये "अर्थे" अननुगत मसम्बद्धं "सञ्चस्कार, स तेन" सम्बद्धेन संस्कारेण "गर्ह्यः" गर्हणीयः। पुनराचार्यो योऽनुगतधातुभिरनेकैरेकाभिधानगतानर्थांस्ततः सञ्चस्कार, नैव गौल्येन। "सैषा" तदभिप्रायापरिज्ञानात् "पुरुषगर्हा" पुरुषो हि कश्चित् अविचितत्वादेकधातुज मपि न जानाति; किं पुन बहुधातुजम्। अपि च, सन्ति लोके तादृशाः पुरुषाः, ये कारकहारकादीन्यपि प्रकटक्रियाणि सन्ति, कतमेभ्यो धातुभ्य एतान्यभिनिष्पाद्यन्त इति न जानते; एष पुरुषदोषो न शास्त्रदोषः,—यदनुगमयितुं शब्दैरर्थो न शक्यते। तत्र,—'यदुक्तम्, अननुगत एवार्थे सञ्चस्कार शाकटायनः, सन्त मेव ह्यर्थं मायमयति गमयतीति', सत्यम्। तस्मादुपपद्यत एव शाकटायनमतम्।

अपि च, रूढ़िशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते। यथा लक्षणं, तथा लक्ष्यं प्रवर्त्तितु मर्हति;— इतरथा हि कस्य तल्लक्षणं स्यात्। यदसर्पत् तत्सर्पिरिति मन्त्रः, यन्नवनीत मभवदिति मन्त्रः। अपि च, ब्राह्मणेनाप्यनेकधातुजान्येव कृत्वा निरुच्यन्ते। नच मन्त्राभिधानानि यत्परिज्ञाने च फल मुपपद्यते। आह;—"तदेतत् त्र्यक्षरᳶ हृदय मिति;

च इत्येक मक्षर मभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद, द इत्येक मक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद, य मित्येक मक्षर मेति स्वर्गं लोके य एवं वेद (श०ब्रा०१४,८,४,१)"–इति। एवं हरतेर्ददातेरेतेर्हृदयशब्दः। तदर्थफलोपदर्शनार्थं ब्राह्मणेनैवं निरुक्तः। तच्च नः परं प्रमाणम्। तस्माच्छाकटायनस्तदनुदृश्य सम्यगेव कृतवान्,–यदनेकैर्धातुभिरेक मभिधानं निरुक्तवानिति।

"अथो एतत्" यत् पुनरेतदुक्तम्,–"अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः", अत्र ब्रूमः;–"पूर्वोत्पन्नानां सत्त्वाना मपरस्माद् भावान्नामधेयप्रतिलम्भम्"। अपरस्मादपि सतो भावात्। "एकेषाम्? न एकेषाम्"। तद् "यथा",–"बिल्वादो लम्बचूडक इति"। पश्चात्कालीनयापि चूडालम्बनक्रियया, भविष्यता योगेन बिल्वादनक्रियया च, पूर्वोत्पन्नस्य सत्त्वस्य नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः। क्व चान्यत्र नोपपद्यते। तत्र यदुक्त मपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यते, इत्येतदनेकत्वादयुक्तम्। उपपद्यत एव हि केषाञ्चिदिति॥

"बिल्वं भरणाद्वा भेदनाद्वा"। भृतं हि तद् भवति बीजानाम्; बिभर्त्ति वा। दुर्भेद्यादो भक्ष्यमाणं जनम्; भेदनाद्वा भिद्यते हि तदवश्यं भक्षणायेति॥

आह;–किं मिद मतिमध्विव किं मपि पूर्वोत्तरपक्षसम्बद्धं नामाख्यातजल्प मधिकृत्योक्त मिति? उच्यते;–शिष्यबुद्धिवृद्ध्यर्थ मेतदुक्तम्; कथं नाम व्युत्पन्नबुद्धिः शिष्योऽप्रतिबुध्यमानः सर्वतोमुखानेव लौकिकवैदिकाञ्छब्दान्निर्ब्रूयादिति। सर्वाण्येव हि व्याकर-

णानि निरुक्तानि च वेदाङ्गत्वाविशेषात् प्रमाणानि। तेषा मेव फल मिदं चाभिव्येतदशक्यं तदुक्त मिति ॥ ४ ॥

॥ इति निरुक्तवृत्तौ षष्ठाध्यायस्य चतुर्थः पादः॥ ४ ॥

---

॥ पञ्चमः पादः ॥

अथापीद मन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यतेऽर्थ मप्रतियतो*नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च यदि मन्त्रार्थप्रत्यायानर्थकं भवतीति कौत्सोऽनर्थका हि मन्त्रास्तदेते† नोपेक्षितव्यं नियतवाचो युक्तयो नियतानुपूर्व्या भवन्त्यथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते। उरु प्रथस्वेति प्रथयति। प्रोहाणीति प्रोहत्यथा‡प्यनुपपन्नार्था भवन्ति। ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरित्याह हिंसन्नथापि विप्रतिषिद्धार्था भवन्ति। एक एव रुद्रोऽवतस्थे न द्वितीयः। असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम्। अशत्रुरिन्द्र§ जज्ञिषे शतं सेना अजयत्साक मिन्द्र इत्यथापि जानन्तं संप्रेष्यत्यग्नये समिध्यमानायानु ब्रूहीत्य-

---

* "मप्रतीयतो" क, ख। † "सदिति" क, ख, ग।

‡ "प्रोहति। अथा" ख।

§ इह मन्त्रांशे च-पुस्तकमात्रे इमानि स्वरचिह्नानि दृश्यन्ते।

थाप्याह्वादितिः सर्वं मिति । अदिति* द्यौरदितिरन्तरिक्ष मिति† । तदुपरिष्टाद् व्याख्यास्यामोऽथाप्यविस्पष्टार्थी भवन्त्यम्यग्याद्दश्मिञ्जारयायिकाणुकेत्यर्थवन्तः‡ शब्दसामान्यादेतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म्म क्रियमाण मृग्यजुर्वाभिवदतीति च ब्राह्मणम्§ ॥ ५ ॥

एवं नामाख्यातोपसर्गनिपातानां प्रविभागेनावस्थितानां मेतल्लक्षणं परिज्ञायते—"अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते"। अथ शब्दोऽधिकारार्थः। द्वितीयं शास्त्रारम्भप्रयोजन मधिकरोतीति। अपीति सम्भावने। अपि पदेषु विभागेनावस्थितेषु लोके वेदे वा, अपि मन्त्रेषु वाक्यभावेनावस्थितेषु, यः समस्तार्थस्तस्मिन् प्रत्ययो विशेषावधारणं न विद्यते, न भवतीत्यर्थः। अपीदं शास्त्र मन्तरेण पदार्थप्रत्ययो नास्ति। अपि वाक्यार्थ इत्यभिप्रायः॥

आह;— कः पुनः पदार्थवाक्यार्थयोर्विशेष इति? उच्यते;— साकाङ्क्षः पदार्थो निराकाङ्क्षो वाक्यार्थः। तद्यथा;—गौरित्युक्ते किमित्याकाङ्क्षा भवति, ततो गच्छतीत्युक्ते निराकाङ्क्षं भवति; तथा गच्छतीत्युक्ते क इति साकाङ्क्षं भवति, तथा गौरित्युक्ते निराकाङ्क्षं भवति। अथेदानीं गौर्गच्छतीत्युक्ते गोर्वाहदोहादिभ्यो व्यावृत्य

* 'मित्यदिति'' घ, ङ, च।
† नेह स्वरचिह्नानि ङ-पुस्तके।
‡ "काणुकेति ॥ १५ ॥ अर्थवन्तः" घ, ङ, च।
§ घ-ङ च-पुस्तकेष्वत्र खण्डच्छेदो नास्ति।

गमनेऽवतिष्ठते, गमनं चान्येभ्यो व्यावृत्य गव्येवावतिष्ठते। एष वाक्यार्थः। स एष प्रकरणाविरोधी वाक्यार्थः पदार्थं नियमेन लक्षयति, पदार्थस्य पदलक्षणम्। पदार्थसन्नियोगेन हि व्याकरणे पदानां प्रकृतिप्रत्ययादीनि लक्षणानि व्यादिश्यन्ते॥

यत एव मतः "अर्थ मप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः"। अर्थ मप्रतियतोऽप्रतिपाद्यमानस्यानवधृतार्थस्येत्यर्थः। "नात्यन्तम्"। नैकान्तिकेन, एकान्तं नाम निश्चयोऽनिश्चयेनेत्यर्थः। किम्? 'स्वर-संस्कारोद्देशः'। स्वरोद्देशस्य संस्कारोद्देशस्य; स्वरावधारणं संस्कारावधारणं नास्तीति वाक्यशेषः। किं कारणम्? न ह्यनवधृतार्थः स्वरसंस्कारावव्धारयितुं शक्नुयात्;—अर्थवशेन हि स्वरसंस्कारावव्तिष्ठते॥

"तदिदम्" एवं कृत्वा निरुक्तशास्त्रं "विद्यास्थानम्" एतदधीनत्वादर्थपरिज्ञानस्य। अर्थवशगत्वाच्च स्वरसंस्कारयोरिदं "व्याकरणस्य कार्त्स्न्यं" कृत्स्नभावं,करोतीति वाक्यशेषः। व्याकरणे न हि स्वरसंस्कारौ चिन्त्येते। तस्मादपरिसमाप्त मेव तावद्व्याकरणं यावत् निरुक्तं नाधिगत मिति;— न हि अनिरुक्तोऽर्थ मवधारयितु मलम्,—नानवधृतार्थः स्वरसंस्कारतत्त्वं विजानीयादिति॥

आह;—ननु व्याकरणस्य कार्त्स्न्य मेतत् करोतीत्युक्ते तच्छेष मेवैतद्, गुणादिवत्; ततश्च विद्यास्थानत्व मस्य विरुध्यत इति? नेत्युच्यते;—"स्वार्थसाधकञ्च"। स्वार्थाजहद्वृत्त्या ह्येतदनुषङ्गतो व्याकरणस्य कृत्स्नतां करोति। यथा लोके स्वार्थ मपरिहाय कश्चित्परानुग्रहं करोत्येवम्। यत्पुनरेतदुक्तं गुणादिवदिति। ते हि तन्त्रान्तर्भूता एव "उणादयो बहुलम् (पा० ३,३,१)"—इत्युक्तम्,

न पुनर्निघण्टवो बहुल मिति। तस्मात् स्वतन्त्र मेवेदं विद्यास्थान मर्थनिर्वचनम्, व्याकरणन्तु लक्षणप्रधान मिति विशेषः॥

आह;—"यदि मन्त्रार्थप्रत्ययाय" एतदारभ्यते, हन्त, तदेव मर्थ मारभ्यमाणम् "अनर्थकम्" एव "भवतीति"। आह;—क एव माहेति? उच्यते;—"कौत्सः"। किं कारणम्? "अनर्थका हि मन्त्राः"। न हि मन्त्राणा मर्थोऽस्ति वाच्यवाचकत्वेन। तदर्थनिर्वचनायारभ्यमाण मिद मप्यनर्थक मेव भवति। तस्मान्नारब्धव्य मित्येवं कौत्सो मन्यते। "तत्" एतदेव मुच्यमानं कौत्सम् "एतेन" अनेन नैरुक्तेन "न" "उपेक्षितव्यम्"। उपगम्य वेदं शास्त्रञ्च ईक्षितव्यम्; कि मसौ सत्य माचष्टे इत्येति वा परीक्ष्यम्। अर्थवत्त्वे मन्त्राणां यद्धेतुजातं वक्ष्यमाणं तदुपगम्यार्थवत्त्वं मन्त्राणा मीक्षितव्य मिति केचिदाहुः॥

कया पुनरुपपत्त्या कौत्सो मन्त्राणा मानर्थक्य माहेति? उच्यते;—"नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति"—इति। नियतवाचो युक्तयः, निरूढवाचोयुक्तयः;—अभिधाननियता हि ते भवन्ति।—"अग्न आ याहि वीतये (सा० सं० १,१,१,१)"—इति मन्त्रेण पुनर्विभावसो! आगच्छ पानायेति। नियतानुपूर्व्या नियतनिष्ठानुपूर्वी पदप्रयोगस्य। तद्यथा,—'अग्नआयाहि' इति न पुनर्भवति 'आयाह्यग्ने' इति। इह लोकेऽर्थवतां शब्दाना मनियमेन पर्यायवचनता दृष्टा गवादिप्रयोगे, तथा न पौर्वापर्यं दृष्टम्। तद्यथा,—'गोणी मभ्याज', 'अभ्याज गोणीम्'; 'आहर पात्रम्', 'पात्र माहर' इति। न च तथा मन्त्रेषु। ततोऽर्थवच्छब्दवैधर्म्यात् पश्यामोऽनर्थका मन्त्रा इति॥

अथाप्यय मपरो हेतुरानर्थक्ये मन्त्राणाम्। आह;—कतमः? इति, उच्यते;—"ब्राह्मणेन" ते "रूपसम्पन्नाः" अपि सन्तो "विधीयन्ते" एव। यदि ह्येते अर्थवन्तोऽभविष्यन्, स्वेनैव लिङ्गेन स्व मात्मान मेते विनियोक्तुं समर्था इति कृत्वा न ब्राह्मणेन तेषु तेषु कर्मसु व्यधास्यन्त; विहिताश्च। तद् यथा,—"उरु प्रथस्वेति प्रथयति (श॰ब्रा॰१,१,६,८)* प्रथनलिङ्गो मन्त्रो विहितः प्रथनकर्मणि; तथा च,—"उरुप्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् (य॰वा॰स॰१, २२)"। यजुरिदम्, पुरोडाशं प्रत्युच्यते। पुरोडाश! त्वं विस्तीर्णप्रथनः सन् विस्तारप्रथाः, स्वात्मानं ते तत्र यज्ञपतिस्त्वायं यजमानः प्रजापशुहिरण्यादिभिरुरु प्रथतां विस्तीर्यता मिति। तथा,—"प्रोहाणीति प्रोहति ( ? )"—इति ब्राह्मणं द्रोणकलशप्रोहणविधावपि। "इद मह मात्मानं प्रोहामि( ? )"—प्राञ्चं प्रेरयामि इति प्रोहाणीति प्रोहति, प्रोहणलिङ्गो विहितः प्रोहणकर्मणि। तस्माल्लिङ्गसम्पन्नविधानात् पश्यामो ब्राह्मणेनानर्थकस्वरूप मेव सन्तं मन्त्रं नियुक्तम्। एवं सति, मन्त्रं मन्त्रं पुनर्विदधत् ब्राह्मण मर्थवत्। अनर्थका मन्त्राः—न ह्यर्थवन्तः सन्तो दासवद् ब्राह्मणेन विधीयेरन्, विहिताश्च। तस्मादनर्थका मन्त्रा इति पश्यामः। अपि च;—ब्राह्मणस्यानर्थक्योपगमे देशकालकर्तृदक्षिणादिकर्माङ्गभूतं कुत उपलभ्येत? तथाच ब्राह्मणस्यानर्थक्येऽभ्युपगम्यमाने वेदैकदेशस्य मन्त्रस्यात्यन्त मेवानर्थकत्व मभ्युपगतं स्यात्;— न हि ब्राह्मणस्य विधिस्तुत्यर्थावृतेऽर्थवत्तास्ति, मन्त्राणां पुनर्वाच्यवाचकत्वेनानर्थकाना मपि सतां विनियोगमात्रेणार्थ-

* 'उरुप्रथा इति प्रथयति यावत्कपालम्' इति का॰ श्रौ॰ सू॰ २, ५, १९।

वक्ता स्यात्। एतस्माच्च काम मनर्थका मन्त्रा वाच्यवाचकत्वेन मन्त्रो विनियोगमात्रेणैवार्थवतो विधेयत्वात् विधायकत्वाच्च ब्राह्मण मर्थवदस्त्विति ॥

"अथापि" अय मपरो हेतुरनर्थकत्वे मन्त्राणाम्। आह;— कतमः? इति, उच्यते;—"अनुपपन्नार्थाः" हि एते "भवन्ति", य एतेष्वर्थो लभ्यते;—अय मेतेष्वर्थः स्यादिति नासावुपपद्यते। तद्यथा,—"ओषधे त्रायस्व (य०वा०सं०४,१.६,१५) एनम्"— इत्याह। न चौषधिरात्मान मपि त्रातुं समर्थाः, किम्पुनर्द्दूचम्। तथा,—"स्वधिते मैनꣳ हिꣳसीः (य०वा०सं०४,१.६,१५) इत्याह" आत्मनेव "हिंसन्"। को हि नाम एवं मुक्त्वा स्वय मेव हिंस्यात्? हिनस्ति च। लोके यान्येवंविधानि वाक्यान्युन्मत्तप्रभृतीनां तान्यनर्थकान्युच्यन्ते, तथैवेमानि। तस्मादिमान्यप्यनर्थकानीत्युपपद्यते॥

"अथापि" अय मपरो हेतु रानर्थक्ये मन्त्राणाम्। आह;— कतमः? इति, उच्यते;—"विप्रतिषिद्धार्था भवन्ति" इति। अन्यस्यान्येन विरुद्धार्थेन प्रतिषेधो विप्रतिषेधः, इतरेतरव्याघात इत्यर्थः। तद्यथा,—"एक एव रुद्रोऽवतस्थे न द्वितीयः ( ? )", "असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् (य०वा०सं०१६,५४)"; "अशत्रुरिन्द्र जज्ञिषे (ऋ०सं०८,७,२१,२)","शतं सेना अजयत् साक मिन्द्रः (ऋ०सं०८,५,२२,१)—इति"। एतान्युदाहरणानि।
"एक एव रुद्रोऽवतस्थे न द्वितीयो रणे निघ्नन् पृतनासु शत्रून्। संसृज्य विश्वा भुवनानि गोप्ता प्रत्यङ् जनान्त्सञ्चुकोचान्तकाले* ॥"

* "जनान्त्सञ्चुकोचान्तकाले—" इति च-पुस्तकटीप्पन्याम्।

एक एवावतस्थे रुद्रः' स्थितवान्, 'रणे' रणाय रणार्थम्, 'न' अन्यो 'द्वितीयः' कश्चिदस्ति। इति रुद्रबहुत्व-प्रतिषेधः। कथ मवतस्थे? 'नि' निश्चयेन 'घ्नन्', 'पृतनासु' स्पर्द्धनीयेषु सङ्ग्रामेषु शत्रून्'। किञ्च, स एकः 'संसृज्य' सृष्ट्वा, 'विश्वा' विश्वानि भुवनानि 'गोप्ता' रक्षिता ; सृष्ट्वा च सर्गकालानन्तर मेव पालयिता च स्थितिकाले। 'प्रत्यङ्' प्रातिलोम्येन 'जनान्', 'सञ्चुकोच' सङ्कोचयति, 'अन्तकाले' प्रलयकाले। य एवं गुणयुक्तो रुद्रस्तं वयं स्तुमः। "असङ्ख्याता॰ —॰तन्मसि*। एषा शतरुद्रियेऽनुष्टुप्। अनेन चाग्निचयने ऽर्कपर्णेनाजाक्षीरमिश्रा गवेधुकाः सप्तकृत्वो हूयन्ते उत्तरस्यां श्रोणा-वन्त्याया मिष्टकायाम्†। प्रजापते रार्षम्। 'असङ्ख्याता' असङ्ख्या-तानि 'सहस्राणि' बहूनीति यावदुक्तं स्यात्, केषाम्? 'ये रुद्राः' 'भूम्याम्' 'अधि' उपरि 'तेषां' 'सहस्रयोजने' अध्वनि अवस्थिताना मेव 'अव' 'तन्मसि' तनुमो 'धन्वानि' धनूंषि। अप्राप्ताना मेवा-स्मान् प्रतीत्यभिप्रायः। तावदेतानभिष्टुमो यावत्ततानि तानि धनूंषि। "त्वं सिन्धून्॰—॰धन्वसु"‡। एतया अतिच्छन्दसा इन्द्रं तुष्टाव

---

* "असंख्याता॰—॰भूम्याम्। तेषां सहस्रयोजनेऽव धन्वानि तन्मसि" य॰ वा॰ सं॰ १६, ५४।

† "शतरुद्रियहोमे उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रितृस्वर्कपर्णेनार्ककाष्ठेन शातयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीर मेके तिष्ठन्नुदङ् नमस्त इत्य-ध्यायेन (य॰ वा॰ स॰ १६अ॰) अनुवाकान्ते स्वाहाकारो जानुमात्रे पश्चान्ते च नाभिमात्रे प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमा-णेषु नमोऽस्त्विति प्रतिमन्त्रम्"—इति का॰ श्रौ॰ सू॰ १८, १, १—५। 'जर्तिल-मिश्रान्' आरण्यतिलमिश्रान्।

‡ "त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम्। अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परिष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु॥" ऋ॰ सं॰ ८, ७, ११, १॥

सुराः पैजवनः। षोड़शिनि शस्त्रे विनियुक्ता। हे 'इन्द्र!' 'त्वम्' 'अवासृजः' 'सिन्धून्' स्यन्दनान् एतान् माध्यमिकान् उदकसंस्त्यायान्। कथम्पुनरवासृजः? 'अधराचः' तानधिगमनान् कृत्वा सर्वानेवावासृजः, नित्यकालम् 'अहन् अहिम्' घ्नन् मेघम्। 'अशत्रुः' अशातयितव्यो 'जज्ञिषे' जायसे नित्यकालं भवसि, तस्मिन् हते मेघे। किञ्च, त्व मेतेन प्रकारेण मेघवधकर्मणा 'विश्वं' सर्वं 'पुष्यसि' पुष्णासि 'वार्यं' वारिभवं ग्रीह्यादिकम्। 'तं' 'त्वा' त्वाम् एवङ्गुणसंयुक्तं वयं 'परिष्वजामहे' सर्वतः स्वजामहे। 'नभन्तां' मा भूवन् 'अन्यकेषाम्' अन्येषाम् 'ज्याका' ज्या 'अधिधन्वसु' अधिधनुःषु। किमुतान्ये केचनाभ्युद्यमाना एते स्म द्विषः अवततज्य धनुषो हतसर्वोद्यमाः सन्त्वित्यतस्त्वां परिष्वजामहे इत्यभिप्रायः। "आशुः शिशान"—इत्येषा अप्रतिरथेन त्रिष्टुबग्निप्रणयने विनियुक्ता। अप्रतिरथस्येन्द्रपुत्रस्यार्षम्*। 'आशुः' व्यापकः क्षिप्रो वा, 'शिशानः' शिश्यानः तीक्ष्णीकुर्वन् आयुधम्, प्रगृहीतायुधः, 'वृषभो न' वृषभ इव पुष्टो योद्धा, 'घनाघनः' जहि जहीत्येवं शब्दकारी, 'क्षोभणः', केषाम्? 'चर्षणीनाम्' प्रत्यनीकावस्थिताना मसुरादीनाम्, 'सङ्क्रन्दनः' समाक्रान्ता शत्रूणाम्, आह्वय च 'अनिमिषः' आदरवान् जयं प्रति, 'एक वीरः' एक एव विक्रान्तः अप्रतिद्वन्द्वः सङ्ग्रामेषु; 'शतं सेनाः' बह्वीः शत्रुसेनाः 'साकम्' अवस्थिताः 'अजयत्' एक इन्द्रो यः, तं वयं स्तुमः। एव मितरेतरविप्रतिषिद्धान्येतानि मन्त्रवाक्यानि। यद्येको रुद्रः, नासङ्ख्यातानि

---

* "आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साक मिन्द्रः॥" ऋ० सं० ८, ५, २१, १॥

सहस्राणि; अथामक्ष्णानानि, नैकः। यद्यशत्रुः, कथं शतं सेना अजयत्? अथ शतं सेना अजयन्, कथ मशत्रुः? लोके हि यान्येवंलक्षणानि वाक्यानि उन्मत्तादीनाम्, तान्यनर्थकानीति॥

“अथापि” अय मपरो हेतुर्मन्त्राणा मानर्थक्ये। कतमः? इति, उच्यते;—“जानन्तं सम्प्रेष्यति” अध्वर्युर्होतारम्। कथम्? ‘अग्नये समिध्यमानायानुब्रूहीति’*। होता हि विधिज्ञ एव भवति;—न ह्यविद्वान् विहितोऽस्तीति स विजानात्येवामुष्मिन्नवधाविदं मयानुष्ठातव्य मिति। तदेतद्विज्ञातार्थस्य सतः सम्प्रेषण मनर्थक मेव भवति। यदेतदनर्थक मेव मन्येऽपि मन्त्रा इति॥

“अथापि” अय मपरो हेतुर्मन्त्राणा मानर्थक्ये। आह;—कतमः? इति, उच्यते;—“आह” मन्त्रनिगमः “अदितिः सर्वं मिति”। आह;—किमुदाहरणम्? “अदितिर्द्यौरदितिरन्तरिक्ष मिति†” “तत्” एतदुदाहरणम् “उपरिष्टाद् व्याख्यास्यामः”‡। इह त्वेव मर्थ मिय मुदाहृता;— कथं सैव द्यौः, सा अन्तरिक्षम्? सैव माता, स एव पुत्रः, स एव पितेत्येव मादि किमपि बहुच परस्परासम्बद्ध मुच्यते? तदर्थवत्त्वे सत्युपपादयितु मशक्यम्। तस्मादनर्थका मन्त्रा इति॥

“अथापि” अय मपरो हेतुरानर्थक्ये मन्त्राणाम्। आह;—

---

* “तदु हैक आहुः। अग्नये समिध्यमानाय होतरनुब्रूहीति।” श॰ ब्रा॰ १, २, ६, २।

† “अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्॥” ऋ॰ सं॰ १, ६, १६, ५।

‡ नैग॰ ४, ४, ६।

कतमः? इति, उच्यते;— "अविस्पष्टार्थाः" अपि हि के चित् "भवन्ति"। तद्यथा,—"अम्यग्, यादृश्मिन्, जारयायि, काणुका, —इति" एव मादयः। न ह्येषां विस्पष्टार्थता मन्त्रेषु शक्यते परिज्ञातुम्,—न च केचिदर्थवन्तः के चिदनर्थका इति न्याय्य मभ्युपगन्तुम्; अर्द्धावैशसं हि स्यात्। तस्मात् सर्व एवानर्थका इति॥ परिसमाप्तः पूर्वपक्षः॥

स्वपक्षनिदानं स्थापयिष्यामः, तदर्थ मिद मारभ्यते;—"अर्थवन्तः शब्दसामान्यात्" इति। अर्थवन्त एव मन्त्रा इति प्रतिज्ञा। हेतुरुच्यते,—शब्दसामान्यादिति। समान एव हि शब्दो लोके मन्त्रे च। तथा च, य एव गो-शब्दो लोके स्वरसंस्कारयुक्तः, स एव मन्त्रेष्वपि। तच्चैवं सति, सएवार्थवान् लोके, स एव चानर्थको मन्त्रेष्विति विशेषहेतुर्नास्ति, असति च विशेषहेतावर्थवन्त एव मन्त्राः शब्दसामान्यादित्युपपद्यते। यत्पुनरेतदुक्तम,—प्रयोगानियमाल्लोकेऽर्थवत्त्वं प्रयोगनियमाच्च मन्त्राणा मानर्थक्य मिति; तत् प्रति वक्ष्याम एतत् लोकेऽपि हि प्रयोगनियमो दृष्टः। तद्यथा,—पितापुत्राविति॥

किञ्चान्यत्,—"एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाण मृग्यजुर्वाभिवदतीति च ब्राह्मणम् ( ? )"। एतदेव हि यज्ञकर्मणः समृद्धम्। तत् किम्? इति, उच्यते;—'यद्रूपसमृद्धम्' मन्त्रलिङ्गैरभिधीयते, तदेव हि समस्तवृद्ध्या युक्तं भवति, नेतरत्। एतदेव सुतरां स्पष्टीकरोति;—'यत् कर्म क्रियमाण मृग्यजुर्वाभिवदतीति च ब्राह्मण मिति'। शब्दसामान्याद् ब्राह्मणप्रामाण्याच्चेति। च-शब्दो ब्राह्मण मपि च मन्त्राणा मर्थवत्त्व मेवं दर्शयति।

अनर्थका हि मन्त्राः कथं कर्माभिवदेयुः? कथं वा ऽनभिवदन्तः समर्द्धयेयुः? अर्थवाचं वाभ्युपगतं भवता ब्राह्मणस्य? अथापि ब्राह्मणेन रूपसम्पन्ना विधीयन्ते इति अत्र ब्राह्मणेन सिद्ध मेवार्थवत्त्व मुक्तं मन्त्राणाम्। तदेत दुपदर्शित मस्माभिस्तस्मादर्थवन्त एव मन्त्रा इति ॥९॥

क्रीळन्तौ* पुत्रैर्नप्तृभिरिति यथो एतन्नियतवाचो युक्तयो नियतानुपूर्व्या भवन्तीति लौकिकेष्वप्येतद्यथेन्द्राग्नी पितापुत्राविति यथो एतद् ब्राह्मणेन रूपसम्पन्ना विधियन्त इत्युदितानुवादः स भवति यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत यथो एतद् विप्रतिषिद्धार्था भवन्तीति लौकिकेष्वप्येतद्यथाऽसपत्नोऽयं† ब्राह्मणोऽनमित्रो राजेति यथो एतज्जानन्तं संप्रेष्यतीति जानन्त मभिवादयते जानते मधुपर्कं प्राह‡ यथो एतददितिः सर्व मिति लौकिकेष्वप्येतद्यथा सर्वरसा अनुप्राप्ताः पानीय मिति यथो एतदविस्पष्टार्था भवन्तीति नैष स्थाणोरपराधो यदेन मन्धो न पश्यति पुरुषापराधः स भवति यथा जानपदीषु विद्यातः पुरुषविशेषो भवति पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति (१६§) ॥१॥

प्रथमस्याध्यायस्य पञ्चमपादः ॥ १,५.

* क-पुस्तकादन्यत्र "क्रीळन्तौ"-इत्येव पाठः, परं स संहितापाठविरुद्धः।
† "ऽसम्पन्नोऽयं" क, ख, ग। ‡ 'प्राहेति' घ, ङ, च।
§ इह षोडशखण्डः समाप्तः घ-ङ-च-पुस्तकेषु।

किं पुनः सम्पन्नरूपत्वे मन्त्राणा मुदाहरणम्? उच्यते;—"क्रीळन्तौ"—इति। "इहैव स्तं०—०गृहे"*। सूर्याया आर्षम्। विवाहे विनियुक्ता। अनुष्टुप्। 'इहैव' 'स्तं' भवतं युवां, 'स्वे गृहे' 'मोदमानौ' हर्षमाणौ 'मा वि यौष्टम्' मा च वियुज्येताम्। 'विश्वं' सर्वम् 'आयुः' व्यश्नुतं क्रीळन्तौ 'पुत्रैः' 'नप्तृभिः' पौत्रैश्च सहेत्याशीः। स्थापित मर्थवत्त्वं मन्त्राणाम्॥

अधुना परपक्षे हेतवो निराकर्त्तव्याः, तदर्थ मिद माह;—"यथो एतत्" इति। यत्पुनरेतदुक्तम्। "नियतवाचो युक्तयः, नियतानुपूर्व्या भवन्ति इति"। अत्र ब्रूमः;—"लौकिकेष्वपि" ह्यर्थवत्सु शब्देषु नियतवाचोयुक्तित्वं नियतानुपूर्व्यत्वञ्च दृष्ट मेव। "एतद्यथा,—इन्द्राग्नी पितापुत्राविति" च। तत्र, यदुक्तं नियतवाचोयुक्तित्वान्नियतानुपूर्व्यत्वाच्चानर्थका मन्त्रा इति। एतदयुक्तम्। लौकिकेष्वपि हि नियतप्रयोगाः सन्तः शब्दाः के चिदर्थवन्तो दृष्टाः, यथेन्द्राग्नी पितापुत्राविति। स एष प्रयोगनियमादनर्थका मन्त्रा इत्यनैकान्तिको हेतुः। तस्मादर्थवन्त एवेति॥

"यथो एतत्" यत्पुनरेतदुक्तम्;—"ब्राह्मणेन रूपसम्पन्ना विधीयन्त इति"। अत्र ब्रूमः;—"उदितानुवादः स भवति"। न समर्थ आत्मान मेव स्वेन रूपेण विधातु मित्यतो ब्राह्मणेन विधीयते किन्तर्हि आत्मनियोगाश्रय मुक्त मेव सन्तं मन्त्रेणार्थं ब्राह्मण मनु-

---

* "इहैव स्तं मा वि यौष्टं विश्व मायुर्व्यश्नुतम्। क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥" ऋ० सं० ८, ३, २८, २।

वक्ति विस्तरेण प्रकृतार्थसम्प्रशुश्रूषया, न ह्यनुक्तं स्तोतुं शक्यते; सोऽय मेव मुदितानुवाद एव भवति, उक्तानुवाद इत्यर्थः। अपि चानेकेऽपि समानलिङ्गाः प्रकरणे मन्त्रा भवन्ति; ते ह्यहम्पूर्विकया एकं प्रयोगं प्रति 'खले कपोत'वत्* सम्पतन्ति, तेषां समुच्चये विकल्पे च प्राप्ते सति अभिमत एको नियमार्थं ब्राह्मणेन विधीयते। एव मुभयोरर्थवत्त्वं मन्त्रब्राह्मणयोः। तत्र यदुक्तं रूपसम्पन्नविधानान्मन्त्रानर्थक्यम्, मन्त्रार्थवत्त्वे वा ब्राह्मणानर्थक्य मिति; एतदयुक्तम्। तस्मादुभय मर्थवत्—मन्त्राश्च ब्राह्मणञ्चेति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—'ओषधे त्रायस्वैनम्, स्वधिते मैनꣳहिꣳसीः,—इत्यादयः अनुपपन्नार्था भवन्ति। अत्र ब्रूमः;—ओषध्यधिदेवतोच्यते; हे ओषधे! त्रायस्वैनम्; त्वत्पूर्वको ह्येष वृक्षश्छिद्यमानः सम्यक् छिन्नो भविष्यति, ततश्च यज्ञे विनियुक्तः। प्रतिविशिष्ट मुत्कर्ष मेतस्याः स्थावरत्वात् प्राप्स्यत इत्येतत् त्राण मभिप्रेत्योक्त मोषधे त्रायस्वैन मिति, न छेदनं प्रतिपत्स्यतेऽल्प मित्यनेनाभिप्रायेण। तस्मादुपपन्नार्थ एवायम्। तत्र यदुक्त मनुपपन्नार्था इत्येवमादयो मन्त्रा इति, एतदयुक्तम्॥

यदपि चोक्तम्,—'स्वधिते मैनꣳहिꣳसी रित्याह हिꣳसन्निति'। तत्र ब्रूमः;—"आम्नायवचनादहिंसा" एषा "प्रतीयेत"। आह;—कथ महिंसा? प्रत्यक्षतो हि छिद्यते वृक्षः। शृणु;—इय महिंसा, इयं हिंसा,—इत्यागमादेतत् प्रतीयते। प्रतिविशिष्टस्थाय मेव वैदिक

* वृद्धा युवानः शिशवः कपोताः, खले यथामी युगपत् पतन्ति तथैवेति 'खल कपोत'-न्यायः। उक्तश्चैतत् सामान्यलक्षणाया नागदीक्षा मन्यत्रान्यत्र च।

आम्नाय आगमः, एतत्पूर्वकत्वादन्येषा मागमानाम्। स एष कृत्स्नस्य जगतः प्रतिविम्विष्टाय श्रेयसेऽभ्युद्यतः सन् हिंसायां कर्त्तारं विनियोक्ष्यत इति। कुत एतत् पुनरिय महिंसैव? यतोऽस्मान् नियुनक्ति कर्त्तारम्। तदेतदागमप्रत्यच मेव यथेय महिंसेति। अपि चैतदोषधि-वनस्पति-पशु-मृग-पक्षि-सरीसृपाः सम्यगुपयुक्ताः सन्तो यज्ञे पर मुत्कर्षं प्राप्नुवन्ति। सोय मभ्युदय एव सम्पद्यते, न हिंसा। तच, यदुक्त मेनं हिंसी रित्याह हिंसन्निति, न ह्यसौ हिनस्ति। किन्तर्हि? अनुगृह्णाति यज्ञः विनियोगार्थं विधानतः छिन्दन्। तस्मादुपपन्नार्थ मेव मपि। तच यदुक्त मनुपपन्नार्थत्वादनर्थका मन्त्रा इति, एतदयुक्तम् ॥

"यथो एतत्" यत् पुनरेतदुक्तम्;—"विप्रतिषिद्धार्था भवन्तीति"। अत्र ब्रूमः;—नैष विप्रतिषिद्धोऽर्थः,—"एक एव रुद्रोऽवतस्थे", "असङ्ख्याता सहस्राणि"—इति;—देवता हि महाभाग्ययोगादेकापि सत्यनेकधा भवति, अनेकापि चैकधा, तदुपरिष्टाद् व्याख्यास्यामो "माहाभाग्याद्देवतायाः (दै०का०७,१,४)" इत्यत्र ॥

यत्पुनरेतदुक्तम्;—"अशत्रुरिन्द्र जज्ञिषे", "शतं सेना अजयत् साकमिन्द्र"—इति। अत्र ब्रूमः;—"लौकिकेष्वपि" अर्थवत्सु शब्देषु "एतद्" एव मेवोच्यमानं दृष्टम्। तद् यथा;—असपत्नोऽयं ब्राह्मणोऽनमित्रो राजेति"। न हि कश्चिदसपत्नोऽस्ति लोके। उक्तं हि;—'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः। उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः'—इति। तथापि स्वल्पसपत्नं दृष्ट्वा केचिदेवं वक्तारो भवन्ति,—'असपत्नोऽयं ब्राह्मणः' इति। एव मेव कस्मिं-

श्चिदतिप्रवृद्धे भग्नं पातिते* मेघेऽन्येषा मसारता मभिप्रेत्येद मुक्तं स्यात्,—अग्रचुरिन्द्र जज्ञिषे यत्त्वा मेत मेव मतिप्रवृद्ध मद्दन्नहिम् —इति। यत् पुनरेतदुक्तम्,—'शतं सेना अजयत्'—इति। अत्र ब्रूमः ;— कुतो हि सेनाः, या इन्द्रो जेष्यति?— न हि देवानां शत्रवः सन्ति, ये जेतव्या इति। किङ्कारणम्? विभवो देवा वशिनः अधिकरण-धर्माश्च परेण महिम्ना युक्ताः। आह ;—कथन्तर्हि 'शतं सेना अज-यत्' इत्येतदुक्तम्? उच्यते ;—रूपकल्पनयैवैषा युद्धप्रवादात् स्तुतिः ; वक्ष्यति च "अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति (नैग० का० २,५,२)"—इति। तदेतद् भवता न सम्यग् दृश्यते, सम्यगन्विष्यतां देवतातत्त्वं नैरुक्तेभ्यः, ततो मन्त्रार्थानविरोधेन सम्यगवभोत्स्यसे। नैव मवाक्यतत्त्वज्ञेन मन्त्रार्थो विगाहितुं शक्यः। गम्भीर पदार्थो हि वेदः, कथ मवभोत्स्यते? वेदार्थ-विबाधविभ्रान्ता एव हि प्रवादिनः स्वबुद्धिलाघव माविर्भावयन्तो ब्राह्मणाः सन्तः सर्ववर्णसाधारणानि दर्शनान्तराणि प्रतिपेदिरे। यदुक्तं विप्रतिषिद्धार्थत्वादनर्थका मन्त्रा इति। एतदयुक्तम्। न ह्येते विप्रतिषिद्धार्थाः ;—भवत एव मतिविभ्रमो मन्दशिक्षितत्वात्। तस्मादर्थवन्त एव मन्त्रा इति ॥

"यथो एतत्" यत् पुनरुक्तम्,—"जानन्तं सम्प्रेष्यतीति"। अत्र ब्रूमः ;—लौकिकेष्वर्थवत्सु शब्देषु एतदेव स्वाभाव्यं दृष्टम्। "जानन्तम्" गुरुम् "अभिवादयते" स्वगोत्र मभिवदन्† । तथा च

* "जातिते" ख।

† यथाच "अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते (गो० गृ० सू० १,१,१२)"—इत्यादि विधानं द्रष्टव्यम्।

"जानते मधुपर्कं प्राह" त्रिर्मधुपर्को मधुपर्को मधुपर्कः इति । तदे-तदर्थवत्स्वपि शब्देषु विहितार्थव्यापनार्थशब्दसामान्यादर्थवन्तो मन्त्रा इति ॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—अथाप्याह "अदितिः सर्व मिति" । अत्र ब्रूमः ;— द्विविधा हि शब्दप्रवृत्तिः, मुख्यार्था गौणी च । तत्रैवं सति यत्र मुख्यासम्भवस्तत्र गौण्याश्रीयते। स एष भक्ति-वादोऽदितिः ; यथा कश्चिद् ब्रूयात् कश्चिदनेकोपकारे प्रवृत्तम्— 'त्वमेव मे माता, त्वं मे पिता' ; एव मेतदपि द्रष्टव्यम् । "लौकि-केष्वपि" सार्थवत्सु शब्देषु "एतत्" उच्यमानं दृष्टम्, "यथा ;— सर्वरसा अनुप्राप्ताः पानीय मिति"। ततो हि तेषां प्रभव इत्यनया गुणवृत्त्या एव मुच्यते ; एव मिहापि गुणवृत्त्या कया चिददितेः सर्वत्व-मुच्यते। यदुक्त मितरेतरविरुद्धं किमपि वक्त्रेति ; एतदयुक्तम्। सर्व-मेतदुपपद्यत एव गुणवृत्त्या । तस्मादर्थवन्त एव सर्वमन्त्रा इति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,— अथापि "अविस्पष्टार्था भवन्तीति" । अत्र ब्रूमः,—"नैष स्थाणोरपराधः" इति । न ह्यत्र स्थाणुरपराध्यति "यदेनं" स्थाणुम् "अन्धो न पश्यति" यदन्धासावभि-हन्यते। किन्तर्हि ? "पुरुषापराधः स भवति" पुरुष एवापराधी तत्र, यदसावचक्षुष्मान् । एव मिहापि नैव मन्त्राणा मपराधो यदग्नि-चितेन भवता न विज्ञायन्ते, भवत एवापराधोऽस्ति ; भो भवान् सर्व मात्मीय मपराधं मन्त्रेष्वस्मासु वा संयोजयितु मिच्छति, न तवं प्रज्ञास्ति किञ्चित् ॥

"यथा,—जानपदीषु" कासु चित् प्रवृत्तिषु इतिकर्त्तव्यतासु

कौशलविशात्कृतः "विद्यातः पुरुषविशेषो भवति"। पुरुषाणां विशेषः। एव मिहापि मन्त्रार्थविद्याकौशलकृतः पुरुषाणां विशेषो भवत्येव। तत्रैवं सति, के चित् पुरुषा येषु विस्पष्टानपि मन्त्रान् न शक्नुवन्ति निर्वक्तुम्, अपरे पुनरविस्पष्टार्थानपि शक्नुवन्ति विस्पष्टीकर्त्तुम्। तदुक्तम् "उत त्वः (ऋ० सं० ८,२,२३,४। नैघ० का० १,६,३)" —इत्यत्र ॥

तत्रैवं सति, "पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति"—इति। य एते पारोवर्यविदो ब्राह्मणाः, पारोवर्येण विजानन्ति आचार्यपरम्परया, ते पारोवर्यविदः, न साक्षात्कृतधर्माण इत्यभिप्रायः। तेषां किम्? तेषां य एव भूयोविद्यो भवति बहुश्रुतः कश्चित् स एव प्रशस्यते। य एव मन्त्रार्थविज्ञाता प्रशस्यो भवति, नेतरो मन्दबुद्धिरशिक्षितः, स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न कचित् प्रतिबध्यते; न हि तस्याविस्पष्टार्थो नाम कश्चिदस्ति। तस्माद्धेतोः स त्वं बहु शृणु, ततः सम्यगवभोत्स्यसे मन्त्रार्थान्। तत्र यदवोचः 'अविस्पष्टार्था मन्त्राः', न हि ते अविस्पष्टार्थाः; तांश्चोपरिष्टात् स्पष्टीकृत्य व्याख्यास्यामहे। तवैव मतिं भ्रमयति सम्मोहः। तस्मादर्थवन्त एव मन्त्रा इति सिद्धम्। तस्माच्चैतदपि शास्त्रं मन्त्रार्थप्रत्ययायारभ्यमाण मर्थवदेव भवतीति सिद्धः शास्त्रारम्भः। तत्र, यदुक्तं 'यदि मन्त्रार्थप्रत्ययायानर्थकं भवतीति', एतदयुक्तम्। इति प्रभिन्नेषु परस्य हेतुषु स्वपक्षसिद्धावुत्थिते च कारणे अवस्थिता मन्त्रगणस्य सार्थता, तदर्थ मेतत् खलु शास्त्र मर्थवदिति ॥ २ ॥

॥ इति निरुक्तवृत्तौ षष्ठाध्यायस्य पञ्चमः पादः ॥ ५ ॥

॥ षष्ठः पादः ॥

अथापीद मन्तरेण पदविभागो न विद्यते। अवसा-
यं पद्वते रुद्र मृळेति*। पद्वदवसङ्गावः पथ्यदन मवते-
र्गत्यर्थस्यासौ नामकरणस्तस्मान्नावगृह्णन्ति। अवसा-
याश्वानिति। स्यतिरुपसृष्टो विमोचने तस्मादवगृह्णन्ति।
दूतो निर्ऋत्या इद मा जगामेति। पञ्चम्यर्थप्रेक्षा† वा
षष्ठ्यर्थप्रेक्षा‡ वाः कारान्तम्§। परो निर्ऋत्या आ
चक्ष्वेति। चतुर्थ्यर्थप्रेक्षै‖ कारान्तम्परः सन्निकर्षः संहि-
ता पदप्रकृतिः संहिता पदप्रकृतीनि सर्वचरणानां पार्ष-
दान्यथापि¶ याज्ञे दैवतेन बहवः प्रदेशा भवन्ति तदेते-
नोपेक्षितव्यं ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति। इन्द्रं**
न त्वा शवसा देवता वायुम्पृणन्तीति। वायुलिङ्गं चेन्द्र-
लिङ्गञ्चाग्नेये मन्त्रेऽग्नि†† रिव मन्यो त्विषितः सहस्वेति
तथा‡‡ ऽग्निर्मान्यवे मन्त्रे त्विषितो ज्वलितस्त्विषिरित्य-

---

* "मृळेति" क, ग, "मृडेति" घ, ङ।
† "पञ्चम्यर्थः प्रेक्षा" क।
‡ "षष्ठ्यर्थः प्रेक्षा" क।
§ "वाकारान्तम्" घ।
‖ "चतुर्थ्यर्थः प्रेक्षै" क।
¶ "पार्षदानि। अथापि" घ।
** "इतीन्द्र" ख।
†† "मन्त्रे। अग्नि" ङ, घ।
‡‡ 'सहस्वेत्यथा" क, ख, ग। "सहस्वेति। तथा" घ।

**प्यस्य दीप्तिर्नाम भवत्यथापि* ज्ञानप्रशंसा भवत्यज्ञान-निन्दा च (१७†) ॥ १ ॥**

"अथापीद मन्तरेण पदविभागो न विद्यते"। शास्त्रारम्भप्रयोजनाधिकारे वर्त्तमाने अपीद मन्तरेण मन्त्रेष्वर्थावधारणं नास्तीत्युक्ते यदि मन्त्रेत्यादिनानर्थक्यहेतुभिर्बहुभिरानर्थक्य उपपादिते निरुक्त-शास्त्रस्य,कौत्सेन मन्त्राणा मर्थवत्तां स्थापयित्वा परपक्षहेतवः प्रत्युक्ताः। तेषु स्थित मर्थवत्त्वं मन्त्राणाम्। तेषा मर्थनिर्वचनायेद मारभ्यमाण मर्थवदित्युपपन्न मर्थवत्त्वं निरुक्तशास्त्रस्य। तदेतत् सर्व मपि चोदक-शास्त्रकारव्याजेन प्रसक्तानुप्रसक्त मुक्तं प्रज्ञाया विवृद्धये शिष्यस्य। कथन्नामा सा विवृद्धप्रज्ञा? शब्दार्थन्यायसङ्करेषु हेतुसमयानभिज्ञः परैः प्रतिबध्यमानोऽपि पदार्थान् वाक्यार्थांश्चासम्मोहेन निर्ब्रूयादि-ति। एवन्तावत्, एतदन्तरेण मन्त्रार्थप्रत्ययो नास्ति। अथेद मपर मारम्भप्रयोजन मित्येवं विशेषाधिकारार्थोऽय मथ-शब्दः। अपि मन्त्रार्थप्रत्यय इद मन्तरेण नास्ति, नाप्यस्ति यदिदं वक्ष्यमाणम्; इत्यपि-शब्दः एवं सम्भावने।

आह;—किम्पुनस्तद् वक्ष्यमाणम्? इति, उच्यते;—'पदविभागः'। 'एवं पदानि वक्तव्यानि'—इत्येतद् विभागपरिज्ञानं नास्तीत्यर्थः। किं कारणम्? अर्थवशेन हि पदान्यवतिष्ठन्ते, न चेद मन्तरेणार्थ-परिज्ञान मस्ति। तस्मादत एव पदविभागप्रसिद्धिरिति। इद

---

* "भवति॥ अथापि" च।

† "इत्येव सप्तदशखण्डः समाप्तो घ-ङ-च-पुस्तकेषु।

मर्थवत्त्वं मन्त्राणां मन्त्रेण पदविभागोऽप्यकिञ्चित्करः। प्रसिद्धश्चैष* सर्वशाखासु। तस्मात् पदविभागार्थवत्त्वाच्च सार्थवन्तो मन्त्रा इति केचिद् वर्णयन्ति॥

एवं प्रतिज्ञाय समाससंहितेषु ग्रन्थेष्वर्थहेतुकं पदविभागविशेषं दर्शयति, तद्यथा;—"अवसाय पद्वते रुद्र मृळेति"। "पद्वत्" पादवत् पादसंयुक्तम्। "अवसं गाव पथ्यदनम्" इति निगमप्रसक्तस्य पर्यायवचनम्। "अवतेर्गत्यर्थस्यासो नामकरणः" प्रत्ययः। "तस्मात्" असमासत्वादस्य "नावगृह्णन्ति" एतत्पदकारा इति शेषः। "मयोभूः ०—० रुद्र मृळ"†। सुचरो नाम गौतमः‡ स मयोभूरित्यस्यास्त्रिष्टुभः पूर्वैस्त्रिभिः पादैः गवा माशिष माशास्योत्तमेन तासा मेव च रुद्रात् सुख मयाचत। गवा मुपस्थाने विनियुक्ता§। 'मयोभूः' मयोभावयिता पाश्चात्यो 'वातः', एताः 'उस्राः' 'अभि वातु' आभिमुख्येन वातु। किञ्च, तेन सुखभुवा वातेनानुद्वेजनीयेन स्पृश्यमानाः 'ऊर्जस्वतीः' प्रभूतरसाः 'ओषधीः' 'आ रिशन्ताम्' आस्वादयन्तु।

---

* स्वरपदविभाग इत्यर्थः। सन्त्येव सर्वास्वेव शाखासु यथा संहिताग्रन्थानि, तथैव तत्तत्पदग्रन्थानि च। तथा हि;—सामवेदीय कौथुम-शाखायाः संहिताग्रन्थारम्भवाक्यमेतत्,—"अग्न आयाहि वीतये", पदग्रन्थारम्भवाक्यञ्चैतत्,—"अग्ने। आ। याहि। वीतये"—इति। संहितापदयोः स्वरपार्थक्ये स्वरसूचकान्येव नियामकानि।

† "मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम्। पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृळ॥" ऋ० सं० ८, ८, १० १॥

‡ 'कक्षीवद्गोतमस्य शबरस्यार्षम्'—इति सायणीय ऋग्भाष्यम्।

§ 'गां प्रतिष्ठमाना अनुमन्त्रयेत०' आ० गृ० २, १०।

आस्वाद्यास्वाद्य च सलवणस्वाद मात्माभिप्रेते काले उदकं 'पिबन्तु'। तच्च पीत मोषधिसहित मासां तथा कोष्ठे विपच्यतां रस-शोणित-मांस-मेदो-मज्जा-ऽस्थि-क्रमेण यथैताः पीवस्वत्यो भवेयुः। 'पीवस्वतीः' पीवगुणयुक्ताः स्थूला बलवत्यो बहुपयस्काः सति च बहुपयस्त्वे 'जीवधन्याः' जीवधनिन्योऽरोगदुष्टमातृकाः(?)। हे 'रुद्र!' वयम् एतासां गवाम् एताम् आशिषम् आशास्महे। त्व मप्यस्मै गोलक्षणाय 'पद्वते' 'अवसाय' पथ्यदनाय 'मृळ' सुखो भव। मैनां हिंसीस्त्व माशा मीश्वर इत्यभिप्रायः॥

"अवसायाश्वानिति"। इद मपर मुदाहरणम्। अस्मिन् पूर्वेण रूपेण सरूप मेव पद मर्थकृतात् विशेषादवगृह्णाति। द्वयोः पदयोः बहूनां वा पदविच्छेदेनोच्चारणं स समासः। तयोरेवार्थविभागोपदर्शनार्थं मवच्छेदेन ग्रहण मवग्रहः। तदेतदवगृह्यते पदम्,—"स्यतिः" धातुः "विमोचने" अर्थे वर्त्तते, स पुनः "उपसृष्टः" उपसर्गेणावेत्यनेनोपसृष्टः संयुक्त इत्यर्थः। यतो धातूपसर्गविभागोपप्रदर्शनार्थ मेव तत् पद मवगृह्येत अवसायेत्येतत्। "योनिष्टे॰—॰प्रपित्वे"*। एतया त्रिष्टुभा कुत्स आङ्गिरस इन्द्रं तुष्टाव। "योनिष्टे"। हे 'इन्द्र'! 'योनिः' स्थानं 'ते' तव यदिदं 'निषदे' निषदनाय, मया 'अकारि' कृतम्, 'तं' योनिं तत् स्थानम् 'आ निषीद' एत्य निश्चयेन सीद। कथम्पुनर्निषीद? 'स्वानो न' स्वन्यमान इव 'अर्वा' अश्वः। संशब्द्यमान इवाश्वत्वन्ध्येनाश्वः स यथा स्वे स्थाने निषीदेदेवं मया त्व मपि

* "योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा। विमुच्या वयोऽवसायाश्वान् दोषा वस्तोर्वहीयसः प्रपित्वे॥" ऋ॰ सं॰ १, ७, १८, १।

मध्यमानस्तुतिभिरेतस्मिन् मया संस्कृते स्वास्तीर्णे बर्हिषि स्थाने निषीद। कथम्पुनर्निषीद? 'विमुच्य' एतान् 'वयः अश्वान्'। कुतः? रथात्। पुनरपि च एतान् 'अन्नसाय' वियोज्य रश्मिभ्योऽश्वान् लब्धोदकयवसान् कृत्वा 'दोषावस्तोर्वहीयसः' अहनि च रात्रौ च ये के चिद् वहन्ति, तेभ्योऽपि वहीयसः शीघ्रतमेन जवेन वोढृतमान् ततस्त्वं स्वस्थो भूत्वा निषीद। एतस्मिन् योनौ एतस्मिन् संस्कृते बर्हिषि 'प्रपित्वे' प्राप्ते अस्माकं त्वद्-यजनकाले मा नो विघ्नं कार्षीरित्यभिप्रायः॥ एवन्तावदिद मवग्रह्य मिद मनवग्रह्य मित्यर्थपरिज्ञानद्वारेण "तस्माद्" एतन्निरुक्तशास्त्रात् विज्ञायते॥

यान्यपि च खल्वनवग्रह्याणि पदानि समाससंहितानि, तेषा मप्यर्थज्ञान मेव विभागवैशेष्यं भवति। तद्यथा,—"दूता निर्ऋत्या इद माजगामेति पञ्चम्यर्थप्रेक्षा वा" अस्मिन् पदे पञ्चम्यर्थदर्शनं वेत्यर्थः, पञ्चम्यर्थोऽत्र दृश्यते? "षष्ठ्यर्थप्रेक्षा वा" षष्ठ्यर्थदर्शनं वेत्यर्थः, षष्ठ्यर्थोऽत्र दृश्यते? अत एतत् "आःकारान्तम्" पदं निर्ऋत्या इति। "देवाः कपोत०—० चतुष्पदे" *। प्रचेता नामाङ्गिरसः, तेनेयं कपोतसूक्ते दृष्टा। कपोतनिलयनशान्त्यै कपोतपदहरणएतत्सूक्तम्। त्रिष्टुबेषा। हे 'देवाः!' 'कपोतः' 'इषितः' प्रेषितः 'निर्ऋत्याः' स्वभूतः, तयैवानुप्रेषित इत्येवं षष्ठ्यर्थः। अथवा निर्ऋत्याः सकाशादित्येवं पञ्चम्यर्थः। 'यत्' कर्तुम् 'इच्छन्' 'इदम्' अस्मद्गृहम्

---

* "देवाः कपोत इषितो यदिच्छन् दूतो निर्ऋत्या इद माजगाम। तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे॥" ऋ० सं० ८, ८, १२, १।

'आ जगाम'। यस्य नः पापस्य च पापकर्मणो जन्मान्तरकृतस्य एतत् कपोतगृहनिलयनं तत्प्रदर्शनं च कुद्यादिषु विपाकलिङ्गम्। 'तस्मै' कर्मणे तदर्थं युष्मानेव 'अर्चाम'। समर्था यूय मेतत् पापकर्म विपच्यमान मस्माक मपहर्तुं मृजु विपाकं वा कर्तुं वय मपि च तस्मै पापकर्मणे 'कृणवाम' 'निष्कृतिम्' निष्क्रमणं निर्णेजनम्, तपसा एतद्भूतानुरूपेण। यतो ब्रूमः;—'शं नः' सुखं नः 'अस्तु', 'द्विपदे चतुष्पदे' युष्मत्प्रसादेन च स्वेन तपसेत्यभिप्रायः॥

"परो निर्ऋत्या आ चक्षेति"। एतस्मिन् पदे "चतुर्थ्यर्थप्रेक्षा" चतुर्थ्यर्थदर्शनम्। अत एतत् पदम् "ऐकारान्तम्"। "अपेहि मनसस्पते०—०मनः"*। प्रचेता नाम आङ्गिरस एता मनुष्टुभ मपश्यत्। दुःस्वप्रदर्शने विनियुक्ता। मन इति विज्ञान मुच्यते, बुद्ध्यादि; तस्य पतिः मनसस्पतिरात्मा; इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः। उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानापसंहारस्येशाते। तयोरन्यतरः सम्बोध्यते,—हे 'मनसस्पते!' 'अपेहि' अप गच्छ। अस्मत्तो गत्वा च त्व मीषदपगम्य अस्मत्तः,समीप एव मा स्था अस्माकम्। किन्तर्हि? 'अप क्राम' दूर मपेत्य क्राम। अपक्रम्य च 'परः' परतः, अन्यचास्मत्तः 'चर' अपुनरावर्त्तमानो ऽस्मान् प्रति। किञ्च 'परः' परागत्य, यस्याः त्वं दूतः निर्ऋत्याः, तस्यै 'निर्ऋत्यै' 'आ चक्ष्व'। कि मिति? 'बहुधा जीवतो मनः'। अथवा 'परः' प्रकृष्टम् आप्तस्त्वं तस्याः 'निर्ऋत्याः' दूतो मां प्राप्तः। अविज्ञातमरणकाल एवाति-

* "अपेहि मनसस्पतेऽपक्राम परश्चर। परो निर्ऋत्या आ चक्ष्व बहुधा जीवतो मनः॥" ऋ० सं० ८, ८, ११, १।

सम्मोहितो ब्रवीमि। तस्मै 'निर्ऋत्यै' गत्वा 'बहुधा' अनेकप्रकारम् 'आ चक्ष्व' कथय। 'जीवतः' यादृशं मनः भवति, तादृशं मम 'मनः' बुद्ध्यादिकरणज्ञानदिनकरकिरणसम्पर्कनिलेन तावत् स मुमुर्षुरिति तदाचक्ष्व। मुमूर्षोर्हि उपक्षीणकर्मणा नातिस्पष्टा इन्द्रियवृत्तयो भवन्ति, न च मम तथेत्यभिप्रायः॥ एवं समाससंहितानामपि पदानामर्थभेदकृतं विभागत्रैलक्षण्यम्। स चार्थ इह मन्त्रेण न विज्ञायते। अत इदमुक्तम्,—'अथापीदं मन्त्रेण पदविभागो न विद्यते' इति॥

पदविभागप्रसक्तमधुना संहितालक्षणमाह;—"परः सन्निकर्षः संहिता (पा० १,४,१०८)"—इति। परः प्रकृष्टो यः सन्निकर्षः संश्लेषः, परस्परेण स्वराणां स्वराधिरूढानाञ्च व्यञ्जनानां सा संहितेत्युच्यते। या च पुनरियं "पदप्रकृतिः संहिता (ऋ० प्राति० २,१)"। अत्र द्विविधा वर्णयन्ति। पदानां या प्रकृतिः, सेयं पदप्रकृतिः संहिता। किं कारणम्? संहितातो हि पदानि प्रक्रियन्ते; तस्मात् संहितैव प्रकृतिः, विकारः पदानीत्येवमेके मन्यन्ते। अपरे पुनः, पदप्रकृतिः संहितेति पदानि प्रकृतिर्यस्याः सेयं पदप्रकृतिरिति। किं कारणम्? पदान्येव हि संहन्यमानानि संहिता भवति; तस्मात् पदान्येव प्रकृतिः, विकारः संहितेति॥

एवञ्च कृत्वा "पदप्रकृतीनि सर्वचरणानां पार्षदानि"। सर्वेषां चरणानां सर्वशाखान्तराणामित्यर्थः। किम्? पार्षदानि, स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रहप्रगृह्यक्रमसंहितास्वरलक्षणमुच्यते। तानीमानि "पार्षदानि" प्रातिशाख्यानीत्यर्थः। आह;—किं

तेषाम्? इति। उच्यते;—तानि पदप्रकृतीनि। पदं येषु संहितायाः प्रकृतित्वेन चिन्त्यते; तानीमानि पदप्रकृतीनि। तेषा मपि स एव समय इत्यभिप्रायः।

आह;—किम्पुनरत्र साधीयः,—पदानां प्रकृतित्वम्, संहिताया विकारत्वम्? उत वा विकारत्वं पदानाम्, प्रकृतित्वं संहितायाः? इति। उच्यते;—संहितायाः प्रकृतित्वं ज्यायः। आह;—किं कारणम्? उच्यते;— मन्त्रोऽह्यभिव्यज्यमानः पूर्वं ऋषेर्मन्त्रदृशः संहितयैवाभिव्यज्यते,न पदैः; अतश्च संहिता मेव पूर्वं मध्यापयन्त्यनूचाना ब्राह्मणाः, अधीयते चाध्येतारः; पदैरेव विनियोक्ष्यन्ते मन्त्राः कर्मसु। न त्वेतत् सर्वं मस्ति। तस्मादेतैर्विशेषहेतुभिः संहितैव प्रकृतिर्न पदानीति पश्यामः, समयमात्र मितरत् स्वशास्त्रनियत मेव। यदुक्तं पदप्रकृतीनि सर्वचरणानां पार्षदानि, तेष्वेव हि व्याख्यायमानेषु पदानां प्रकृतित्वं भवति; न सर्वत्रैव। तस्मात् संहितैव प्रकृतिरित्येतद्साधीय इति॥

"अथापि याज्ञे दैवते न बहवः प्रदेशा भवन्ति"। अथेद मपर मारम्भप्रयोजन मस्य शास्त्रस्येत्येवं विशेषाधिकारार्थोऽय मथ-शब्दः। अपीदं वक्ष्यमाण मपि यान्युक्तानीत्येव मपि-शब्दः सम्भावने। आह; —किम्पुनस्तत्? इति। उच्यते;— यज्ञे कर्मणि प्रवर्त्तमाने दैवतेन बहवः प्रदेशा भवन्ति, दैवतेन लिङ्गेन बहवो विधिषु देशा भवन्ति। तद्यथा;—उपतिष्ठते व्युष्टवत्या मैन्द्र्यासदः, आग्नेय्याग्नीध्रवैष्णव्या हविर्द्धान मित्येव मादि। न्यायविदः खल्वपि याज्ञिकाः पठन्ति;— लिङ्गतो मन्त्राणां शेषभाव मधिकृत्य, लिङ्गक्रमसमाख्यानात्काम्य-

युक्तं समाम्नाम मित्यधिकारे,—एवञ्च मन्त्रविधेरेतदाख्येयेषु मिष्टत्वा-
दिति चैव मादि*।

तत्रैवं सति "ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र स्म इति"। ते यद्यप्यत्र
ब्रूयुः, किमिति? लिङ्गज्ञाः, लिङ्गज्ञातारो वय मत्र एतस्मिन्नाम्नाये,
लिङ्गतो वय मत्र यद्यस्मिन् देवतायां तत्र विजानीमः। विज्ञाय च
तद्दैवत एव कर्मणि विनियुञ्ज्महे तं मन्त्रम्। एवञ्च सति न नो
निरुक्तशास्त्रेण प्रयोजन मस्तीति लिङ्ग मस्माकं ज्ञापक मिति के-
चिद् वर्णयन्ति।

एवं ब्रुवतो वक्तव्याः,—यदि यूयं लिङ्गतो मन्त्रदेवतां विजा-
नीध्वे, "इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति (ऋ०सं० ४,५,
६,२)"—इत्येतस्मिन् मन्त्रे का देवता? इति।

आह;—केन पुनरभिप्रायेणास्मिन् मन्त्रे देवता पृच्छ्यते? इति।
उच्यते;—"वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे"। अत्र तावद्य
माग्नेयो मन्त्रः, अथ च तावदेतस्मिन् मन्त्रे इन्द्रवायू अपि श्रूयेते;
तदेतद् दुःपरिज्ञानं लिङ्गमात्रेण, कतमदत्र प्रधानं देवताभिधानम्?
कतमदत्र नैघण्टुकम्? इति। ते चेद् याज्ञिका लिङ्गमात्रमिदक्त
मुपेक्ष्य मन्त्रान् कर्मसु विनियुञ्जाना गुणप्रधानभाव मजानन्तो
देवताभिधानाना मेकमन्त्रगताना मन्यदेवतमन्त्र मन्यदेवते कर्मणि
विनियुञ्जीरन्, ततस्तायथाकरणात् कर्मासमृद्धिः स्यात्। न च केवलं

---

* 'तद्देवेनोपेक्षितव्यम्'—इत्यंशस्य व्याख्यानं न क्वापि पुस्तके। ततव्याख्यानमात्
त्यक्त मित्यनुमीयते।

कर्मासमृद्धिरेव। किन्तर्हि? अपध्वंसोऽपि स्यादेव दुरिष्टहेतुकः। तस्मात् परिज्ञेयं निरुक्तम्। तेन हि गुणप्रधानभावः शक्यते विज्ञातु मेकमन्त्रगतानां देवताभिधानाना मिति। तदेतदेवं देवतापरिज्ञान-द्वारेण पुरुषस्य प्रति विशिष्टोपकारकारि। तस्माद् युज्यते प्रारब्धु मिति॥

"त्वाᳪहि मन्द्र०—० नृतमाः" *। भरद्वाजस्यार्षम्। आग्नेयी। प्रातरनुवाकाश्विनयोर्विनियोगः। हे 'अग्ने!' 'त्वां हि' त्वा मेव 'मन्द्र-तमं' मृदुतमं सुखाराध्यतमम्; त्वं हि देवेषु सर्वेषु मृदुहृदयतमो यतः, अतस्त्वा मेव 'ववृमहे' सम्भजामहे। केन? अर्कशोकैः। एकपद-मेतत्। अर्चनैर्मन्त्रैः शोकैर्दीप्तैः यथोक्तब्रह्मचर्यजनितवीर्यैः। स 'नः' त्वं भज्यमानः तैः मन्त्रैः संसेव्यमानः 'महि' महत् स्तोत्रं तैरेव मन्त्रैर्युष्मद्गुणानुस्मृतिसन्तानगर्भैरुपग्रथितं 'श्रोषि' शृणु। किञ्च, एवं त्वं महती देवता, येन 'त्वा' त्वा मेवैकं 'देवताः' अपि सर्वा 'इन्द्रं न' इन्द्र मिव च 'वायुम्' इव च 'शवसा' बलेन बलाहुतिभिः अभ्यर्चन्ति। किम्पुनः स्वैः कर्मभिः? येऽपि च के चिदन्ये त्रिलोके नृणां मध्ये बलधनश्रुतैः 'नृतमाः' तेऽपि च त्वा मेव 'पृणन्ति' पालयन्ति पूरयन्ति वा। 'राधसा' हविर्लक्षणेन धनेन। एवं सदेवमनुष्यस्य जगतः पूज्यस्त्वं न केवल मस्माक मिति।

एव मय माग्नेयो मन्त्रः, स एव लिङ्गमात्रदर्शनेनाविज्ञातप्रधान-देवतो विनियुज्यमान ऐन्द्रे वायव्ये वा कर्मणि कर्त्तुरभिप्रेत-

* "त्वां हि मन्द्रतम मर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने। इन्द्रन्न त्वा शवसा देवता वायुम्पृणन्ति राधसा नृतमाः॥" ऋ० सं० ४, ५, ९, १।

फलसिद्धे नालं स्यात्, कर्मवैगुण्याच्च कर्त्तुरपध्वंसाय स्यात्। तस्माद् विज्ञेयं मन्त्रदेवतानिश्चयज्ञानाय निरुक्त मिति॥

"अग्निरिव मन्यो त्विषितः सहस्वेति"*। यथा पूर्वस्मिन्नाग्नेये वायुलिङ्ग मिन्द्रलिङ्गं च, "तथा" एतस्मिन्नपि "मान्यवे मन्त्रे"। ("अग्निः" अग्निलिङ्गं नैघण्टुकम्। एव मनेकदेवतालिङ्गसङ्कटेषु दुरवधारं देवतातत्त्व मनेकशो नाप्रसिद्धमन्त्र †) व्याख्यानसमयेन॥

यदुक्तं लिङ्गज्ञातारो वय मत्र लिङ्गत एव मन्त्रान् कर्मसु विनियोक्ष्यामहे, न नो निरुक्तेन प्रयोजन मस्तीत्येतदयुक्त मिति। "त्विषिरित्यप्यस्य दीप्तिर्नाम भवति" अपठित मपि दीप्तिनामसु ‡ न केवलं यान्येव पठितानि, अन्यान्यपीति॥

"अथापि" इद मपर मारम्भप्रयोजन मस्याः। आह;—किम्? इति। उच्यते;—"ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च" ज्ञानञ्च प्रशस्यते, अज्ञानञ्च निन्द्यते। तत्रैवं सति वय मनिन्द्याः स्यामः प्रशस्याश्चेति ज्ञेयं निरुक्तम्। अतो हि आध्यात्माधिदैवताधियज्ञाभिधायिनां मन्त्राणा मर्थाः परिज्ञायन्ते, ते च परिज्ञाताः सन्तः पुरुषस्योत्तमाय श्रेयसे भवन्ति। तदेव मखिलपुरुषार्थोपकारसमर्थशास्त्र मिति न्याय्य मारब्धुम्॥ १॥

---

* मध्यमो-चिह्नान्यनैतानि पदानि क-पुस्तके न दृश्यन्ते, लिपिकरप्रमाद एवात्र बीज मनुमीयते।

† अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि। हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व॥' ऋ० सं० ८, ३, १९, ४।

‡ "त्विषेर्वा स्याद् दीप्तिकर्मणः" दै० का० ८, ९, १०।

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा। यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति* कर्हिचित्। स्थाणुस्तिष्ठतेरर्थोऽर्त्तेररणस्थो† वा (१८‡) ॥ २ ॥

क पुनर्ज्ञानं प्रशस्यते ऽज्ञानं च निन्द्यते? इति। उच्यते;—लोके, शास्त्रे च। लोके तावद् यः कश्चिद् विद्वान् भवति, स पूज्यते पुण्यफलैरपिभिर्जनैः, तदेतत् प्रत्यक्षत एव दृष्टम्। शास्त्रेऽपि "स्थाणुरयं भारहारः"—इत्यादि। स्थाणुर्वृक्षः, स यथा पत्रपुष्पफलाना मात्मीयानां धारणमात्रेणैव सम्बध्यते,—न तद्गन्धगन्धरसरूपस्पर्शोपभोगसुखैः; एवञ्च "किलासावधीत्य§ वेदं न विजानाति योऽर्थम्", तस्य वेदस्याध्ययनभारमात्र मेव स्कन्धे बिभर्त्ति। "योऽर्थज्ञ इत् सकलं भद्र मश्नुते" य एवार्थज्ञो भवति, न ग्रन्थमात्राध्येता; स एव सकल मनवखण्डितं भद्रम् अश्नुते, अर्थपरिज्ञानफल मश्नुते प्राप्नोति। किम्पुनस्तत्? इह लोके पूज्यता मुपेत्य शिष्टानाम्, इतो लोकादन्तकाले "नाक मेति" यत्रासुखं किञ्चिदपि नास्ति, आध्यात्मिक माधिदैविक माधिभौतिकं वा ||, तत् स्थान मेति निरतिशयम्।

---

* "तज्ज्वलति" कालिटिप्पणे सर्वत्र। "तु ज्वलति" च। † "ऽर्णोऽररणस्थो" ख, ङ।

‡ इत्यष्टादशखण्डः समाप्तो ख-ङ-च-पुस्तकेषु। च-पुस्तके स्वराङ्कभेदा अपि।

§ मूलपाठविरुद्ध एष पाठः।

|| "क मिति सुखनाम, तत् प्रतिषिद्धम्। प्रतिषिध्येत 'न वा अमुं लोकं जग्मुषे किञ्च नाकम्'। न वा अमुं लोकं गतवते किञ्च नासुखम्। पुण्यकृतो ह्येव तत्र गच्छन्ति"—इति नैम० का० २, ४, १।

कस्मात् पुनरसावीदृशं स्थान मेति? इति। उच्यते;—इतः। यस्मादसौ "ज्ञानविधूतपाप्मा"। ये हि नाकगमनप्रतिबन्धिनः पाप्मानः, ते तस्य ज्ञानेन विधूताः; अतोऽसावेति नाकम्। युक्तञ्चान्यत्रापि;—न हि ज्ञानेन सदृशं पवित्र मिह विद्यते इति।

अथवा स्थाणुर्गर्द्दभः। स यथा चन्दनभारं वहत्येव, तदुपभोगै-र्नाभि सम्बध्यते; एवं किलासौ यो ग्रन्थमात्राध्येता, नार्थज्ञः। एवं तावदस्मिन् ज्ञानं प्रशस्तम्॥

अथैतस्मिन् अज्ञानं निन्द्यते;—"यद् गृहीत मविज्ञातम्"—इति *। यद् गृहीतं गुरुमुखात्, अविज्ञातं चार्थतः। किञ्च "निगदेनैव शब्द्यते" निगदमात्रेणैव नित्यकालं शब्द्यते उच्चार्यते, न पुनरर्थतो विचार्यते। आह;—किं तस्य? उच्यते;—"अनग्नाविव शुष्कैधो न तज्ज्वलति † कर्हि चित्"। शुष्कं काष्ठ मनग्नौ प्रक्षेप्तं नालं ज्वलनाय प्रकाशाय। एवं यो वेदार्थस्यानभिज्ञोऽध्येता स वेदाध्ययनभारमात्रेणैव सम्बध्यते, न तु तदीयेन फलेन; परिज्ञा-नन्तु श्रेयसा चाभ्युदयेन च युनक्तीति। तस्मादेतत्परिज्ञानाय अवश्यं निरुक्तशास्त्र मारब्धव्य मिति॥

स्थाणु-शब्द मर्थ-शब्दं च उदाहरणप्रसक्तौ निर्वक्ति;—"स्थाणुस्ति-ष्ठतेः"। स्थितो ह्यसौ नित्यकाल मेव भवति, न कदाचिद्यासौ-दिति। "अर्थोऽर्त्तेः" गतिकर्म्मणः; अर्यते ह्यसावर्थिभिः। "अरणस्थो वा" यदास्य स्वामी अरति गच्छति इतो लोकादमुं लोकं तदाय

* पातञ्जलमहाभाष्ये पस्पशाया मपीदं वचनं दृश्यते।

† "न तज्ज्वलति" इत्येव मेव पा० भा० पाठः।

मिहैव तिष्ठति, नानेनैव सहामुं लोकं गच्छति दीनारादि*रर्थः ; तत्सामान्यादितरोऽपि शब्दार्थोऽर्थ उच्यते ।

एवं तावत् शिष्टानुगमस्तौ ज्ञानं प्रशस्यते, अज्ञानञ्च निन्द्यते ॥२॥

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्। उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः। अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्ध† मप्येकस्मै तन्वं विसस्र इति स्व‡ मात्मानं§ विवृणुते ज्ञानं प्रकाशनमर्थस्याहानया वाचोपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु (सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु)॥ यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसा। तस्योत्तरा भूयसे निर्वचनाय (१९¶) ॥ ३ ॥

न केवलं स्मृतावेव ज्ञानप्रशंसा अज्ञाननिन्दा च । किन्तर्हि ? वेदेऽपि ;—"उत त्वः पश्यन् (ऋ० सं८,२,२३,४)"—इति। विद्यासूक्ते द्वे अप्येते ऋचौ बृहस्पतेरार्षम् । 'उत'-शब्दोऽपि-शब्देन समानार्थः । 'त्वः' एक इत्यर्थः । बहूना मपि समानपृष्ठोदरपाणिपादानां

---

* दीनारः सुवर्णमुद्राविशेषः। "दीनारेऽपि च निष्कोऽस्त्री" अम०को० २, ना०, १४ ।

† "माहार्थं" क, ख, ग। ‡ "स्वय" ग, ङ। § "मानं" ङ।

|| वक्रमौचिह्नान्तर्गतपदानि क-ख-ग-पुस्तकेषु न सन्ति ।

¶ इत्येकोनविंशखण्डसमाप्तिर्दृश्यते घ-ङ-च-पुस्तकेषु ।

समान मेवाध्ययन मधीयानानाम् एकः कश्चित् 'पश्यन्' अपि 'वाचं' मनसा स्वभ्यस्ताध्ययनोऽपि तीक्ष्णधियः सन् 'न ददर्श' न पश्यत्येव अर्थानभिज्ञत्वात्। स हि तां सम्यक् पश्यति, यस्तस्या अर्थं विजानाति। अर्थपरिज्ञानफला हि वागित्यभिप्रायः। एव मेकः 'शृण्वन्' अपि 'न शृणोति' 'एनां' वाचम्। य एव हि अर्थ मवबुध्यते वाचः, तेनैव सा सम्यक् श्रुता भवति, नेतरेण ; इतरो ह्यविद्वान् ध्वनिमात्र मेवोच्चारयति वाचम्। एवम् "अर्धम्" अनेनार्द्धर्चेन "अविद्वांस माह" निन्दन् मन्त्रदृक्। साम्प्रत मुत्तरेणार्द्धर्चेनार्थज्ञं प्रशंसन्नाह ;—'उतो त्वस्मै' "अप्येकस्मै" कस्मै चिदर्थज्ञाय 'तन्वं' शरीरं 'वि सस्रे' विस्रंसयति विवृणोतीत्यर्थः। अर्थो वाचः शरीरं तं विवृणोति आत्मानं दर्शयत्येवास्मै कस्मैचिदर्थज्ञाय "प्रकाशन मर्थस्याहानया वाचा" अनेन तृतीयेन पादेनेत्यर्थः। कथन्तर्हि विवृणुते तन्वम्? इति, अतः ;— "उपमोत्तमया वाचा" उत्तमेन पादेनोच्यते ;—"जायेव पत्य उशती सुवासाः"—इत्यनेन। यथा हि 'जाया' विवृतसर्वाङ्गावयवा भूत्वा 'उशती' "कामयमाना" 'पत्ये' इष्टाय भर्त्रे प्रेम्णा दर्शयेदात्मानम्। कस्मिन् काले? यदा 'सुवासाः' भवति, निर्णिक्तवासा भवति। निर्णिक्तवासा नीरजस्का "ऋतुकालेषु", तदा ह्यतितरां स्वपुरुषं प्रार्थयते। अत एतयाऽस्ययोपमीयते। "यथा सः" पुरुषस्ताम् "एनां" यथावत् "पश्यति" स्त्रियम्, नेतरां या ह्यनपटप्रावृत-सर्वगात्रा*। एवं "सः" एवैतां वाचं यथावत् "शृणोतीति"। यः

---

* नेतरे यो ह्यनपद्प्रावृतसर्वगात्रां"— इति (?) ख।

पदशोऽवच्छिद्यैतां विगृह्य वार्थ मस्याः पश्यति समस्तस्त मेव मस्या मृचोयम् "अर्थश्रप्रशंसा" ॥

अपीय मपरा ऋक् "तस्याः" एव "उत्तरा"* अस्यैवार्थस्य प्रकृतस्य ज्ञानप्रशंसाख्यस्य फलाभिधानद्वारेण "भूयसे" बहुतराय अमुना फलेनाभिसम्बन्धात् प्रतिविशिष्टज्ञान मित्येवं "निर्वचनाय"। निर्विविच्य निर्द्धार्य वचनं कथनं निर्वचनम्, तस्मै निर्वचनाय ॥ २ ॥

उत त्वं सख्ये स्थिरपीत माहुर्नैनं हिन्वन्त्यपि वाजिनेषु। अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफला मपुष्याम्। अप्येकं वाक्सख्ये स्थिरपीत माहू रममाणं विपीतार्थं देवसख्ये रमणीये स्थान इति वा विज्ञातार्थं यन्नाप्नुवन्ति वाग्ज्ञेयेषु बलवत्स्वप्यधेन्वा ह्येष चरति मायया वाक्प्रतिरूपया नास्मै कामान् दुग्धे वाग्दोह्यान् देवमनुष्यस्थानेषु यो वाचं श्रुतवान् भवत्यफला मपुष्या मित्यफलास्मा अपुष्या वाग् भवतीति वा किञ्चित्पुष्य-† फलेति वार्थं वाचः पुष्पफल माह याज्ञदैवते पुष्पफले देवता‡ध्यात्मे वा§ ॥ ४ ॥

---

* एतच्च 'तस्योत्तरा'—इत्यत्र सन्धिर्वैदाङ्गत्वेन वेदवद्भावात्।

† "किञ्चित् किम्पुष्प' च।

‡ 'दैवता" इतिसम्मतपाठः।

§ नेदं वाक्यसमाप्तिः ग-ङ-च-पुस्तकेषु।

तद्यथा;—"उत त्वं सख्ये स्थिरपीत माहुः (ऋ०सं० ८,२,२४, ५)"—इति। "अप्येकम्" अपि बहून् विदुषः "सख्ये" सखिभावे, कतरस्मिन् "देवसख्ये" समानख्यानतायां देवसायुज्ये इत्यर्थः। वक्ष्यति हि,—"यां यां देवतां निराह; तस्यास्तस्यास्ताद्भाव्य मनुभवति (प०का० १३,१३)"—इति। अथवा, "देवसख्ये" रमणीये स्थाने। यस्मिन् देवानां सखिभावः, तद्देवसख्यं स्थानम्; तस्मिन् देवसख्ये रमणीये स्थाने, देवलोके इत्यर्थः। किम्? इति 'स्थिरम्' अविचालिनम् अप्रच्यवनधर्माणम्। क मेव माहुः? "विपीतार्थम्", आपीतार्थं गृहीतार्थं मित्यर्थः। क एव माह? इय मेव "वाक्" ऋक्संहिता। किञ्च, "नैनं हिन्वन्त्यपि वाजिनेषु"। 'एनं' वागर्थज्ञं 'न हिन्वन्ति' नानुगन्तुं शक्नुवन्ति। केषु? 'वाजिनेषु' "वागज्ञेयेषु" अर्थेषु "बलवत्सु "अपि" दुर्ज्ञेयेषु दुरवघटनीयेषु; समुद्रपिहितरत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्त्तव्येषु। स हि तान् व्याकर्त्तुं शक्नोति, नेतरे मन्दबुद्धयो बहवोऽपि समागताः शक्नुवन्ति तानर्थान् व्याकर्त्तुम्, यानसौ व्याकरोति। अत एतदुक्तम्;—"नैनं हिन्वन्त्यपि वाजिनेषु"। अपि एवं तावदर्थज्ञः प्रशस्तः॥

अथेदानी मविद्वानुत्तरेणार्द्धर्चेन निन्द्यन्ते;—"अधेन्वा चरति" "अधेन्वा हि एष चरति"; न हि सा वाक् हिनोतीह न परत्र च, यस्या अर्थो न परिज्ञायते। तया गृहीतयैव ता मधीयान इतस्ततश्चरति, तत् प्रधान एव सर्वतः पर्यटतीत्यभिप्रायः। किञ्च, मायर्यैषः चरति गृहीतया। यथा हि कश्चिन्मायया सुवर्णं * किम्र्यात्,

* "सुवर्णः" च।

एव मर्त्यं "वाचम्" एव एतां बिभर्त्ति। सा तादृशी भ्रियमाणा "वाक्"। किं करोति? "नास्मै कामान् दुग्धे"। कतमान्? ये तस्या वाचो दोग्धव्याः। क? "देवतास्थानेषु मनुष्यस्थानेषु" च। "यः"। किं करोति? य एवं 'शुश्रुवान्' "श्रुतवान् भवति"। कथम्? "अफला मपुष्पा मिति" एवं यः श्रुतवान् भवति, एभ्यः सकाशात् श्रुत्वा च दृढयाहेण गृहीत्वावस्थितो भवति; अध्ययना-दृते नान्यदस्ति वाचि किञ्चित् मृग्य मिति। तस्मै किम्? इति "अफलैवास्मा अपुष्पा" च "वाग् भवतीति"। यथैव ह्यसौ पश्यति अफलेय मपुष्पा चेति तथैव भवतीत्यभिप्रायः। अथ "वा" "किञ्चित् पुष्पफलेति वा"। एतदुक्तं भवति,—अल्पफला मल्पपुष्पा मिति। किङ्कारणम्? अस्ति ह्यध्ययनमात्रे किञ्चिदल्पं फलम्, नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः*। आह;—किम्पुनर्वाचः पुष्पफलम्? इति। उच्यते;—"अर्थं वाचः पुष्पफल माह" एत-स्मिन् मन्त्रे मन्त्रदृगाह। कः पुनरसावर्थः? इति। याज्ञदैवत मध्यात्म मित्येष वाचः समासतोऽर्थः। स पुनरेष रूपककल्पनया पुष्प-फलविभागेन द्विधा प्रविभज्यते,—"याज्ञदैवते" पुष्पफले "दैव-ताध्यात्मे वा" † इति। यज्ञपरिज्ञानं याज्ञम्, देवतापरिज्ञानं दैव-तम्, आत्मन्यधि यद् वर्त्तते तदध्यात्मम्। स एष सर्वोऽपि मन्त्र-ब्राह्मणराशिरेवं त्रिधा विभक्तः। तत्रैवं सति,—यदा अभ्युदयलक्षणो

* यास्कस्याभिप्राय इत्यर्थः।

† सर्वमूलपुस्तकविरुद्ध एष पाठः।

धर्मोऽभिप्रेयते, तदा याज्ञपुष्पं दैवतफलम्। किं कारणम्? पूर्वं हि पुष्पं भवति फलार्थम्, याज्ञ मपि पूर्वं तन्यते देवतार्थम्; इत्येतस्मात् सामान्याद् याज्ञं पुष्पम्, दैवतं फलम्। यदा पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते, तदोभे एव याज्ञदैवते पुष्पत्व मेव बिभृतः। दैवते हि याज्ञ मन्तर्भूत मेव तदर्थत्वात्, अतो न पृथगुच्यते। यत् पुन रधिदैवतं सर्व मपि प्रतिविशिष्टज्ञानेनोपासकेन मुमुक्षुणा निरूप्य चेतसा आत्मान मेव प्रतिसम्पाद्यते कार्यकारणाधिदेवताद्वारेण, सोऽय मेव मधिदैवत मधियज्ञं चोच्छ्रियाध्यात्म मेवाभि सम्पादयति; तथा पुष्पभाव मुच्छ्रिय पुष्पं फलभावायेति। एवं सोऽय मात्मयाज्येवाभि सम्पद्यते। तत्रैवं सति,—अध्यात्मार्थत्वादधिदैवतस्य, अध्यात्मस्य च पुरुषार्थस्य निष्पन्नत्वाद्, दैवतं पुष्पम्—अध्यात्मं फल मित्युक्तम्॥ ४॥

साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्सम्प्रादु*रुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च बिल्मं भिल्मं भासन† मिति वैतावन्तः समानकर्माणो धातवो धातुर्दधातेरेतावन्त्यस्य सत्त्वस्य नामधेयान्येतावता मर्थाना मिद मभिधानं नैघण्टुक मिदं देवताना

---

* "प्राड" क।

† "भासन"—इति हस्तिग्रन्थधृतपाठः, परं सर्वमूलग्रन्थविरुद्धः।

मप्राधान्येनेद मिति तद्यदन्यदैवते* मन्त्रे निपतति नैघण्टुकं† तत्‡ ॥ ५ ॥

आह ;—कुतः पुनरिद मायातं निरुक्तशास्त्रं प्रधान मितराणि शास्त्राणि ? इति । उच्यते ;—"साक्षात्कृतधर्माण ऋषयो बभूवुः"। साक्षात्कृतो यैर्धर्मः साक्षाद् दृष्टः प्रतिविशिष्टेन तपसा, त इमे साक्षात्कृतधर्माणः । के पुनस्ते? इति । उच्यते ;—ऋषयः । ऋषन्ति अमुष्मात् कर्मण एव मर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवंलक्षणं फलविपरिणामो भवतीत्यृषयः । "ऋषिर्दर्शनात् (नै० २,३,२)"—इति वक्ष्यति । तदेतत् कर्मणः फलविपरिणामदर्शन मौपचारिक्या-वृत्त्योक्तम् ;—साक्षात्कृतधर्माण इति । न हि धर्मस्य दर्शन मस्ति ; अत्यन्तापूर्वो हि धर्मः ।

आह ;—किन्तेषाम्? इति । उच्यते ;—"तेऽवरेभ्योऽसाक्षात्कृत-धर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः"। ते ये साक्षात्कृतधर्माणस्तेऽवरेभ्यः अवरकालीनेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः । तेषां हि श्रुत्वा ततः पश्चादृषित्व मुपजायते§, न यथा पूर्वेषां साक्षात्कृतधर्मणां श्रवण मन्तरेणैव । आह ;—किं तेभ्यः ? इति । उच्यते ;—ते अवरेभ्य उपदेशेन शिष्योपाधिकया वृत्त्या मन्त्रान् ग्रन्थतोऽर्थतश्च सम्प्रादुः सम्प्रदत्तवन्तः, तेऽपि चोपदेशेनैव जगृहुः ।

---

* "चान्यदैवते" क, ख, ग । "चान्यदेवते" घ ।

† "निघण्टुकं" क ।

‡ इहापि खण्डसमाप्तिर्न घ-ङ-च-पुस्तकेषु ।

§ आख्यायोपाख्यानं द्रष्टव्यम् । ऋ० सं० ५, ५, ११, १—१९ ऋचः ।

अथ तेऽपि "उपदेशाय ग्लायन्तोऽवरे बिल्म-* ग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"—इति। उपदेशाय उपदेशार्थम्। कथं नामोपदिश्यमान मर्थ मेते शक्नुयुर्ग्रहीतु मित्येत मधिकृत्य ग्लायन्तः खिद्यमानास्तेष्वनुग्रहं कुर्वन्ति, तदनुकम्पया तेषा मायुषः सङ्कोच मवेक्ष्य कालानुरूपाञ्च ग्रहणशक्तिम्। बिल्मग्रहणायेमं ग्रन्थं गवादि देवपत्न्यन्तं समाम्नातवन्तः। किमेत मेव? नेत्युच्यते;—वेदं वेदाङ्गानि च इतराणीति।

कथम्पुनः समाम्नासिषुः? इति, आह;—शृणु। वेदं तावदेकं सन्त मतिमहत्त्वाद् दुरध्येय मनेकशाखाभेदेन समाम्नासिषुः, सुखग्रहणाय व्यासेन समाम्नातवन्तः। तद्यथा,—एकविंशतिधा बाह्वृच्यम्, एकशतधा आध्वर्यवम्, सहस्रधा सामवेदम्, नवधा आथर्वणम्। वेदाङ्गान्यपि। तद्यथा,—व्याकरण मष्टधा, निरुक्तं चतुर्दशधा इत्येवमादि। एवं समाम्नासिषुर्भेदेन ग्रहणार्थम्। कथं नाम? भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना अल्पायुषो मनुष्याः,—इत्येव मर्थं समाम्नासिषुरिति।

बिल्मग्रहणं भाष्यवाक्यस्थं निर्ब्रवीति;— यदेतद् "बिल्मम्" इत्युक्तम्, एतद् "भिल्मम्" वेदानां भेदनम्। भेदो व्यास इत्यर्थः। "भाषण मिति वा" †। अथ वा भासन मेव बिल्म-शब्देनोच्यते ‡।

---

* अत्र सर्वत्रैव, मत्सम्पादितेषु सर्वेष्वेव हस्तिपुस्तकेषु बिल्वेति वोपधः पाठो दृश्यते, परं सर्वमूलग्रन्थविरोधात् रोथ्-सम्पादितपाठानुरोधाच्च न मुपेक्ष्य बिल्मेति मोपध एव स्वीकृतः।

† "भासन मिति वा"—इत्येव सर्वमूलपुस्तकपाठः।

‡ "बिल्मं शिरस्त्राणम्" इति महीधरः। य० वा० सं० १९, ९५।

वेदाङ्गविज्ञानेन भाषते प्रकाशते वेदार्थं इति । अत इदं मुक्तं निरुक्त मिति । एवं भिदेर्भाषतेर्वा निरुक्तशब्दः । एव मिदं मृषिभ्यो निरुक्त-शास्त्र मागत मितराणि चाङ्गानीति परिशोधित आगमः ॥

अथेदानीं निघण्टुसमाम्नायविरचना वक्तव्या प्रकरणत्रयविभागेन सुखव्याख्यानार्थं मस्य शास्त्रस्य। सेय मुच्यते;—"एतावन्तः समान-कर्माणो धातवः"—"एतावन्त्यस्य सत्त्वस्य नामधेयानि" इति। स एष पदराशिर्नैघण्टुकं नाम प्रकरणम्। एतावन्त इति य चैषु धातुषु व्याख्यातपदेषु प्रतिनियता सङ्ख्या, साभिप्रेयते । तद्यथा,—"गति-कर्माण उत्तरे धातवो द्वाविंशशतम् (नै० का० ३,२,३)", "कान्ति-कर्माण उत्तरे धातवोऽष्टादश (नै० का० ३,२,३)"—इत्येव मादि। एतावन्त्यस्य सत्त्वस्येति या नामसु प्रतिनियता सङ्ख्या, साभिप्रेयते। तद्यथा,—"पृथिवीनामधेयान्येकविंशतिः *, "हिरण्यनामान्युत्तराणि पञ्चदश (नै० का० २,३,१)"—इत्येव मादि। यत्रैतावर्थौ प्रायेण चिन्त्येते, प्रसङ्गतोऽन्यद् यत् किञ्चित्। एवंलक्षणं, नैघण्टुकं नाम प्रकरणम्। गवादि; प्राक् "जहा (नैग० का० ४,१,१)"—शब्दात्।

अथ पुनर्यत्र "एतावता मर्थाना मिद मभिधानम्"—इत्यर्थः प्रायेण चिन्त्यते। तद्यथा;—"आदित्योऽप्यकूपारः०—०समुद्रोऽप्य-कूपारः (नैग० का० ४,३,२)"—इत्येव मादि । अनवगतसंस्काराश्च निगमाः जहादयः प्रायेण चिन्त्यन्ते, प्रसङ्गतोऽन्यद् यत् किञ्चित्। अथ पुनर्यत्र "नैघण्टुकं", "देवतानाम् अप्राधान्येन" अस्मिन् मन्त्रे

* "इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि"—इत्येवं यास्कीयः पाठः। नै० का० १,१,१ ।

"इदम्"* अन्यदत्र प्राधान्येन वर्त्तत इत्ययं विभागः प्रायेण चिन्त्यते। तदेवंलक्षणम् ऐकपदिकं नाम प्रकरणम्, जहादि; प्राक् अग्नि-शब्दात् (दै०का० १,३,६)।

दैवतं नाम प्रकरणम्, अग्निशब्दादि देवपत्न्यन्तम् (दै०का० १२, ४,१०)। तान्येतानि त्रीणि प्रकरणानि,—नैघण्टुकम्, ऐकपदिकम्, दैवतम् इति। अनेन प्रकरणत्रयविभागप्रपञ्चेनेद मवस्थितं निरुक्त-शास्त्र मिति।

"तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्"। इद मुक्तं नैघ-ण्टुक मिदं देवताना मप्राधान्येनेद मिति, तत्र न ज्ञायते कि मिद मुक्तं भवति; तदेतल्लक्षणत उपदिश्यत इति पर्युपयुक्तस्तच्छब्दः। यद् अभिधानम् अन्यदैवते, अन्या यस्मिन् प्रधानदेवताः सोऽय मन्यदै-वतः, तस्मिन् अन्यदैवते मन्त्रे। य मर्थ मन्यस्यां प्रधानायां मन्त्र-देवतायां निपतति निगमयति अभिप्रयुज्यमान मङ्गभावं गच्छति मन्त्रवाक्ये नैघण्टुकं तदित्युच्यते गुणभूत मित्यर्थः। सञ्ज्ञा हि तस्येय मस्मिञ्छास्त्रे ॥ ५ ॥

अश्वं न त्वा वारवन्तम्। अश्व मिव त्वा† वालवन्तं‡ वाला दंशवारणार्था भवन्ति दंशो दशतेः। मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठा

---

* मूलेऽत्र इदमिति वारद्वयं श्रूयते।

† "त्वां" च।

‡ "वालावन्तं" च।

मृगो मार्ष्टेर्गतिकर्म्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव कुचर इति चरतिकर्म्म कुत्सित मथ चेद्देवताभिधानं क्वायं न चरतीति गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वार्द्धमासपर्व देवानस्मिन् प्रीणन्तीति तत् प्रकृतीतरत्सन्धिसामान्यान्मेघस्थायी मेघोऽपि गिरिरेतस्मादेव तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवत मित्याचक्षते तदुपरिष्टाद् व्याख्यास्यामो नैघण्टुकानि नैगमानीहेह* (२०†) ॥ ६ ॥

तद्यथा ;—"अश्वन्न त्वा ०—० अध्वराणाम्" ‡। अस्या मृचि अश्वो नैघण्टुकः, अग्निः प्रधानम्। शुनःशेपस्यार्षम्। गायत्री। वारवन्तीयानुशंसने विनियुक्ता। साम्नस्य वारवन्तीयस्य§ एषा योनिः॥। 'अश्वं न त्वा' अश्व मिव त्वां हे अग्ने! 'अग्निम्' अग्ने नेतारं देवानां, 'वारवन्तं' वालवन्तं वृषाश्वम्। स हि अतितरां वालवान् भवति।

---

* "नैगमानीह" घ-पाठः, परं नैष सम्यक्, अध्याय-समाप्तावन्तिमपदादिद्विरुक्तिव्यवहारस्य सर्वत्र वैदिकग्रन्थेषु दर्शनात्।

† इहैव विंशखण्डः समाप्तो घ-ङ-च-पुस्तकेषु। एव मेव खण्डच्छेद आदरणीयो भवेद्, अनुपदवक्ष्यमाणसमाम्नायादिखण्डप्रतीकावलिपाठसामञ्जस्यानुरोधात्।

‡ "अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः। सम्राजन्त मध्वराणाम्॥" ऋ॰ सं॰ १, २, २२, १।

§ सा॰ सं॰ गे॰ गा॰ १, १, १०।

|| सा॰ सं॰ छ॰ आ॰ १, १, २, ७।

वन्द्यते परिचर्यते च। न तथान्ये। त मिव त्वां 'वन्दध्यै' वन्दामहे स्तुमः। 'नमोभिः' नमस्कारैः, अन्नैर्वा हविर्भिर्घृतैः। क्व पुनरवस्थितम्? कथं वा वन्दामहे? इति 'सम्राजन्तं' दीप्यमानम् 'अध्वराणां' यज्ञानां मध्येऽवस्थित मुत्तरवेद्यादिषु धिष्ण्येषु अभिप्रेतार्थसिद्धये वन्दामहे॥

वाल-शब्दस्य निगमप्रसक्तस्य निर्वचनम्;—"वाला दंशवारणार्था भवन्ति"। तैर्हि दंशादयो निवार्यन्ते। दंश-शब्दस्य प्रसक्तस्य निर्वचनम्;—"दंशो दशतेः" इति। दशति ह्यसौ॥

द्वितीय मुदाहरणम्;—"मृगो न भीमः०" इति *। गयो नामेन्द्रपुत्रः, तस्येय मार्षम् †। त्रिष्टुप्। वैमृधस्य हविषो याज्या (आ० सू० २,१०)। इन्द्रोऽस्य प्रधानम्, मृगो नैघण्टुकः। 'मृगो न' मृग इव; व्याघ्रो वा सिंहो वा। 'भीमः' भीषणः। 'कुचरः' कुत्सितचरणः हिंस्रः, प्राणिबधजीवनः। 'गिरिष्ठाः' पर्वताश्रयः। स यथा कश्चिदन्यं प्राणिविशेषं हन्ति। तैरनभिभूयमान इह कर्मणि हे 'इन्द्र!' एतदस्मद्वचः कुरु। 'सृकम्', यः शत्रुकार्येषु सर्त्तुं शक्नोति। 'परावतः' परस्मात् अतिदूरस्थानात्, 'परस्याः' दिवः सम्बन्धिनः 'आ जगन्थ' आगच्छ। एतदर्थं मागत्य च ते 'पविं' वज्रं 'संशाय'

---

* "प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥" ऋ० सं० २, १, १४, १। किञ्च, "मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः। सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताळ्हि वि मृधो नुदस्व॥" ऋ० सं० ८, ८, १८, १।

† एवचाहभिक्षेपात्, (८, १८, १)।

तिक्ष्णीकृत्य 'तिग्मं' छेदनायोत्साहवन्तं सुनिशितं कृत्वा ततो 'वि ताळ्हि' विताड़य, एतानस्मच्छत्रून् ('शत्रून्') एकप्रहारवर्जितदेहान् कुरुष्व। यानपि च न हि छिनत्सि कथञ्चित् तानपि 'मृधः' हिंसकान् 'वि नुदस्व' नानाप्रकारं प्रेरयस्व दूर मपुनरागमनाय॥

"अथ चेद् देवताभिधानम्" एतत् कुचर इति, ततः "क्वायं न चरतीति" सर्वत्र चरतीति। "गिरिष्ठा मेघस्थायी" इति च। अनुपक्षीणशक्तयो हि विभवो वेदशब्दा यथाशक्तं पुरुषाणा मर्थाभिधानेषु विपरिणममानाः सर्वतोमुखा अनेकार्था न भवन्ती त्येतदनेन प्रदर्शितं भवतीत्यथ चेद् देवताभिधान मिति॥

मृगादिशब्दान् निगमप्रसक्तान् निर्ब्रवीति;—"मृगो मार्ष्टेर्गतिकर्मणः" नित्यं ह्यसौ गच्छति। "भीमो बिभ्यत्यस्माद्" सर्व एव ह्यस्माद् बिभेति। भीमशब्दं सारूप्यप्रसक्तं निराह;—"भीमोऽप्येतस्मादेव" इति। "कुचर इति, चरति कर्म कुत्सितम्" चरति ह्यसौ कर्म कुत्सितम्, व्याघ्रो वा सिंहो वा। "क्वायं न चरतीति" देवताभिधानत्वे। "गिरिः पर्वत"। "समुद्गीर्णो भवति" समस्तो ह्यसावुद्गीर्ण इव भूमौ भवति॥

पर्वत-शब्दं पर्यायाख्यानप्रसक्तं निराह;—"पर्ववान् पर्वतः" इति। शिला-शिखर-सन्धिभिरसौ तद्वान् भवति। पर्व-शब्दं विग्रहप्रसक्तं निराह;—"पर्व पुनः पृणातेः" पूरणार्थस्य। पूरयन्ति हि ते शिलाशिखरसन्धयोऽखिलं पर्वतम्। "प्रीणातेर्वा" तर्पणार्थस्य। तत् पुनरेतत् "अर्द्धमास-पर्व"। किं कारणम्? "देवान् अस्मिन्" हविर्भिः "प्रीणन्तीति"। "तत्प्रकृतीतरत्-सन्धिसामान्यात्"

कालसन्धिश्च शिलासन्धिश्च समानं सन्धित मिति देवताभिधानपक्षे "मेघस्थायी" गिरिष्ठाः। "मेघोऽपि गिरिरेतस्मादेव" असावपि समुद्गीर्णो भवति अन्तरिक्षलोके ॥

"तद् यानि नामानि प्राधान्यस्तुतीनां देवतानां, तद्दैवत मित्याचक्षते। तद् उपरिष्टाद् व्याख्यास्यामः। नैघण्टुकानि नैगमानि इह इह"। तदेतदुच्यते;—सामान्यलक्षणोपलक्षितप्रकरणत्रयविभागेनावस्थितो गवादिर्देवपत्न्यन्तः समाम्नायोऽय मानुपूर्व्या व्याख्यास्यत इति पर्युपयुक्तः तच्छब्दः। यानि नामानि प्राधान्यस्तुतीना मग्न्यादीनाम्; प्रधानभावेन याः स्तूयन्ते निपातभाक्त्वेन ता एता प्राधान्यस्तुतयो देवताः, तासां यानि नामान्यग्न्यादीनि देवपत्न्यन्तानि, तानि सर्वाण्यपि समुदितानि सन्ति। एतयैकया सामान्यया प्रकरणमञ्ज्ञया आचक्षते आचार्याः। कतमया? उच्यते;—दैवत मित्येतया। निरुक्ताहीय मेतस्मिन् नैघण्टुकशब्दसमुदाये सञ्ज्ञेत्यभिप्रायः। तत् पुनरेतद् दैवतं प्रकरण मुपरिष्टाद्* व्याख्यास्यामोऽस्य शास्त्रस्य। आह;—किङ्कारणम्? उच्यते;—गुणपदेषु व्याख्यातेषु प्रधानदेवतापदानि सुखं व्याख्यास्यन्त इत्यनेनाभिप्रायेण। देवतापरिज्ञानं तत्फलाभिधाननिष्ठं च कथं नामेदं शास्त्रं स्यात्? इति;—यानि पुनर्नैघण्टुकानि गवादीनि†, नैगमानि च जहादीनि‡, तानीह प्रकरणद्वये नैघण्टुके चैकपदिके च; व्याख्यास्याम इत्येतदेवानुवर्त्तते। त एते गवादयो देवपत्न्यन्ताः§ निघण्टवः,तदेकदेशो नैघण्टुकं प्रकरणमिति निघण्टु-

---

* उत्तरषट्के, उत्तरार्द्धे वा।　　† १भा०, ४ पृ०—३८८ पृ०।

‡ १भा०, ३८९ पृ०—४५८पृ०।　　§ १भा० १पृ०—४९० पृ०।

सञ्ज्ञया व्यवहारो लोके *;—'निघण्टु मधीमहे', 'निघण्टु मध्यामहे' इति। शास्त्रे† खल्वपि नैघण्टुकं प्रकरण मिति‡। नैगम मित्यैकपदिकम्§। नैघण्टुकानि नैगमानि पदानि चेह|| प्रकरणद्वये व्याख्यास्यामः॥

अध्यायपरिसमाप्तिलक्षणार्थः परितोषार्थो वा द्विरभ्यास इति॥६॥

॥ इति निरुक्तवृत्तौ षष्ठाध्यायस्य¶ षष्ठः पादः॥ ६ ॥

इति निरुक्तटीकायां जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ षष्ठोऽध्यायः (प्रथमोऽध्यायः) समाप्तः ॥१॥

१ २ ३ ४ ५
(समाम्नायस्तच्चतुष्टमतोऽन्येऽर्थनिपातावायुर्वात्वा-
६ ७ ८ ९ १० ११ १२
ननूनंनूनंसातक्षाऽन्वोऽक्षण्वन्तोनिष्ठक्रासोहविर्भिरि-
१३ १४ १५ १६ १७ १८
तीमान्यथापियोयथोहिन्वथापीदमर्थवन्तोऽयापीदंस्थाणु
१९ २०
रयमुतत्वःपश्यन्नुतत्वंसख्ये विंशतिः** ॥)

॥ इति निरुक्ते पूर्वषट्के प्रथमोऽध्यायः ॥ १ ॥

---

* प्रथमभागस्य। एतन्मूलपञ्चस्येति यावत्।

† यास्ककृतेऽस्मिन् निघण्टुभाष्ये इति यावत्।

‡ द्वितीयाध्यायादि तृतीयाध्यायान्त मध्यायद्वयम्।

§ चतुर्थाध्यायादि षष्ठाध्यायान्त मध्यायत्रयम्।

|| पूर्वषट्के, पूर्वार्द्धे वा।

¶ निघण्टुनाममूलपञ्चीयैः पञ्चभिरध्यायैः सह सङ्कलनयास्य भाष्यप्रथमाध्यायस्य षष्ठत्व मिति बोद्धव्यम्।

** क-ख-ग-घ-पुस्तकेषु नास्त्येतत् सङ्ग्रहवाक्यम्, इतिग्रन्थविरुद्धञ्च; परं माद्-रचीय मेव तथैवाध्यापकाध्ययनव्यवहाराच्छिन्नाप्रभृतिष्वप्येव मेव दृश्यते च। एतदनुसारत एव सङ्ग्रहश्चेदाश्च लोकार्थ्याः। बोद्धव्याश्च ते सर्वत्र चन्द्रमौलिका-नामैताध्ययनानुसारैस्तत्तृतीयचतुर्थपञ्चमीपाठाश्च।

## ॥ अथ द्वितीयाध्यायः ॥

तत्र,

### ॥ प्रथमपादः ॥



ॐइम् *। अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ † स्यातां तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केन चिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयान्न संस्कार माद्रियेत विषयवत्यो ‡ हि वृत्तयो भवन्ति यथार्थं विभक्तीः सन्नमयेत् प्रत्त मवत्त मिति धात्वादी एव शिष्येते § ॥ १ ॥

"अथ निर्वचनम्"। नामाख्यातोपसर्गनिपातलक्षण मुक्त्वा शास्त्रारम्भ-प्रयोजनानि च वेदाङ्गव्यूहं च सप्रयोजनं निघण्टुसमाम्नायविरचनां च प्रकरणत्रयविभागेनोक्त्वा दैवत मुल्लङ्घ्य नैघण्टुकनैगमे प्रकरणे पुरस्कृते नैघण्टुकानि नैगमानीहेति। ते पुनरेते निर्वचनलक्षण मनुक्त्वा न शक्येते व्याख्यातुं यस्मात्, 'अथ' एतस्मात् कार-

---

* "ॐ" क। "ॐ १" ङ। ख-ग-च-पुस्तकेषु नास्त्येव।

† "विकारेष्वान्वितौ।" क, ख, ग, घ; परं छन्दिविरुद्धः।

‡ "विशयवत्यो" क, घ।

§ घ-ङ-च-पुस्तकेषु नेह खण्डसमाप्तिः।

करः, तं हि ता अधिष्ठाय पान्ति रक्षन्ति। स हि कर्मणा श्रान्तः, तासु पीतासु विश्रान्त आप्यायितो भवति। विग्रहप्रसक्तं निरुच्यते;—"दासो दस्यतेः (दि॰प॰)" स हि "उप दासयति" उपक्षयति कृष्यादीनि "कर्माणि"। "अहिगोपाः" "अहिना गुप्ताः"। "अहिः" कस्मात्? उच्यते;—"अयनात्"; "एति" हि असौ "अन्तरिक्षे"। शब्दसामान्यान्निरुच्यते;—"अय मपीतरोऽहिः" सर्पः "एतस्मादेव" असावपि हि एति। अथ वा "निर्ह्रसितोपसर्गः" स्यात्। कथम्? "आ हन्ति" असौ भोगेनेत्यादिः। आङ्-पूर्वस्य हन्तेः (अदा॰प॰), स पुनरय मुपसर्गं निर्ह्रस्य ह्रस्वं कृत्वा अहिरुच्यते। "पणिर्वणिग् भवति"—इति पर्यायेण तत्त्ववचनम्। "पणिः पणनात्" पणिति असौ व्यवहारं करोति। पर्यायप्रसक्तं निरुच्यते;—"वणिक् पण्यं" वणिजो यत् द्रव्यं तत् पण्यम्, तदसौ "नेनेक्ति" नित्यकालं शुची-करोति मूल्यार्घं स्यादिति। "बिलं भरं भवति", "बिभर्त्तेः (जु॰प॰)" धातोः; भृतं हि तदुदकादिभिः। "वृत्रो वृणोतेर्वा (स्वा॰उ॰) वर्त्ततेर्वा (भू॰आ॰) वर्द्धतेर्वा (भू॰आ॰)"—इत्येषां धातूना मन्यतमस्य। ब्राह्मण मपि चैतस्मिन्नर्थे भवति;—"यदवृणोत्" अन्तरिक्ष मुदकं वा, महत्त्वात् "तद् वृत्रस्य वृत्रत्वम्"—"इति" एवं ब्राह्मणेऽपि "विज्ञायते" विचार्यमाणो ज्ञायते। अथ वा "यद-वर्त्तत" इन्द्रेण हतो वृत्रो मेघः अपां बिले अपावृते अपः वृष्टिभावेन अवर्त्तयत् प्रावर्त्तयत्, "तद् वृत्रस्य वृत्रत्वम्"। अथ वा "यद् अवर्द्धत" असावतिमात्रप्रमाणम्, "तद् वृत्रस्य वृत्रत्वं" स्यादिति * ॥ ३ ॥

॥ इति निरुक्तवृत्तौ सप्तमाध्यायस्य पञ्चमः पादः ॥ २, ५.

* १आ॰ ०१४॰ (१८) द्रष्टव्यम्।

## ॥ षष्ठः पादः ॥

रात्रिनामान्युत्तराणि त्रयोविंशती रात्रिः कस्मात् प्ररमयति भूतानि नक्तञ्चारीण्युपरमयतीतराणि ध्रुवी करोति रातेर्वा स्याद्दानकर्मणः प्रदीयन्तेऽस्या मवश्याया उषो नामान्युत्तराणि षोडशोषाः * कस्मादुच्छतीति सत्या रात्रे रपरः कालस्तस्या एषा भवति ॥ १ (१८) ॥

"काष्ठा इत्येतदनेकस्यापि सत्वस्य भवति (२१५पृ० ५पं०)"— इत्यत आरभ्य दिङ्नामप्रसक्तानुप्रसक्त मुक्तम्; प्रकृत मिदानी मुच्यते;— "रात्रिनामान्युत्तराणि त्रयोविंशतिः" † । रात्रेर्नामानि 'रात्रिनामानि' । 'उत्तराणि' इति प्रकृतेभ्यो दिङ्नामभ्यः; तमः-षतन्त्रा हि रात्रिः, तस्य च तमसो दिक्ष्वेवात्मलाभो भवति, अतो दिङ्नामभ्य उत्तराणि रात्रिनामानि। कियन्ति पुनस्तानि? 'त्रयोविंशतिः' त्रीणि च विंशतिश्च त्रयोविंशतिः (२३)। कतमानि पुनस्तानि? "श्यावी, क्षपा, शर्वरी"—इत्येव मादीनि ‡ । श्याववर्णा हि रात्रिरिति श्यावी। स्वैः स्वैः कर्मभिः अहनि क्षीणान् प्राणिनः इयं स्वापेन पातीति क्षपा; अस्यां हि सुप्ताः पुनर्नवा इव प्राणिनः प्रात-

---

* "षोळषोषाः" क, ख।

† १भा० ४१ पृ० ७पं०।

‡ १भा० ४९—४८ पृ०।

स्तिष्ठन्ति। शरण मस्यां स्वापार्थं श्रियत इति शर्वरी। इत्येव मादि सर्वत्र योज्यम्॥

आह;—"रात्रिः कस्मात्?" इति। उच्यते;—इयं ह्यागच्छन्ती प्रकर्षेण रमयति। कानि? "भूतानि नक्तञ्चारीणि"* पिशाचादीनि; तानि हि विगतेऽहनि रात्र्या मुपस्थितायां प्राप्तोऽयं विहारसमयः इति प्रकर्षेण रमन्ते। "उपरमयतीतराणि ध्रुवीकरोति" इतराण्यपि दिवाचारीणि सैवोपरमयति; तस्यां ह्युपस्थितायां दिवाचराणि भूतानि मनुष्यादीनि इतिकर्त्तव्यताभ्यः उपरमन्ति, उपरम्य च स्थिरीभवन्ति निवासाय। "रातेर्वा स्यात् दानकर्मणः" दानार्थस्य†। आह;—किं मस्यां प्रदीयते? उच्यते;—"प्रदीयन्तेऽस्या मवश्यायाः" अवश्य मायन्तीत्यवश्यायाः, तुषारा इत्यर्थः; ते हि रात्रौ निपतन्ति॥

"उषोनामान्युत्तराणि षोडश"‡ उषसो नामानि। रात्रेरेव ह्यपरः कालः उष आख्यो भवतीति रात्रिनामभ्य 'उत्तराणि उषोनामानि'। कियन्ति पुनस्तानि? 'षोडश' (१६)। षट् च दश च षोडश। कतमानि पुनस्तानि? "विभावरी, सूनरी"—इत्येव मादीनि§। विविधां भियं भासं वृणोतीति विभावरी। शोभनं नराणा मस्या मुत्थानं भवतीति सूनरी। इत्येव मादि निर्वचनं योज्यम्॥

---

* "नक्तञ्चराणि" इ॰ क, च।

† १भा॰ १५५पृ॰ (४)।

‡ १भा॰ ४८पृ॰ ८ प॰।

§ १भा॰ ४८—५४पृ॰।

आह;—"उषाः कस्मात्?" इति। उच्यते;—"उच्छतीति सत्याः"। 'उच्छी विवासे (भू०प०)'; विवासयति हीयं तमांसि तस्मादुच्छतीत्येव मत्या एतस्मिन् कर्मणि सत्याः कर्त्तरि कारके भाष उषा इत्येतदभिधानं भवति। आह;—का पुनरियं मुषाः? इति। उच्यते;—"रात्रेरपरः कालः" स उषा इत्युच्यते। आह; —कथ मेतदुच्यते रात्रेरपरः कालः उषाः? इति। उच्यते;— "तस्याः" उषसः राज्यपरकालत्वम्। "एषा" निर्वाचिका ऋग् "भवति"— ॥ १ ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरागांच्चित्रः प्रकेतो अंजनिष्ट विभ्वां। यथा प्रसूता सवितुः सवायं एवा रात्र्युषसे योनिं मारैक्॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततम मजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनि मरिचत्* स्थानं स्त्रीयोनिरभियुत† एनां गर्भस्तस्या एषापरा भवति ॥ २ (१९) ॥

इदं श्रेष्ठ मिति‡। आङ्गिरसस्य कुत्सस्येय मार्षम्, उत्तरा च। उभे अपि त्रिष्टुभावेते, प्रातरनुवाकाश्विनयोः प्रस्येते। "इदम्" उषोलक्षणं "ज्योतिः", "श्रेष्ठम्" आदित्यादीनां "ज्योतिषाम्" इति

---

* "मरिचित्" क।

† "रमियुत" क।

‡ ऋ० सं० १, ८, १, १।

निर्द्धारणे षष्ठी। आदित्यो हि तापकः प्रकाशकः, चन्द्रमा अथ निशीतः प्रकाशकश्च, इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकञ्च। इत्येत मादित्यादीनां मिद मेव श्रेष्ठम्। 'आगात्' "आगमत्" आगच्छतीत्यर्थः। "चित्रं"* चायनीयं पूजनीयं वा† श्रेष्ठत्वादेव, 'प्रकेतः' "प्रकेतनं प्रज्ञाततमम्" ‡ "अजनिष्ट" जात मित्यर्थः। जातं सदागच्छति सर्वासु दिक्षु। 'विभ्वा' "विभूततमम्" § इद मतिमहत्त्वाद् विभूततमं § विस्तीर्णतमम्; इतराणि परिच्छिन्नतराणि ज्योतींषि अपेक्ष्य। किञ्च; "यथा प्रसूता" प्रकर्षेण सूता प्रसव मनुप्राप्ता। सूतिशब्दः प्रसवार्थः। "रात्रिः" "सवितुः" "आदित्यस्य" 'सवाय' ‖ "प्रसवाय", आदित्योत्सृष्टे देशे जायते। "एवम्" 'एव' "रात्री" ¶ रात्रिः उषसो जन्मार्थं "योनिं" "स्थानम्" अवकाशम् "उषसे" आत्मलाभाय 'आरैक्' "अरिचत्" आरेचयति, ददातीत्यर्थः** । यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरजन्मत्वात्, एवं रात्रिरुषसो जन्मनो हेतुः; इत्येव मस्या ऋचि रात्रेरेव वापरः कालः उषः-शब्दित इति गम्यते। स्थानं योनिशब्देनोच्यते†† । यद्धि

---

* "चित्रः"—इत्येव मन्त्रपाठः सायणव्याख्यातश्च।

† १भा० ५०४० (५)।

‡ १भा० २१५ (१)।

§ "विभूतम" क।

‖ 'छन्दसि अवसवौ वक्तव्या विति निपातनादच्। चित्त्वादन्तोदात्तत्वम्। यवो ऽमटपरस्यानुनासिक इति संहितायां मकारः सानुनासिकः'—इति सायणः।

¶ 'रात्रेश्चाजसाविति ङीप्। यस्येति चेतीकारलोपः'—इति सायणः।

** "प्रारिचत् प्रादात्" नैघ० का०, १, ९।

†† १भा० ९, १० (१४)।

यस्मिन् विधीयते, तत् तेन साकं युतं भवति मिश्रीभूत मित्यर्थः। इय मपीतरा—"स्त्रीयोनिः" एतस्मादेव। किङ्कारणम्? "अभि-युतः" हि "गर्भः" "एनाम्" भवति, आमिश्रीभूत इत्यर्थः। पूर्वत्र *,—"अथ मपीतरो योनिः, एतस्मादेव। (किम्?) परि-युतो भवति" इति परियवन-क्रियासामान्येन निरुक्तो योनिशब्दः; इह पुनः 'अभियुत एनां गर्भः' इति मिश्रीभाव-सामान्येन उभय-लिङ्गत्वं चास्योपदर्शितम्;—इह स्त्रीलिङ्गम्, तत्र पुंलिङ्गम् इति। "तस्याः" उषसः "एषा" "अपरा" स्त्रग् "भवति"—(अस्यैवार्थस्य दृढ़तायै रात्रेरपरः काल उषा उच्यत इति) ॥ २ ॥

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः। समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने।

रुशद्वत्सा† सूर्यवत्सा‡ रुशदिति वर्णनाम रोचतेर्ज्वलति-कर्म्मणः सूर्य मस्या वत्स‡ माह साहचर्याद्रसहरणाद्वा। रुशती श्वेत्यागात्। श्वेत्या श्वेततेररिचत् कृष्णा सदना-न्यस्याः कृष्णवर्णा रात्रिः कृष्णं कृष्यतेर्न्निकृष्टो वर्णोऽ-थैने संस्तौति समानबन्धू समानबन्धने अमृते अमरण-धर्म्माणावनूची इतीतरेतर§ मभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया

* १८८ पृ॰ १२ पं॰।

† "रुशद्वत्सा सूर्यवत्सा" ख।

‡ "वत्स" ख।

§ "अनूची अनूचावितीतरेतर" क, ख।

चरत इति * स्यादामिनाने † अन्योन्यस्याध्यात्मं कुर्वाणे अहर्नामान्युत्तराणि द्वादशाहः कस्मादुपाहरन्त्यस्मिन् कर्माणि तस्यैष निपातो भवति वैश्वानरीयायामृचि ‡ ॥ ३ (२०) ॥

रुशद्वत्सेति §। "रुशद्वत्सा" रोचिष्णुवत्सा; सूर्यो हि रोचिष्णुः, तं "सूर्यम् अस्या वत्स माह" मन्त्रदृक्। "सादृवर्यात्"। मातृसहचरो हि वत्सो भवति, अय मपि सानयोषसा सह चरतीत्येतस्मात् सामान्याद् वत्स उच्यते। "रसहरणाद्वा"। यथा हि मातुरूधसः क्षीराख्यस्य रसस्याहर्त्ता ॥ भवति वत्सः, एव मेषोऽप्यौषसिकाना मवश्यायाख्यानां रसाना माहर्त्ता भवति रश्मिभिः,—इत्येतस्मात् सामान्याद् वत्सत्वम्। "रुशती" रोचनशीला आत्मनापि। "श्वेत्या" "श्वेततेः" धातोः (भ्वा॰आ॰)। श्वेतो वर्ण एत्यस्याम्, श्वेतवर्णेत्यर्थः। या चैवंलक्षणा उषाः, सा "आगात्" आगच्छति। आगतायाश्च तस्याः 'आरैक्' "अरिचत्" आरेचयति। "कृष्णा" "कृष्णवर्णा रात्रिः"। किं मारेचयति? "सदनानि" स्थानानि। "अस्याः" उषसः। येष्विय मुषा स्थानेषु आगता सती आसीदति, तान्यारेचयति रात्रिः। एवं ताव दय मर्द्धर्चो रात्र्युषसोर्विभक्तस्तुतिः; "अथ" अनेनोत्तरार्द्धर्चेन "एने" रात्र्युषसौ "संस्तौति"।

---

* "क्षया सह चरत इति" क, घ।

† "द्यामिनाने आमिन्वाने" क, घ।

‡ "ऋचि:" घ।

§ ऋ॰ सं॰ १, ८, १, १। इत्यादिकं पूर्वं मुक्तम् (११९ पृ॰ १९पं॰)।

|| "रसस्य हर्त्ता" रोथ्-मु॰।

—"समानबन्धू" एते रात्र्युषसौ, "समानबन्धने" समान मनयोर्बन्धनम्। आदित्यस्येयं स्वसमयं प्रति रात्रिर्बद्धा संश्लिष्टा, उदयं प्रत्युषाः; एवं समानबन्धू। "अमृते, अमरणधर्माणौ"; न हि रात्र्युषसौ म्रियेते। "अनूची इतीतरेतर मभिप्रेत्य" इतरेतरं संश्लिष्टे स्तेते। "द्यावा वर्णं चरतः"। "ते एव" रात्र्युषसौ। "द्यावौ द्योतनात्" उषा हि स्वेन प्रकाशेन द्योतते, रात्रिरपि स्वेन तमोवीर्येण नक्षत्रगणेन वा स्व मधिकारं प्रति द्योतते। एवं हि द्यावेति द्विवचनम् "अपि वा" तृतीयान्त मेकवचन मेतत् स्यात्,—द्यौः, तया "द्यावा" 'सहयुक्ते (पा० २,३,१८)'। "तया" सह स्पर्द्धमाने "चरतः" गच्छतः। कथम्पुनश्चरतः? "आमिनाने"। आङ् अभ्यर्थे*। उषा अपि रात्रेरधि आत्मानं निर्मिमीते, रात्रिरप्युषसः; इतरेतरसंश्लिष्टे ह्रीमे रात्र्युषसौ। तस्मादेव मुच्यते;—"अन्योऽन्यस्याध्यात्मं कुर्वाणे" इति॥

उषः-शब्दतत्त्वावधारणार्थं प्रसक्तावेतौ मन्त्रौ उपवर्णितौ; प्रकृत मिदानीं मुच्यते;—"अहर्नामान्युत्तराणि द्वादश"†। अह्नो नामानि, 'अहर्नामानि', 'उत्तराणि' प्रकृतेभ्य उषोनामभ्यः; उषस एवानन्तर महर्भवति, तस्मादुषोनामभ्य उत्तराणि अहर्नामानि। कियन्ति पुनस्तानि? 'द्वादश'। द्वे च दश च द्वादश (१२)। कानि पुनस्तानि? "वस्तोः, द्यु, भानुः"—इत्येव मादीनि‡। वस्तो

---

* 'गोदस्येव शरण आ मुखस्य। तुदस्येव शरवेऽधि मदतः"—इति नैघ० का० ५,१,५।

† १भा० ५४४० (८)।

‡ १भा० ५४—५८ पृ०।

ज्योतिरेतदिति वक्तोरित्युच्यते। यथैव हि श्रुतं मन्त्रे तथैवेह समाम्नातम्। द्युः, द्योतते द्योतत् ज्योतिषा। भानुः, भासते द्योतत् ज्योतिषेत्येव मादि योज्यम्॥

आह;—"अह्नः कस्मात्"? उच्यते;—"उपाहरन्त्यस्मिन् कर्माणि" न हि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकराः, यथाहनि॥

"तस्य" अह्नः "एष निपातो भवति"*। नैघण्टुकवृत्त्या। "वैश्वानरीयायाम्" वैश्वानरदेवतायाम् "ऋचि"—॥ ३॥

अहश्च कृष्ण मह॒रर्जु॑नञ्च॒ वि व॑र्त्तेते॒ रज॑सी वे॒द्याभिः॑। वै॒श्वा॒न॒रो जाय॑मानो॒ न राजाव॑ातिर॒ज्ज्योति॑षा॒ग्नि-स्तमां॑सि॥ अहश्च कृष्णं रात्रिः शुक्लञ्चाहरर्जुनं विवर्त्तेते रजसी वेद्याभिर्वेदितव्याभिः प्रवृत्तिभि†र्वैश्वानरो जायमान इवो‡द्यन्नादित्यः सर्वेषां ज्योतिषां राजावाहन्नग्निर्ज्योतिषा तमांसि मेघनामान्युत्तराणि चिंशन्मेघः कस्मान् मेहतीति§ सत आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिरुपर उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्राण्युपरता आप इति वा तेषां मेषा भवति॥ ४ (२१)॥

---

* "निपाता भवन्ति" इ०-क।

† "प्रवृत्तिभिः" क।

‡ "जायमाने इवो" क।

§ "मेहयतीति" क, ख, ग। "मघतीति" च।

अहः-शब्दो हि रात्रि महस्योभय मभिधत्ते, अतः सन्देहपदम्, तस्यैव विभागोऽस्या मृचि उपपदविशेषात् प्रदर्श्यन्ते;—अहश्च कृष्ण-मिति *। भरद्वाजस्यैव मार्षम्। त्रिष्टुप्। पृष्ठस्य षष्ठेऽहन्याग्निमारुते शस्त्रे शस्यते। "अहश्च कृष्णं रात्रिः शुक्लं चाहरर्जुनम्"। अर्जुनशब्दो हि शुक्लपर्यायः। "विवर्त्तेते" विपर्ययेण वर्त्तेते। रात्रिरतीता, अह आयातम्; अहरतीतं, रात्रिरायाता; इत्येवम्। "रजसी" रञ्जके। ज्योतिषा हि भूतान्यहो रञ्जयति, तमसा रात्रिः। "वेद्याभिः" "वेदितव्याभिः प्रवृत्तिभिः"; न हि तासां प्रवृत्तीना मन्तोऽस्ति; अहनि च रात्रौ च प्राणिना मन्तास्ता वेदितव्या एव भवन्ति, बहुत्वात्; न हि विदिताना मन्ताः कदाचित्। किञ्च, "वैश्वानरः" अग्निः 'अवातिरत्' "अवाहन्" अपहन्ति, स्वेन "ज्योतिषा तमांसि"। कथम्पुनरपहन्ति? 'जायमानो न राजा' "जायमान इव", "उद्यन्" "सर्वेषां" सर्वभूतानां "राजा" "आदित्यः"। यथा ह्युद्यन्नादित्यस्तमांसि अपहन्ति दिवा, एवम् "अग्निः" अपि रात्रावपहन्तीत्यग्निरदित्येन तम उपघातं प्रत्युपमीयते॥

"मेघनामान्युत्तराणि त्रिंशत्"†। मेघानां नामानि तानि उत्तराणि, प्रकृतेभ्योऽहर्नामभ्यः, मेघा ह्यहनि रात्रौ चाशेषेण भवन्त्यतो रात्र्यहर्नामभ्य उत्तराणि मेघनामानि। कतमानि पुनस्तानि? "अद्रिः, ग्रावा, गोत्रः"—इत्येव मादीनि‡। अद्रिः, आदरयितव्यो

---

* ऋ० सं० ४, ५, ११, १।
† १भा० ५८ पृ० १०ख०।
‡ १भा० ५८—७४ पृ०।

भवति ह्यसावुदकार्थं मित्यद्रिः। ग्रावा, गृणातेर्वा गृह्णातेर्वा; गृणात्यसौ शब्दं करोति, गृहीतश्चोदक मनेनेति। गोत्रः, गोर्वा-गत्र। इत्येवमाद्यभ्युह्यितव्यम्; पर्वतनामस्वेऽपि यथासम्भवं योज्यम्॥

आह;—"मेघः कस्मात्"? उच्यते;—"मेहतीति" सिञ्च-त्यसौ। एवं कर्त्तरि कारके "सतः" अस्यैतदभिधानं भवति। तेषां मेघनाम्नाम् "आ उपर उपल इत्येताभ्यां" प्राक् उपर उपल इत्ये-ताभ्यां यानि नामानि, तानि "साधारणानि पर्वतनामभिः" तदेषां प्रकरणोपपदाभ्यां विशेषोऽवधार्यः। 'आ उपर इत्येतस्मात्'—इति वक्तव्ये "आ उपर उपल इत्येताभ्यां" युक्तम्; उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन् निरुक्ते निरुक्तौ भविष्यत इति, रलोरविशेषख्यापनार्थम्। "उपर उपलो मेघो भवति" उपर इति च उपल इति च मेघ उक्तो भवति। उपरशब्दादारभ्य मेघनामान्येव, न पर्वतनामानि* ॥

आह;—उपरः कस्मात्? उच्यते;—"उप" गम्य "रमन्ते" "अस्मिन् अभ्राणि"। अथ "वा"। "उप" गम्य "रताः "आपः" भवन्ति "इति"। उपलोऽप्येतस्मादेव रलोरविशेषेण ॥

आह;—कथं पुनर्गम्यते उपरशब्देन मेघ एवोच्यते, न पर्वतः? इति † उच्यते;—"तेषां" मेघानाम् उपरशब्दवाच्यत्वे विशेषलिङ्ग-वाचिका "एषा" ऋक् "भवति"—॥ ४ ॥

---

* १भा० १८पृ० (१८), (१९)।

† 'पर्वतनामान्यन्येषभीयः'—इत्युक्तं पुरस्तात्। १भा० १९ पृ० ८ पं०।

देवानां माने प्रथमा अतिष्ठन् कृन्तत्रादेषा मुपरा उदायन्। चयस्तपन्ति पृथिवी मनूपा द्वा बृबूकं वहतः पुरीषम्॥ देवानां निर्माणे प्रथमा अतिष्ठन्माध्यमिका* देवगणाः प्रथम इति मुख्यनाम प्रतमो† भवति‡ विकर्त्तनेन मेघाना मुदकं जायते चयस्तपन्ति पृथिवी मनूपाः। पर्ज्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्त्यनूपा अनुवपन्ति लोकान्त्स्वेन स्वेन कर्मणाय मपीतरोऽनूप एतस्माद्देवानूप्यत उदकेनापि वान्वाबिति स्याद्यथा प्रागिति। तस्यानूप इति स्याद्यथा प्राचीन मिति। द्वा बृबूकं वहतः पुरीषम्। वाय्वादित्या उदकं बृबूक मित्युदकनाम ब्रवीतेर्वा शब्दकर्मणो§ भ्रंशतेर्वा पुरीषं पृणातेः पूरयतेर्वा ॥ ५ (२२) ॥

इति द्वितीयाध्यायस्य षष्ठः पादः ॥ २, ६.

देवानां मान इति॥। वसुक्रस्येन्द्रपुत्रस्येय मार्षम्। त्रिष्टुप्। महाव्रते मरुत्वतीये शस्यते। 'देवानां' दानादिगुणयुक्तानां 'माने' विमाने निर्माणे। यदा देवाः सृष्टाः प्रजापतिना; तदैत एव माध्यमिका देवगणाः 'प्रथमाः अतिष्ठन्' एतेऽपि हि दानादियोगाद् देवा उच्यन्ते। प्रथमाः प्रकृष्टतमाः मुख्या इत्यर्थः। मेघाभावे हि

* "माध्यमका" क, ख, ग।
† "प्रथमो" क, ख, ग।
‡ इत उत्तरं "छमच ममारिचं विकर्त्तनं मेघानां"-इत्येतदधिकं क-ख-पुस्तकयोः।
§ "ब्रवीतेः शब्दकर्मणो" क, ख, ग।
|| ऋ० सं० ७, ७, १९, २।

सर्वं मेवेदं जगद् वर्षाभावान्न स्यात्। तस्मादेत एव प्रकृष्टतमाः प्रतिष्ठम् स्थितवन्तः। सृष्टौ हि सर्वदेवाना मेत एवाग्रे सृष्टा इत्यभिप्रायः। किञ्च; 'ततस्थात्' उत्कृष्टात् प्रदेशात् 'एषां' मेघाना मिन्द्रेण 'उपराः' आपः 'उदायन्' आगतवत्यः, आगच्छन्ति च। किङ्कारणम्? विकर्त्तनेनैव हि मेघाना मुदकं जायते। उपरशब्देनात्रोदक मुक्तम्, तात्स्थ्यात्तच्छब्दो मञ्चाः क्रोशन्त इति वत्; उपरेषु मेघेषु* या आपः, ता उपचारादुपरा इत्युच्यन्ते। किञ्च; यदा 'ताभिः' उपराभिरद्भिरोषधयः प्रोक्षिता भवन्त्यथ तदा 'त्रयः तपन्ति' त्रयः पर्जन्यादयः† तपन्ति। 'पृथिवीं' पृथ्वीलोकम्। 'अनूपाः' ते ह्यनुवपन्ति लोकान् स्वेन स्वेन कर्मणा यथाकाल मनुगच्छन्ति। एतदनुवपनं लोकानां यद् वर्षादिभिः पर्जन्यादयो यथार्थ मोषधीः पाचयन्ति। किञ्च; 'द्वा बबूकं वहतः पुरीषम्' द्वौ वाय्वादित्यौ वहतः आक्षिपत इतः पृथिवीलोकात् बबूक मुदकम्। किंलक्षणम्? पुरीषम्; प्रीणयितृ पूरयितृ वा‡ सतः॥

"अथ मपीतरोऽनूपः" मद्यनूपः समुद्रानूपो वा। "एतस्मादेव" वपतेर्धातोः असावपि हि "अनूप्यते" अनुप्रकीर्यते नित्यकालम् "उदकेन"। "अपि वा" एव मन्यथा स्यात्,—आप्नोतेः; अन्वाप्यतेऽसावुदकेनेति "अन्वाप्"। पुरस्तादञ्चतीति "प्राक्", "तस्य" अन्वाबित्येतस्य सतः "अनूप इति" एष शब्दः "स्यात्", "यथा प्राचीन मिति"; प्रागित्येवं सतः प्राचीनम्। "बबूक मिति उदकनाम"

* १आ० ९८ पृ० (१८)।

† "पर्जन्यो वायुरादित्यः" २११ पृ० ९पं०।

‡ "पुरीषं पृणातेः पूरयतेर्वा" २११ पृ० ११पं०।

इति* । पर्यायवचनेन तत्त्वाभिधानम् । "अवीतेर्वा" शब्दार्थस्य (अदा०उ०) शब्दकारि हि तद् भवति।"अंशतेर्वा" अश्नाति(दि०प०) हि तन्मेघादिति ॥ ५ ॥

निरुक्तव्याख्यायां सप्तमाध्यायस्य† षष्ठः पादः ॥ ६ ॥

---

॥ सप्तमः पादः ॥

वाङ्नामान्युत्तराणि सप्तपञ्चाशद् वाक् कस्माद्वचेस्तत्र‡ सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति तद्यद् देवतावदुपरिष्टात्तद् व्याख्यास्यामोऽथैतन्नदीवत् ॥ १ (२३) ॥

वाङ्नामान्युत्तराणि सप्तपञ्चाशत् § । मेघनामप्रसक्तौ "देवानां माने"—इत्येष मन्त्रो व्याख्यातः ॥ । प्रकृत मिदानी मुच्यते,—वाङ्नामानीति। वाचो नामानि 'वाङ्नामानि', 'उत्तराणि' प्रकृतेभ्यो मेघनामभ्यः। मेघेष्वेव हि भूयसी वाग् भवति इति ततो वाङ्नामानि भवन्ति। कियन्ति पुनस्तानि? 'सप्तपञ्चाशत्' सप्त च पञ्चाशच्च सप्तपञ्चाशत्(५७)। कतमानि पुनस्तानि? "श्लोकः, धारा, इळा"—इत्येव मादीनि¶ । श्रूयते इति श्लोकः। भ्रियते तं त मर्थ मवधारयितु मिति धारा। तं त मर्थं प्रति ईट्टे गच्छतीति इडा। इत्येव माद्यभ्यूहितव्यम् ॥

* १भा० १०४(१९)।
† 'द्वितीयाध्यायस्य' क।
‡ "वचतेस्तत्र" ङ, च।
§ १भा० ७४ पृ० ११ख०।
|| इतः पूर्वस्मिन्नेव खण्डे (१२१ पृ०)।
¶ १भा० ७४—९५ पृ०।

आह ;—"वाक् कस्मात्"? उच्यते ;—"वचेः" धातोः (अदा० प०)। उच्यतेऽनयेति वाक्* । "तत्र, सरस्वतीत्येतस्य" तत्र तस्मिन्, सप्तपञ्चाशत्के वाङ्नामगणे सरस्वतीत्येतस्य नाम "नदीवद् देवतावच्च निगमा भवन्ति" नद्यर्थयुक्ताश्च देवतार्थयुक्ताश्चेत्यर्थः† । "तत्" तत्रैवं सति, "यद्" अभिधानं "देवतावत्", "तद्" अधिकृत्य "उपरिष्टाद् व्याख्यास्यामः" षोड़शेऽध्याये "पावका नः सरस्वती (ऋ०सं० १,१,६,२)"—इत्येतस्मिन् मन्त्रे‡ । "अथ" पुनः यत् "एतद्" "नदीवत्", तद् व्याख्यायते—॥ १ ॥

इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणान्तविषेभिरूर्मिभिः। पारावतघ्नी मवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः॥ इयं शुष्मैः§ शोषणैः शुष्ममिति बलनाम शोषयतीति सतो बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा सानु समुच्छ्रितं भवति समुन्नुन्न॥मिति वा महद्भिरूर्म्मिभिः पारावतघ्नीं पारावारघातिनीं पारं परं भवत्यवार मवर मवनाय सुप्रवृत्ताभि¶ स्तुतिभिः** सरस्वतीं†† कर्मभिः परिचरेमोदकनामा-

---

* १भा० ७५ पृ० द्रष्टव्यम्।
† १भा० ८१ पृ० (११)।
‡ दै० का० ११, २, ४-५-७।
§ "शुष्मेभिः" ङ, च।
‖ "समुनुन्न" क।
¶ "सुप्रवृत्ताभिः" क, ख, ग।
** "स्तुतिभिः शोभनाभिः" ङ। "शोभनाभि स्तुतिभिः" च।
†† "सरस्वतीं नदीं" ङ, च।

न्युत्तराण्येकशत मुदकं कस्मादुनन्तीति सतो नदीना-
मान्युत्तराणि सप्तत्रिंशन्नद्यः कस्मान्नदना भवन्ति*
शब्दवत्यो बहुल मासान्नैघण्टुकं वृत्त माश्चर्य मिव
प्राधान्येन तत्रेतिहास माचक्षते विश्वामित्र ऋषिः
सुदासः पैजवनस्य पुरोहितो बभूव विश्वामित्रः सर्व-
मित्रः सर्वं संसृतं सुदाः कल्याणदानः पैजवनः पिजव-
नस्य पुत्रः पिजवनः पुनः स्पर्द्धनीयजवो वामिश्री-
भावगतिर्वा स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेद
माययावनुययुरितरे † स विश्वामित्रो नदी स्तुष्टाव
गाधा भवतेत्यपि द्विवदपि बहुवत् तद्यद् द्विवदुपरिष्टात्तद्
व्याख्यास्यामो ऽथैतद् बहुवत् ॥ २ (२४) ॥

इयं शुष्मेभिरिति । भरद्वाजस्यार्षम्, जगती ‡ । 'इयं' सरस्वती
नदी § 'शुष्मेभिः' बलैः । किङ्करोति? "बिसखा इवारुजत्" यथा
बिस-खानको बिस मनादरेणैव मृदुत्वात् खनति, एव मियमनाद-
रेणैव यदपि 'सानु' भवति समुच्छ्रितं वज्रसङ्घातकल्पं 'गिरीणां'
'सानु' शिखरं तदपि 'तविषेभिः' बिसखानक इवानादरेणैव 'रुजति'
भनक्तीत्यर्थः। येय मेवङ्गुणविशिष्टा ता मेतां वयं 'पारावतघ्नीं'
पारावारघातिनीं, सा हि 'ऊर्मिभिः' पारं चावारं च उभे अपि

---

* "नदना इमा भवन्ति" ग, घ।
† "माययौ। अनुययुरितरे" क।
‡ ऋ० सं० ४, ८, १०, १।
§ १आ १४१ पृ० (१०)।

इन्ति। 'अवसे' अवनाय रक्षणाय। आत्मनः कथन्नाम रक्षेदयाव-स्थानित्येव मर्थं पुरस्कृत्य 'सुवृक्तिभिः' सुप्रवृत्ताभिः स्तुतिभिः स्वर-सौष्ठवादियुक्ताभिः। किम्? 'सरस्वतीम् आविवासेम धीतिभिः' सरस्वती माभिमुख्येनावस्थिताः परिचरेम, 'धीतिभिः' "कर्मभिः"* स्तुतिभिश्चानेकप्रकाराभिश्चेत्यर्थः। एष समस्तार्थः॥

अथैकपदनिरुक्तम्।—"शुष्म मिति बलनाम" तद्धि "शोषय-तीति सतः" सत इति कारकावधारणम्। विपर्ययेणापि ह्यभिधा-नाना मर्थो भवत्येवं मन्यमानो भाष्यकारो बलनामसु पठितमपि† सदेतदभिधान मेव माह शुष्म मिति बलनामेति। "बिसं, बिस्यते-र्भेदनकर्मणः‡ तद्धि भिद्यते "वृद्धिकर्मणो वा" वर्द्धते हि तत्। "सानु" समस्तं हि तत् "उच्छ्रितं भवति, समुन्नुन्न मिति वा" अथ वा अर्द्धं नुन्नं प्रेरितं भवति। "पारं परं भवति" अवरस्मात् कूलात्, "अवारम् अवरम्" भवति परस्मात् कूलात्॥

अस्या मृचि तविषेभिः, ऊर्मिभिः, पारावतघ्नीम्—इत्येतद् विशेष्यलिङ्गं नदीसत्त्वं पश्यता भाष्यकारेण "अथैतन्नदीवत्"—इत्यु-क्ता§ इय मृगुपात्ता। सरस्वतीशब्दस्य नद्यभिधायकत्वे इयं पुन-र्मैत्रायणीयके|| "उतस्याम: सरस्वती" —इत्यस्य पञ्चर्चस्योत्तमा¶। एतच्च पुनः पञ्चर्चानुक्रमेण च "सारस्वतीं धेनुष्टरी मालभेत यः

---

* चतुश्चिनामसु च दृश्यते १भा० १९१ (७)।
† १भा० ११८ पृ० (११)।
‡ १भा० १४१ पृ० (११)।
§ १२५ पृ०, ८ पं०।
|| यजुर्वेदीयशाखाविशेषे।
¶ ऋक्संहितायाम् "इयमददाद्"—इति दशस्य द्वितीया (६, ५, ११, २)।

क्षेत्रे पशुषु वा विवदेत"—इत्येतस्य पशोः सम्पद्यते। सेय मनेन प्रकारेण सारस्वतस्य पशुहविषो याज्या भवति *। एवञ्च सति इय-मपि देवतावदित्येव समुपपद्यते; न त्वदेवता दृश्यते। तदेवं कृत्वा भाष्यकारेण यदुक्तं "तद्यद्देवतावदुपरिष्टात् तद्व्याख्यास्यामोऽथैतन्न-दीवत्"—इति†, तद्विरुध्यते? तत्रोक्तः समाधिः,—विभवो ह्यनुपक्षीण-शक्तयो मन्त्रशब्दाः। प्रदर्शनमात्र मेतत् क्रियते। सर्वथैतन्मन्त्र-शब्दानां योऽर्थ उपपद्यते स योज्यो यथासम्भव मिति। देवतापक्षे विनियोगानुविधानाभिप्रायेण सरस्वती माध्यमिका वाक्, सा गिरीणां मेघानां सानूनि भञ्जयत्यूर्मिभिः पारावारे द्यावापृथिव्यौ हन्तीति योज्यम्। तविषेभिरूर्मिभिः महद्भिरित्येवमादि च योज्यम्। "सुप्रवृत्ताभिः स्तुतिभिः सरस्वतीं कर्मभिः परिचरेम" गतार्थम्॥

"उदकनामान्युत्तराणि एकशतम्"‡। उदकस्य नामानि 'उदक-नामानि', 'उत्तराणि' प्रकृतेभ्यो वाङ्नामभ्यः। मेघाश्रया हि वाक्, मेघोत्थं चोदकम्,—स्तनयित्नुशब्दपूर्वकञ्चेति वाङ्नामभ्य उत्तराण्युदकनामानि। कियन्ति पुनस्तानि? 'एकशतम्' एकञ्च शतञ्च एकशतम् (१०१)। कतमानि पुनस्तानि? "अर्णः, क्षोदः, क्षद्म"—इत्येवमादीनि §। अरणशील मर्णः। क्षिप्र मुनत्तीति क्षोदः। क्षोरेण मन्नं करोतीति क्षद्म। इत्येव माद्यभ्यूहितव्यम्॥

---

* "इय मित्येतदाद्यन्तु सूक्तं सारस्वतं जपेत्। द्विजः प्रातः शुचिर्भूत्वा वाग्मी भवति बुद्धिमान्" ऋग्विधा १, २१। "इयमददाद्रभस मृणच्युत मिति प्रउगम्"—इति आश्व० ८, १।

† २२५ पृ० ८ पं०।

‡ १भा० ८९, ९० पृ० ११ ख०।

§ १भा० ८९—१०० पृ०।

आह;—"उदकं कस्मात्"? उच्यते;—"उनत्तीति सतः" तद्धि यत्र गच्छति तत्र उनत्ति क्लेदयति। 'उन्दी क्लेदने (रुधा॰प॰)'। सत इति कारकावधारणं पूर्ववत् (२३२पृ॰ ५पं॰)॥

"नदीनामान्युत्तराणि सप्तत्रिंशत्" *। नदीनां नामानि 'नदीनामानि', 'उत्तराणि' इति प्रकृतेभ्य उदकनामभ्य उत्तराणि; नदीनामानि। कियन्ति पुनस्तानि? 'सप्तत्रिंशत्' (३७)। कानि पुनस्तानि? "अवनयः, यव्याः, खाः, सीराः"—इत्येव मादीनि †। अवनतेन निम्नेन प्रदेशेन यान्तीत्यवनयः। क्षयन्त्यो यान्तीति ‡ यव्याः। खातव्या भवन्तीति खाः। सरन्तीति सीराः। एव मादि योज्यम्॥

आह;—"नद्यः कस्मात्"? उच्यते;—"नदनाः" शब्दिताः "भवन्ति", "शब्दवत्यः" शब्दसंयुक्ताः। किञ्च; "बहुलम्" "आसां" नदीनाम्, अन्यदेवतेषु मन्त्रेषु "नैघण्टुकं वृत्तम्" अप्रधानम्। "आश्चर्यं मिव प्राधान्येन" क्वचिदेव नदीदेवतो मन्त्रः स्यात्। "तत्रेतिहास माचक्षते"। यस्मिन् सूक्ते प्रधाना नद्य एव, तत्रेमं निदानभूत मितिहास माचक्षत इति आचार्याः॥

"विश्वामित्रः" नाम "ऋषिः"। "सुदासः पैजवनस्य" राज्ञः "पुरोहितो बभूव"। "विश्वामित्रः सर्वं मित्रः" सर्वस्यैव हि स मित्रं, सर्वं मेव वा तस्य मित्र मिति विश्वामित्रः §। "सर्वम्"—इति किमुक्तं भवति? उच्यते;—तद्धि "संसृतं" भवति,—सङ्गतं भवत्येकस्मिन्।

---

* १भा॰ १२॰ पृ॰ १३ ख॰।

† १भा॰ १२०—१४२ पृ॰।

‡ 'यावयन्त्यो यान्तीति' क, 'यावयन्त्योपयन्तीति' ख।

§ 'विश्वस्य ह वै मित्रं विश्वामित्र आस'—इत्यादि रे॰ ब्रा॰ ६, ४, ४।

"सुदाः कल्याणदानः" तस्य हि नित्य मेव प्रशस्तं दानं भवति। "पैजवनः पिजवनस्य पुत्रः"। "पिजवनः पुनः स्पर्द्धनीयजवः" तस्य हि स्पर्द्धार्हो जवो वेगः। अथ "वा" "अमिश्रीभावगतिर्वा" न तस्य मिश्रीभूतपूर्वा गतिरन्यैर्वेगवद्भिः, अतिशयात्। तस्य पैजवनस्य विश्वामित्रः पुरोहितो बभूव। "सः" पौरोहित्योपार्जितं "वित्तं" धनं "गृहीत्वा" "विपाट्छुतुद्र्योः" नद्योः* "सम्भेदं" सङ्गमम् "आ ययौ" आगतवान्, यत्र विपाट्छुतुद्र्यौ इतराभिः सिन्ध्वादिभिर्नदीभिः सम्भिन्ने एकीभूते इत्यर्थः। "अनु ययुः" "इतरे" तदनुयायिनस्तस्करा वा। "स विश्वामित्रः" तास्तितीर्षुः "नदीः तुष्टाव"— "गाधाः" स्वल्पोदकाः यूयं "भवतेति"। एत मर्थं पुरस्कृत्य कथं पुनस्तुष्टाव? "अपि द्विवत्" द्विवचनसंयुक्तैर्मन्त्रैः, "अपि बहुवत्" बहुवचनसंयुक्तैर्मन्त्रैः। "तत्" तत्र, एवं सति "यद् द्विवत्" द्विवचनवत्, "तत्" "उपरिष्टात्" चतुर्दशाध्याये† "प्र पर्वतानाम् (ऋ०सं० ३,२,१२,१)"—इत्येतस्या मृचि "व्याख्यास्यामः"। "अथ" पुनः "एतद् बहुवत्" व्याख्यायते—॥ २ ॥

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्त्त मेवैः।
प्र सिन्धु मच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः॥

उपरमध्वं मे वचसे सोम्याय सोमसम्पादिन ऋतावरीर्ऋतवत्य ऋत मित्युदकनाम प्रत्यृतं भवति मुहूर्त्त मेवैरयनैरवनैर्वा मुहूर्त्तो मुहुर्ऋतुर्ऋतुरर्त्तेर्गतिकर्मणो

* १ भा० ४७ पृ० (२१)।  † दै० का० ८, ४, ५।

मुहुर्मूल्ह इव* कालो यावदभीक्ष्णञ्चेत्यभीक्ष्ण मभिक्षणं भवति क्षणः क्षणोतेः प्रक्ष्णुतः कालः कालः कालयते-र्गतिकर्मणः प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः कुशिको राजा बभूव क्रोशतेः शब्द-कर्मणः क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः साधुवि-क्रोशयितार्थाना मिति वा नद्यः प्रत्यूचुः ॥ ३ (२५) ॥

रमध्वं मे वचस इति†। त्रिष्टुभ एताः‡। "उप रमध्वं मे" उपेत्यय मुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण रमध्व मित्यनेन क्रियापदेन योजितः§। उप रमध्वं मम "वचसे" "सोम्याय सोमसम्पादिने"; सोमा हि अनेनास्मद्वचसा देवताना मन्नभूता बहवः सम्पादिताः, ता यूय मस्मै प्रतिविशिष्टाय वचसे सत्यतार्थम्,—कथन्नाम सत्य मिदं स्यादित्येव मर्थ मुपरमध्वम्, मन्दवेगा गाधाश्च भवतेत्यभिप्रायः। हे "ऋतावरीः" उदकवत्यः। कियन्तं पुनः काल मुपरमध्वम्? "मुहूर्त्तम्"; न च नित्य मेव मन्दवेगतां गाधोदकतां वा प्रार्थये; किन्तर्हि? यावदुत्तरेय महं तावदेवेत्य-भिप्रायः। "एवैः" एभिरुदकैरतिप्रवृद्धैरुपरमध्वम्। "अत्रनैर्वा"

---

* "मूढ इव" च।

† ऋ० सं० ३, २, ११, ५।

‡ एतदादिषड्ऋचयाचा माचाणिव ऋच इति यावत्। तथा हि—"रमध्वं (२४१ पृ०)"—इत्येका, "इन्द्रो (२४४ पृ०,"—इति द्वितीया, "आ ते (२४९पृ०)"—इति तृतीया।

§ "छन्दसि परेऽपि। व्यवहिताश्च।"—इति सूत्राभ्याम्। पा० १ ४, ८१—८२।

कामैरेतैरस्मत्प्रार्थनाविशेषैः—उत्तरेम, गृहान् गच्छेम, वित्तं प्रापयेम, इत्येवमादिभिर्निमित्तैः प्रार्थ्यमाना अस्माभिरुपरमध्वम्। अथ वा "अयनैः" चित्रैर्गमनैर्वेगवद्भिर्यैर्युय मभि प्रवृत्तास्तैरुपरमध्वम् मुहूर्त्तम्। यदैव मविशेषेणोच्यमाना न शुश्रुवुः, तदैका मुद्दिश्य प्रवृत्ते वक्तुम्,—'सिन्धु मच्छ'। अच्छ अभेः स्थाने *। 'अच्छे"— इत्येतत् पद माहृत्य "प्र अभि ह्वयामि" इत्येवं योजितं भाष्यकारेण। किं प्राभिह्वयामि? "सिन्धुम्"। कया? 'बृहती मनीषा' "बृहत्या मनीषया", "मनस ईषया" मनः-पूर्विकया "स्तुत्या" इत्यर्थः। अथ "वा" "प्रज्ञया"। क मर्थ मिच्छन् अभिह्वयामि? 'अवस्युः' अवन मिच्छन्, गमन मित्यर्थः। "कुशिकस्य सूनुः" अह मिति। पितुरपि गौरवान्मम गौवर मेताः कुर्युः॥ इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"ऋत मित्युदकनाम" †। तद्धि देशं देशं "प्रत्यृतं भवति" गत मित्यर्थः। "मुहूर्त्तो मुहुरृतुः" एवं विगृह्य ऋतुशब्दं तावन्निर्ब्रवीति;—"ऋतुरर्त्तेः", "गतिकर्म्मणः" गत्यर्थे वर्त्तमानस्य ‡। स हि गच्छत्येव। अधुना मुहुः-शब्दं निर्ब्रवीति;— "मुहुर्मूढ इव कालः" अल्पत्वात्। मूढ इव यः काल ऋतुः, स मुहूर्त्त इत्युच्यते। किञ्च "यावद्" एव "च अभीक्ष्णं" तावन्मुहूर्त्तः, यावांश्च मुहूर्त्तस्तावदभीक्ष्ण मित्यर्थः। सारूप्यप्रसङ्गा निरुच्यते;—"अभीक्ष्ण मभि क्षणं भवति" तद्धि क्षण माभिमुख्येन स्थितं भवति। "क्षणं क्षणोतेः" हिंसार्थस्य (तना॰उ॰)। स हि

---

* "अच्छाभेराप्त मिति शाकपूणिः" नैग॰ का॰ ५, ५, ४।

† १भा॰ १११ पृ॰ (१८)।

‡ १भा॰ १५१ पृ॰ (७८)।

"प्रक्षुण्णतः" प्रकर्षेण हिंसितः "कालः" अल्पत्वात्। "कालः कालयतेर्गतिकर्मणः" *। स हि सर्वाण्येव भूतानि कालयति क्षयं नयतीत्यर्थः। "कुशिको राजा"—इति तत्त्ववचनम्। "क्रोशतेः" वा शब्दार्थस्य (भू०प०) †; स हि साध्वेव क्रियता मिति नित्यकाल मेव क्रोशति। "कंशतेर्वा स्यात्" प्रकाशयत्यर्थस्य ‡; स हि प्रकाशयिता साधूनां धर्माणा मात्मनैव प्रकाशकः। अथ "वा" "साधुविक्रोशयितार्थाना मिति" साधुषु ब्राह्मणेषु विक्रोशयिता अर्थानां दातेत्यर्थः॥

एव मुक्तवन्तं "नद्यः प्रत्यूचुः"—॥ ३॥

इन्द्रो॑ अ॒स्माँ अ॑रदद्वज्र॑बाहु॒रपा॑हन् वृ॒त्रं प॑रि॒धिं न॒दीना॑म्। दे॒वो॑ऽनयत्सवि॒ता सु॑पा॒णिस्तस्य॑ व॒यं प्र॑स॒वे या॑म उ॒र्वीः॥ इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनति कर्मापाहन्वृत्रं परिधिन्नदीना मिति व्याख्यातम्। देवो नयत्सविता सुपाणिः। कल्याणपाणिः पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति। तस्य वयं प्रसवे याम उर्वीः। उर्व्य ऊर्णोतेर्वृणोतेरित्यौर्णवाभः प्रत्याख्यायान्ततं आशुश्रुवुः॥ ४ (२६)॥

इन्द्रो अस्माँ अरददिति §। "अरदत्" अखनदित्यर्थः। "रदतिः

---

* १भा० १४१ पृ० (१८)।

† १भा० ७९ पृ० '(१०) क्रोशः"।

‡ "किंशुकं शंशतेः प्रकाशयतिकर्मण."—इति दै० का० ११, १, ८।

§ ऋ० सं० ३, १, १२ व०,१ ऋ० =३, ३, ४ सू०, ६ ऋ०।

खनतिकर्मा" । कथम्पुनरखनत् ? "अपाहन् वृत्रम्" अपावधीत् मेघम् । "परिधिं नदीनाम्" नदनाना मपाम् * । स हि नियतं तीरयोर्निरुणद्धि, त मिन्द्रो वज्रेण हन्ति; तस्मिन् हते पृथिवीं प्राप्यापो यथानिम्नानुसारिण्यः खातानि कुर्वन्त्यो वहन्ति; तैः खातैर्वयं गच्छामः । एवं कृत्वा 'अस्मान् इन्द्रः अरदत्' । एवञ्च कृत्वा स एव इन्द्रो 'देवः', 'सविता' सर्वार्थप्रसविता वर्षद्वारेणास्मान् 'अनयत्' समुद्रम् । 'सुपाणिः' प्रशस्तपाणिरित्यर्थः । यत एव सोऽस्माकं खनिता नेता च, अतः 'तस्य' इन्द्रस्य 'प्रसवे' अनुज्ञाया मादेशे वर्त्तमाना वयं 'यामः' गच्छामः 'उर्वीः' ऊर्णुवत्यः सम्भजमाना वा । तानि तानि देशान्तराणि अम्भोभिः । सोऽस्माक मीश्वरः । स एवास्मानाज्ञापयितु मर्हति, न त्व मित्यभिप्रायः ॥

"पाणिः पणायतेः" पूजार्थस्य † । "प्रगृह्यपाणी" संयतौ कृत्वा ततो "देवान् पूजयन्ति" इति ॥

"प्रत्याख्याय" एवं त मृषिं तत्सूक्तस्य ‡ "अन्ततः" अन्ते अनयर्चा§ "आ शुशुवुः" ता नद्यः श्रुतवत्य इत्यर्थः— ॥ ४ ॥

---

* ११७ पृ० १ पं, तद्व्याख्यातञ्च २४० पृ० १० पं द्रष्टव्यम् ।

† १भा० ३३९ पृ० (२१) । 'अविपणाय्यो वड़ायलुकौ च (उ० सू० ४, १२४)'-इति पणायतेरिण् आयलुक् च ।

‡ प्रपर्वताना मित्यस्येत्यर्थः सूक्तञ्चैतत् ऋ० सं० ३, ३३ । वस्तुतोऽत्र 'तद्वर्गस्य'—इत्येव वक्तव्यम् । तथा चात्र खण्डे प्रदर्शिता "इन्द्रो अस्माँ"—इत्येषा यद्वर्गस्यादिमा, तस्यैतेय मन्त्या "आ ते कारो"—इति सम्यगुपपद्येतान्तत इति; अन्यथा "आ ते कारो"—इत्यस्यान्त्यत्वं नोपपद्येत; प्र पर्वताना मिति हि सूक्तं त्रयोदशर्चम्, तत्र दशमी "आ ते कारो"—इति, नान्त्येति स्फुटम् ।

§ अनुपदं वक्ष्यमाणया "आ ते कारो"—इत्यनयेत्यर्थः ।

आ तें कारो शृणवामा वचांसि ययाथं दूरादनंसा-रथेन*। नि तें नंसै पीप्यानेव योषा मर्यायेव कुन्या शश्वचै तें॥ आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वाश्वनामान्युत्तराणि षड्विंशतिस्तेषा मष्टा उत्तराणि बहुवदश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा तस्याश्ववद् देवतावच्च निगमा भवन्ति तद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतदश्ववत्॥ ५ (२७)॥

आ ते कारो † इति। तदा श्रुतं भवति, यदा तद् वचः क्रियते; श्रूयमाण मपि हि तन्नैव श्रुतं भवति, यन्न क्रियते। 'आ ते कारो शृणवाम' आभिमुख्येनावस्थिताः सत्यः शृणवाम हे 'कारो' स्तोमानां कर्त्तः! किं मा शृणवाम? 'वचांसि'। अतो ब्रूमः,—"ययाथ" याहि त्वम्। 'अनसा' शकटेन सह 'रथेन' च। कस्मात् पुनरेव मादरवत्यो ब्रूमः याहीति? इतः;—यस्माद् 'दूरात्' आयातस्त्वं परिश्रान्तः, तस्मात् कारुण्यं नस्त्वयि। तेन वय मेता 'नि ते नंसै' "निनमाम ते"। नीचैर्नमाम गाधोदका भवामेत्यर्थः। कथम्पुनर्निनमाम? 'पीप्यानेव

* "रथने" च।

† ऋ० सं० ३, ३, १२ व०, ५ ऋ०=३, ३, ४ सू०, १० ऋ०।

योषा' "पाययमानेव योषा पुत्रं" यथा शिशुमेवं वयं तव शिशुमाम। एव मुक्त्वा पुत्रोपमया कदाचिदयं क्रोध मियादिति मन्यमानाः सत्यः पतिकन्यासम्बद्धा मन्या मुपमा मुपाददिरे ;—"मर्यायेव कन्या शश्वचै ते"। 'मर्याय' मनुष्याय 'कन्या' नवोढ़ा 'शश्वचै ते' "परिष्वजनाय"; कथं नाम परिष्वजेत मा मय मित्यभिप्रायेण यथा सा शिशयेदेवं वयं तव शिशुमाम। "शिशुमा इति वा" यदि वा शिशमा इत्येवं परिणामः शिशंसे इति एतस्य पदस्य अथ वा शिशमे इति ॥

अश्वनामान्युत्तराणि षड्विंशतिः *। अश्वस्य नामानि 'अश्वनामानि', 'उत्तराणि' प्रकृतेभ्यो नदीनामभ्यः; अन्जा एव ह्यश्वाः। एवं ह्युक्तम्;—"अप्सु जाता अश्वाः स्वादेवैतान् योनेर्जनयन्ति" इति †। तस्मान्नदीनामभ्य उत्तराण्यश्वनामानि। कियन्ति पुनस्तानि? 'षड्विंशतिः' षड्धिका विंशतिः (२६)। कतमानि पुनस्तानि? "अत्यः, हयः, अर्वा"—इत्येव मादीनि ‡। अतति गच्छतीत्यत्यः। हयति गच्छतीति, हन्ति वाध्वान मिति हयः। ईरणवानर्वा,§ गमनवानित्यर्थः। एव मादि ॥

"तेषाम्" अश्वनाम्नाम् "अष्टौ" यानि "उत्तराणि" अव्यथय इत्येव मादीनि ‖, तानि "बहुवत्" बहुवचनसंयुक्तानीत्यर्थः ॥

---

* १भा० १४३ पृ० १४ ख०।

† "यदक्रन्दः"—इति मन्त्रोद्दशर्थं स्रक्तं द्रष्टव्यम्। ऋ० सं० १, ११, ७।

‡ १भा० १४४—१५१ पृ०।

§ "अर्वेरणवान्" इ० का० १०, ३, ७।

‖ १भा० १५० पृ० (१८)—१५१ पृ० (११)।

आह;—"अश्वः कस्मात्"? उच्यते;—"अश्नुतेऽध्वानं" व्याप्नोतीत्यर्थः। "महाशनो वा भवति इति" स हि बहु भुङ्क्ते। "तत्र" तस्मिन् षड्विंशके अश्वाभिधानगणे "दधिक्रा इत्येतत्" पदं * सन्दिग्धम्। तत् पुनरेतत्—"दधत् क्रामतीति" धारयन्नय मश्वारोहं क्रामतीति दधिक्राः? अथ "वा" "दधत्" धारयन्नय मश्वारोहं "क्रन्दति" शब्दं करोति "इति" दधिक्राः? अथ "वा" "दधत्" धारयन् अय मश्वारोहम् "आकारी" आकारवान् "भवतीति" दधिक्राः?—स हि अधिरूढेऽश्वारोहे आकुञ्चितग्रीवो विपुष्पितसर्वगात्र आकृतिमान् भवति॥

"तस्य" दधिक्रा-शब्दस्य "अश्ववत्" अश्वसंयुक्ताः, "देवतावत्" देवतासंयुक्ताः "च" "निगमा भवन्ति"। "तत्" एतदुच्यते;—"यद् देवतावत्" अस्य दधिक्रा-शब्दस्य, "तत्" "उपरिष्टात्" पञ्चदशेऽध्याये † "आ दधिक्राः शवसा (ऋ॰सं॰१०,६,११,१)"—इत्यस्या ऋचि "व्याख्यास्यामः"। "अथ" पुनर्यद् "अश्ववत्" अस्य, तद् "एतत्" व्याख्यायते—॥ ५॥

‡उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष आसनि। क्रतुं दधिक्रा अनु सन्तवीत्वत् पथा मङ्कास्यन्वापनीफणत्॥ अपि स वाजी वेजनवान्

* १भा॰ १४९ पृ॰ (७)।

† याक्षीयेऽस्मिन् दशमे इति यावत्। तथा च १०, २, ९।

‡ क पुस्तके इतः पूर्वं "हंसः शुचिषद्"—इत्यादिः "निर्वचनाय"—इत्यन्तः सन्दर्भो वर्तते; लिपिकरप्रमाद एव तत्र मूलं प्रतिभाति, अध्यायान्तोक्तखण्डसमाप्तिवाक्यविरोधात्। हंसः शुचिषदित्यादिखण्डस्तु चयोदशे वक्ष्यते (प॰ का॰१२,४,१.)।

क्षेपण मनु तूर्णं मश्नुतेऽध्वानं ग्रीवायां बद्धो ग्रीवा गिरतेर्वा गृणातेर्वा गृह्णातेर्वापि कक्ष्य आसनीति व्याख्यातम् । क्रतुं दधिक्राः कर्म वा प्रज्ञां वा । अनु-सन्तवीत्वत् । तनोतेः पूर्वया प्रकृत्या निगमः । पथा मङ्क्षांसि पथां कुटिलानि पन्थाः पततेर्वा पद्यतेर्वा पन्थते-र्वाङ्कोऽञ्चतेरापनीफणदिति फणतेश्चर्करीतवृत्तं दशो-त्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ज्वलतिकर्म्माण उत्तरे धातव एकादश तावन्त्येवोत्तराणि ज्वलतो नामधेमानि नामधेयानि* ॥ ६ (२८) ॥

उत स्य वाजीति† । गोतमपुत्रस्य वामदेवस्येय मार्षम् । जगती । वाजपेये वाजियुक्तं रथ मधिरुह्य यजमानोऽनुवाकं जपति‡; तत्रैषा§ । "उत स्यः" "अपि सः" इत्यर्थः । "वाजी वेजनवान्" । 'ओ विजी भयचलनयोः (रु०प०)' । भयवान् परेभ्यो भयदाता; परेषां हि तं दृष्ट्वा भय मुत्पद्यते । चलनवान् वा; स हि नित्यं चलनशीलः । 'क्षिपणि' "क्षेपणम् अनु" कशाघात मनु "तूर्णं मश्नुते-ऽध्वानम्" व्याप्नोतीत्यर्थः । अपि कशाप्रहार मनु 'तुरण्यति' अप्य-नाहत एवेत्यपिशब्दः । किञ्च "ग्रीवायाम्" उरसि बध्रेण "बद्धः" ॥ ।

---

* "नामधेयानि"—इति सत्यव्रत च-पुस्तके ।

† ऋ० सं० ३. ७, १४, ४ । य० वा० सं० ९, १४ ।

‡ तथाहि कात्यायनः—"देवस्याह मिति यजुर्युक्त मारोहति यजमानः" १४, ३, १८ । देवस्याह मित्याद्यनुवाकस्तु मन्त्रत्रयात्मकः ।

§ ऋग्मिमा, तृतीयेति यावत् ।

|| 'ग्रीवाया मुरोबध्रेण बद्धः'—इति महीधरः । य० वा० सं० ९ १४ ।

"अपि कक्षे" कक्ष्यया*। अथ "आसनि"† मुखे खलीनेन बद्धः‡। एव मनेकेषु स्थानेषु बद्धः। तथापि तुरण्यत्येव। अन्यो हि एकस्मि-न्नपि प्रदेशे बद्धः चलितु मपि न शक्नोति, किं मुत त्वरितुम्। किञ्च; "क्रतुम्" आत्मीयं गमनं "कर्म वा प्रज्ञां वा" अश्वारोहस्य सन्तनोति काम मभिप्रेतार्थेन शीघ्रगामित्वाद् "दधिक्राः" अश्वः अनुसन्तनोतीत्यर्थः। किञ्च; यान्यपि च कानि चित् "पथां" मार्गा-णाम् "अङ्कांसि" अञ्चितानि कुटिलानि सन्ति, तान्यपि अनुलो-मानीव कुर्वन् आशुगामित्वात्। आभिमुख्येन पुनः पुनर्भृशं वा फणति गच्छतीत्यर्थः॥ एष समस्तार्थः॥

अथैकपदनिरुक्तम्।—"ग्रीवा, गिरतेर्वा" गिलनार्थस्य (तु॰ प॰); तथा हि गिलत्यन्नम्। "गृणातेर्वा" शब्दार्थस्य (क्र्या॰ प॰); तथा हि शब्दो गीर्यते। "गृह्णातेर्वा" (क्र्या॰ उ॰) तथा ह्युदकादि गृह्यते, यः गृह्णीत्यङ्गीक्रियते। "अनुसन्तवीत्वत्" इति, "तनोतेः" धातोः (त॰ प॰) "पूर्वया प्रकृत्या निगमः"। षड्विधो हि धातुः। "प्रकृत्यन्तः, सनन्तश्च§, यङन्तो, यङ्लुगेव च। णयन्तो, णयन्तसनन्तश्च, षड्विधो धातुरुच्यते॥" आसां षणां धातुप्रकृतीनां या पूर्वा प्रकृतिस्तयैव निगमः, न सन्प्रकृतीत्यादीना मन्यतमया। "पन्थाः, पततेर्वा पद्यतेर्वा पन्थतेर्वा" त्रयोऽपि ह्येते गत्यर्थाः,‖ एषा मन्यत-

---

* 'कक्षं पर्यायप्रदेशः। तत्र सन्नाहरज्ज्वा बद्धः'—इति महीधरः। य॰ वा॰ सं॰ ९, १४।

† ७१पृ॰ ५ पं॰, तद्वृत्तिश्च ७१पृ॰ १८पं॰।

‡ 'कविकया बद्धः'—इति महीधरः। य॰ वा॰ सं॰ ९, १४।

§ "सनंतश्च" क। "सनन्तश्च" ख।

‖ पतति भू॰ प॰। पद्यते दि॰ आ॰। पन्थयति वा पन्थति चु॰ प॰।

मस्य। "अक्तुः अश्नुतेः" गत्यर्थस्य *। "आपनीफणदिति" "फणतेः" गत्यर्थस्य † चर्करीतान्तत्वेन सन्तम् ॥

"दश" यानि "उत्तराणि" नामानि, तान्यश्वनामसमन्वेनैवो-च्यन्ते तान्यपि ह्यश्वाना मेवेति। तानि पुनः "आदिष्टोपयोज-नानि"—"इति" एवम् "आचक्षते" आचार्याः। इद मिन्द्रस्या श्वानां नाम, इद मग्नेः, इद मादित्यस्य,—इत्येव मादिष्टोपयोज-नानि। कतमानि पुनस्तानि? "हरी इन्द्रस्य"—इत्येव मादीनि‡। हरी हरितवर्णौ इन्द्रस्याश्वौ। "रोहितोऽग्नेः" रोहितवर्णौ। इत्येव मादि § ॥

"ज्वलतिकर्माण उत्तरे धातव एकादश" ‖। य एव ह्यश्ववन्तो भवन्ति, त एव ज्वलन्तीव तेजसा; ततोऽश्वनामभ्य उत्तरे ज्वलत्यर्था धातवः। कतमे पुनस्ते? इति। "भ्राजते, भ्राशते, भ्राम्यति"—इत्येव मादयः ¶ ॥

"तावन्त्येवोत्तराणि" "जमत्, कल्मलीकिनम्, जञ्झणाभवन्"—इत्येव मादीनि "ज्वलतो नामधेयानि" **। जमति गच्छतीति

* १भा० ११९ पृ० ११पं०।
† १भा० १५० पृ० (०१)।
‡ १भा० १५१ पृ० १५ पं०।
§ १भा० १५३—१५५ पृ०।
‖ १भा० १५९ पृ० १९ पं०।
¶ १भा० १५९—१५८ पृ०।
** १भा० १५८ पृ० १० पं०।

"अमत्"। क मद्दं मलिनं शोधयामीति "कल्मलीकिनम्"। अनं भावयतीति "अञ्जणाभवन्"। इत्येवमादि * ॥

अध्यायपरिसमाप्त्यर्थो द्विरभ्यासः ॥ ६ ॥

॥ इति निरुक्तवृत्तौ सप्तमाध्यायस्य † सप्तमः पादः ॥ ७ ॥

॥ इति जम्बुमार्गनिवासिनः आचार्यभगवद्दुर्गस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ सप्तमोऽध्यायः (द्वितीयोऽध्यायः) समाप्तः ॥२॥

(अथनिर्वचनमेघोरास्रोविद्याइवाअथातोऽनुक्रमिष्यामोइक्षेइक्षेतावांवास्तूनियदूँचकारायंसमिङ्क्षेहिरण्यनामान्यार्ष्टिषेणोयद्देवापिःसाधारणानिस्वरादित्योरश्मिनामान्यतिष्ठन्तीनांदासपत्नीरात्रिनामानीदंश्रेष्ठंरुशद्वत्साइत्युषसांदेवानांमानेवाङ्नामानीयंशुष्मेभीरमध्वंमइन्द्रोअस्मानातेकारोउतस्योऽष्टाविंशतिः ‡ ॥)

॥ इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः ॥ २ ॥

---

* १भा० १५९—१६१ पृ०।

† १४६ पृ० "¶" द्रष्टव्यम्।

‡ १४६ पृ० "**" द्रष्टव्यम्।

## ॥ अथ तृतीयाध्यायः ॥

तत्र,

॥ प्रथमपादः ॥



ॐइम्। कर्म्मनामान्युत्तराणि षड्विंशतिः कर्म कस्मात् क्रियत इति सतोऽपत्यनामान्युत्तराणि पञ्चदशापत्यं कस्मादपततं भवति नानेन पततीति* वा तद्यथा जनयितुः प्रजैवमर्थीये ऋचा उदाहरिष्यामः†
॥ १ ॥

"कर्मनामान्युत्तराणि षड्विंशतिः"‡। कर्मणो नामानि 'कर्मनामानि', 'उत्तराणि'—इति प्रकृतेभ्यः। ज्वलत्येवासौ कर्माणि क्रियन्त इति ज्वलन्नामभ्यः उत्तराणि कर्मनामानि। कियन्ति पुनस्तानि? 'षड्विंशतिः' षडधिका विंशतिः (२६)। कतमानि पुनस्तानि? "अपः, अप्नः, दंसः"—इत्येव मादीनि§। आप्यते पुरुषेणैतत्, आप्नोति वा पुरुष मेतदिति "अपः"। "अप्नः"—इत्येतदप्याप्नोतेरेव। एव मादि योज्यम् ॥

आह;—"कर्म कस्मात्"? उच्यते;—"क्रियत इति सतः"। सत इति कारकावधारणार्थ मिति ॥

---

* "पततीति"—इति दुर्गसम्मतः पाठः।

† "ऋचावुदाहरिष्यामः"—इति दुर्गसम्मतः पाठः।

‡ १भा॰ १६२ पृ॰ १ख॰।

§ १भा॰ १६२—१७१ पृ॰।

"अपत्यनामान्युत्तराणि पञ्चदश"*। अपत्यस्य नामानि 'अपत्य-नामानि', 'उत्तराणि'—इति प्रकृतेभ्यः कर्मनामभ्यः। सर्वकर्मणां ह्यपत्योत्पादनकर्मैव प्रधान मृणापाकरणद्वारेणेति कर्मनामभ्य उत्तराणि अपत्यनामानि। कियन्ति पुनस्तानि? 'पञ्चदश'। कतमानि पुनस्तानि? "तुक्, तोकम्, तनयम्"—इत्येव मादीनि†। "तुक्" तकतेर्ह्लातो-स्तुञ्जतेर्वा। "तोकं" तुद्यतेः। "तनयं" तनोतेरितिवक्ष्यति‡॥

आह;—"अपत्यं कस्मात्"? उच्यते;—"अपततं भवति" पितुः सकाशादेत्य पृथगिव ततं भवति। अथ "वा" "अनेन" जातेन सता पितरो नरके "न पतन्तीति"—इत्यपत्यम्॥

अत्र पुनर्विवदन्ते;—द्वयोः सन्निपाते किं क्षेत्रिणोऽपत्य मुत बीजिनः? इति। "तद्" एतदुच्यते;—"यथा जनयितुः" एव "प्रजा" भवति, "एव मर्थीये ऋचावुदाहरिष्यामः;—॥ १ ॥

परि॒षद्यं॒ ह्यर॑णस्य॒ रेक्णो॒ नित्य॑स्य रा॒यः पत॑यः स्याम। न शेषो॑ अग्ने अ॒न्यजा॑त म॒स्त्यचे॑तानस्य॒ मा प॒थो वि दु॑क्षः॥ परिहर्त्तव्यं हि नोपसर्त्तव्य मरणस्य रेक्णोऽरणोऽपार्णो भवति रेक्ण इति धननाम रिच्यते§ प्रयतो नित्य॑स्य रा॒यः पत॒यः स्याम॥। पि॒त्र्यस्ये॑व धन॒स्य

* १आ० १०१ ष० १ख०।
† १आ० १०१—१०९ ष०।
‡ दै० का० १०, १, ७।
§ "रिच्यतेः" क।
|| "पतयस्याम" क, ख।

न शेषो अग्ने अन्यजात मस्ति। शेष इत्यपत्यनाम शिष्यते प्रयतोऽचेतयमानस्य तत्प्रमत्तस्य भवति मा नः पथो विदूदुष इति तस्योत्तरा भूयसे निर्वचनाय॥ २॥

"परिषद्यं हि", "न हि ग्रभाय"—इति च (२,३ख०)। एते त्रिष्टुभौ। वसिष्ठाग्निसंवादे वसिष्ठेन हतपुत्रेण अग्निरभ्यर्थितः,—पुत्रं मे देहीति। तेन किलासौ प्रत्युक्तः,—क्रीतक-कृत्रिम-दत्तकादीनां पुत्राणा मन्यतमं कुरुष्व पुत्र मिति। स एव मुक्तः, एताभ्या मृग्भ्या मन्यजान् पुत्रान् निन्दन्नौरसं पुत्रं ययाचे। "परिषद्यं०—०वि दुचः" *। 'परिषद्यं' "परिहर्त्तव्यं" परिहरणीयं परित्याज्य मित्यर्थः। किम्पुनस्तत्? "अरणस्य रेक्णः" 'अरणस्य' अपगतार्णस्य अपगतोदक-सम्बन्धस्य परकुलजातस्य 'रेक्णः' यदपत्याख्यं धनं, तत् परिहर्त्तव्यम्; न पुत्रत्वेन परिकल्पयितव्य मित्यर्थः; न हि तत् पुत्रत्वेन कल्प्य-मान मपि पुत्रकार्येष्ववतिष्ठति, परकीयत्वात्। यत एव मतो ब्रूमः;—"नित्यस्य रायः पतयः स्याम", "पित्र्यस्येव धनस्य"। यथा हि यदेव पित्र्यं धनं पुत्रत्वे भवति, तस्यैव सुपरि अगोणं स्वामित्वं भवति। एवं यदेव स्वयञ्जात मपत्यं भवति, तदेव मुख्यं भवति; नेतरत्— क्षेत्रजं वा क्रीतकं वा। यत एव मतो ब्रूमः;— यदेव नित्य मात्मीय मगोणं स्वय मुत्पादितं पुत्राख्यं राः धनम्, तस्यैव वयं पतयः पालयितारः स्याम; मा परकीयस्येत्यभिप्रायः। कस्मात् पुनरेवं ब्रूमहे? इतः,— यस्मात् "न शेषो अग्ने अन्यजात मस्ति"। 'न

---

* ऋ० सं० ५, २, ९, १।

अस्ति शेषः' नास्त्यपत्य मन्येन जातं हे 'अग्ने!', य एव जनयति तस्यैव हि तद् भवति, नेतरस्येत्यभिप्रायः। 'अचेतानस्य' य एव हि अचेतयमानो भवति, अविद्वान्, प्रमादी, तस्यैव "अचेतयमानस्य", "प्रमत्तस्य" अश्रुतवतो धर्मात् परितोषमात्रं "भवति",—ममेद मपत्य मिति, न अपत्यकार्येऽवतिष्ठते। यत एव मतो ब्रूमः;—'मा पथो विदुक्षः' मास्मानेतत् पितृपितामहप्रपितामहानुसन्ततात् 'पथः' मार्गात्, येन केन चित् प्रत्याख्यानद्वारेण "विदूदुषः"। त्वं देहि नः पुत्र मौरस मित्यभिप्रायः॥ इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"अरणोऽपार्णः"* अपगतोदकसम्बन्ध इत्यर्थः। "रेक्ण इति धननाम"†; तद्धि "रिच्यते" अतिरिच्यते इतो लोकादमुं लोकं "प्रयतः" म्रियमाणस्येत्यर्थः। "शेष इत्यपत्यनाम"‡; तद्धि "शिष्यते" इहैव लोकेऽवतिष्ठते पितुरमुं लोकं 'प्रयतः' गच्छत इत्यर्थः॥

एव मस्या मृचि 'न शेषो अग्ने अन्यजात मस्ति'—इत्यनेन विशेषलिङ्गेन उपपन्न मेतद् भवति;—जनयितुरेव प्रजा भवति न क्षेत्रिणो नापि क्रेतुरन्यस्य वा कस्यचिदिति। एवञ्चैव शब्दार्थ उपपद्यते,—यस्मादेवापेत्य ततं भवति, तस्यैवापत्य मिति॥

अनेनैव चापत्यशब्दनिर्वचनप्रसङ्गेनैष मन्त्रो व्याख्यातः, उत्तरश्च सावशेष मपत्यशब्दे प्रसक्तानुप्रसक्त मेवोच्यते;—"तस्य उत्तरा भूयसे निर्वचनाय"—॥ २॥

---

* चरके 'निर्णमने" इ० का० ११, ४, १२।

† १भा० १११ पृ० (१)।

‡ १भा० १०२ पृ० (६)।

न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ। अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु* नव्यः ॥ न हि ग्रहीतव्योऽरणः † सुसुखतमोऽप्यन्योदर्यो मनसापि न मन्तव्यो ममाय मित्यथ ‡ स ओकः पुनरेव तदेति यत आगतो भवत्योक इति निवासनामोच्यत एतु नो वाजी वेजनवानभिषहमाणः सपत्नान्नवजातः स एव पुत्र इत्यथैतां दुहितृदायाद्य उदाहरन्ति पुत्रदायाद्य इत्येके ॥ ३ ॥

न हि ग्रभायेति §। "न हि ग्रहीतव्यः" नाङ्गीकर्त्तव्यः, पुत्रो ममाय मित्यनेनाभिप्रायेण। कः पुनरसौ नात्मियीकर्त्तव्यः? "अरणः" अपार्णः, अपगतोदकसम्बन्धः, अन्यकुलजः। यद्यपि "सुशेवः" एव स्यात् "सुखतमः"॥ परिचरितो हितैषी, तथा "अपि" "अन्योदर्यः" अन्येनोदीरिताद्रेतसो जातः, अन्यजायोदरसम्भूतो वा; यो हि स्वस्यां जायायां सम्भवति, स स्व एवोदरे सम्भूतो भवति। "अङ्गा द्व वा एष आत्मनो यज्जायेति विज्ञायते"। तस्माद् योऽन्यजायोदरसम्भूतः, सः "मनसापि न मन्तव्यो ममाय मिति", किम्पुनः पुत्रत्वेन परिकल्पयितव्य इति। किङ्कारणं मनसापि न मन्तव्य इति? "अधा

* "षाळेतु"—क, ख, ग, ङ. हस्तौ च।
† "ग्रहीतव्योऽरणः" ङ, च।
‡ "ममायं पुत्र इत्यथ" ङ, च।
§ ऋ० सं० ५. १, ९, १।
|| "प्रेवम्" १भा० ११८ पृ० (१०)।

चिदोकः पुनरित्स एति"। अथशब्दोऽथशब्दस्यार्थे वर्त्तते, स च हेत्वर्थः। यस्मात् "ओकः" स्वं निवासस्थानं स्वं वंशं बहुनापि कालेन स एति— तद्वंश्य एव भवति, तस्मादपुत्र एवासौ। यत एव मतो ब्रवीमि;—'आ नो वाजी अभीषाळेतु नव्यः'। "एतु" आगच्छतु, "नः वाजी वेजनवान्", परेभ्यो भयदाता 'अभीषाट्' "अभिषह-माणः" अभिभवन् "सपत्नान्", 'नव्यः' "नवजातः" शिशुरित्यर्थः। "स एव पुत्रः" आगच्छतु, न परकीयैः पुत्रैः सङ्कल्पितैरित्यभिप्रायः॥

"अथैतां दुहितृ-दायाद्य उदाहरन्ति"। इद मुक्तम्,—अपेत्य यस्मात् पितुः सकाशात् ततं भवति, तस्मादपत्य मिति तदिद मुभयोरपत्यं प्राप्नोति दुहितुः पुत्रस्य च; दुहितापि ह्यपेत्यैव तता भवति पितुः सकाशात्। तत्रैवं सति उभयोर्दुहितृपुत्रयोरपत्यकार्याणि दायाद्यादीनि अविशेषेण प्राप्नुवन्ति, तदिदं विचार्यते। तदधिकारार्थोऽत्र मथशब्दः। एता मृचं शासद्वह्निरित्यादि या वक्ष्यमाणा (४ ख०) ताम्, दुहितुर्दायाद्ये अर्थे उदाहरन्ति धर्मविदः। अस्या मृचि वक्ष्यमाणायां (४ ख०) दुहितुरपि दायाद्यत्व मस्तीति दृश्यते॥

"पुत्रदायाद्य इत्येके" एके पुनर्द्धर्मविदो मन्यन्ते यत् पैतृकं वित्तं तत् पुत्रस्यैव दायाद्यं न दुहितु रिति॥

यथा दुहितापि दायाद्य मर्हति, तथैव मृग् निरुच्यते;—॥३॥

**शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं स पर्यन्। पिता यत्र दुहितुः सेकं मृञ्जन्त्संशग्म्येन मनसा**

दधन्वे ॥ प्रशास्ति वोल्हा* सन्तानकर्मणे दुहितुः पुत्र-
भावं दुहिता दुर्हिता दूरे हिता दोग्धेर्वा नप्तार
मुपागमद् दौहित्रं पौत्र मिति विद्वान् प्रजननयज्ञस्य
रेतसो वा अङ्गादङ्गात् † सम्भूतस्य हृदयादधि जातस्य
मातरि प्रत्यृतस्य विधानं पूजयन्नविशेषेण मिथुनाः
पुत्रा दायादा इति तदेतदृक्-श्लोकाभ्या मभ्युक्तम्
(४ ‡)। अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शत मित्यविशे-
षेण पुत्राणां दायो भवति धर्म्मतः । मिथुनानां
विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत् ॥ न दुहितर
इत्येके तस्मात् पुमान् दायादोऽदायादा स्त्रीति विज्ञा-
यते तस्मात् स्त्रियं जातां परास्यन्ति न पुमांस मिति
च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः पुंसो-
ऽपीत्येके शौनःशेपे दर्शनात् । अभ्रातृमतीवाद इत्य-
परम् । (अमूर्या यन्ति जामयः सर्वा लोहितवास-
सः । §) अभ्रातर इव योषास्तिष्ठन्ति हृतवर्त्मनः ।
अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदा-

---

* "वोढा" च, इतिसम्मतश्च ।

† "वाङ्गादङ्गात्" क, च ।

‡ क-ख-ग-पुस्तकेषु इत्र चतुर्थखण्डसमाप्तिर्दृश्यते परं खण्डसङ्कलनवाक्यविरोधादुपेक्षणीयम् ।

§ नैतच्छ्लोकार्धं क-च-पुस्तकाभ्यां सम्यक् ।

नाय इतवत्मान इत्यभ्रातृकाया अनिर्वाह औपमिक स्तस्योत्तरा भूयसे निर्वचनाय ॥ ४ * ॥

शासद्वह्निरिति†। एषा त्रिष्टुप्। ऐन्द्रे सूक्ते वश्वामित्री। माध्यन्दिने सवने उक्थपर्याये अच्छावाकस्य यच्छस्त्र मभिजिद्विश्वजिदादिष्वहीनकेष्वहःसु अहीनसूक्तं नाम‡, तत्रेयं श्रूयते। "न जामये तान्वं (५ख०)"—इतीय मपि अनयैव समानार्थविनियोगदैवतच्छन्दस्का। 'शासद् वह्निः' "प्रशास्ति" प्रख्यापयन्ति प्रशापयतीत्यर्थः। कः पुनरसौ प्रशास्ति? किं वा प्रशास्ति? इति। "वोढा" य उद्वोढा स्त्रिया भवति सः; तस्यां या जायते दुहिता, तस्याः पुत्रभावं प्रशास्ति;—"सन्तानकर्मणे" अर्थाय। "दुहिता, दुर्हिता"; सा हि यत्रैव दीयते, तत्रैव दुर्हिता भवति, "दूरे" सती सा पितुः "हिता" पथ्या भवतीति दुहितेत्युच्यते। "दोग्धेर्वा" सा हि नित्य मेव पितुः सकाशात् द्रव्यं दोग्धि प्रार्थनापरत्वात्। आह;— कथं पुनर्गम्यते प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम्? इति। उच्यते;—इतः। यस्मात् 'मन्त्रज्ञात्' "मन्नार मुपागमत्" उपागच्छति चेतसा। "दौहित्रम्" दुहितृ-पुत्रम्। "पौत्र मिति" पुत्रो ममाय मिति एव मुपागच्छति। न चापुत्रस्य पौत्रः स्यात्, उपागच्छति च दुहितुः पिता ममाय मिति दौहित्रम्। तस्माद् दुहितापि पुत्र एव, यस्याः पुत्रः पौत्रो ममाय मित्येतं चेतसा उप-

---

* क-ख ग-पुस्तकेष्विह पञ्चमखण्डसमाप्तिः, एव मुत्तरत्रापि बोद्धव्यम्।

† ऋ० सं० ३, ३, ५, १।

‡ 'यस्मा इदु प्रतवसे-शासद्वह्निरितीतरा वहीनसूक्ते'—इति आ० ७, ४।

गम्यते। 'विद्वाँ ऋतस्य दीधितिं सपर्यन्'। 'विद्वान्', कस्य? 'ऋतस्य', "प्रजननयज्ञस्य"। ऋत इत्येतदपठितं यज्ञनाम। 'दीधितिं' विधान मित्यर्थः। प्रजननयज्ञविधान मविशेषेण 'सपर्यन्' पूजयन्नित्यर्थः। यथैव हि पुत्रजनने प्रजननयज्ञस्तन्यते तथैव हि दुहितृजननेऽपि,—यैरेव मन्त्रैर्येनैव च विधानेन पुत्र-गर्भ आधीयते, तैरेव मन्त्रैस्तेनैव च विधानेन दुहितृगर्भोऽपि। अथ "वा" ऋत-शब्देन रेत उच्यते*। तत् "अङ्गादङ्गाद्" यत् सम्भूतं तत् सर्व-गात्रेभ्यः हृदयानुस्मरणनिमित्तेन गर्भजनने "मातरि" प्रत्यृतं प्रवृत्तं भवति रेतः, तस्य "रेतसः" "विधानं स विशेषेण पूजयन्" स वोढा दौहित्रं पौत्रो ममाय मित्येव मुपगच्छति चेतसा। येनैव हि विधानेन पुत्रजनने रेत उत्सृज्यते, तेनैव हि दुहितृजननेऽपि; तत्रैवं सति रेत उत्सर्गविध्यविशेषात् प्रजननयज्ञाविशेषाद्वा अवि-शेषेण मिथुनाः पुरुषाः स्त्रियश्च उभयेऽपि दायादा इत्येव मेके धर्मविदो मन्यन्ते। तदेतद् "ऋक्-श्लोकाभ्याम्" "अभि" आभि-मुख्येन "उक्तम्",—"मिथुनाः पुत्रा दायादा इति", "अङ्गाद-ङ्गात्सम्भवसि (गो०गृ०सू०२, ८, २१)" -"अविशेषेण पुत्राणाम् ( ? )"—इत्येताभ्याम्॥

'शासद्वह्निः'—इत्येतस्या ऋचः प्रथमोऽर्द्धर्चो व्याख्यातः, "पिता यत्र दुहितुः'—इत्ययं द्वितीय उपरिष्टादस्य पादस्य† व्याख्यास्यते।

* 'ऋतम्' १भा० ११० पृ० (१८)—'रेतः' १भा० १०४ पृ० (१९)।

† 'उपरिष्टादस्य खण्डस्य'—इत्येव वक्तु मुचितम्, अस्मिन्नेव पादे इत उपरिष्टान्नेव खण्डे तद्व्याख्यानदर्शनात्। परस्तात् १०१ पृ० १९ प० द्रष्टव्यम्॥

अनयोरर्द्धर्चयोरन्तरा तदेतदृक्-श्लोकाभ्या मभ्युक्त मित्यत (२५८पृ० ६पं०) आरभ्य प्रसक्तानुप्रसक्तं दायाद्यधर्माश्रित मेव पूर्वोत्तरपक्ष-सम्बन्धाद्दाचारगतं वस्तु व्याख्यायते मन्त्रविषयख्यापनाय, ईदृशोऽपि मन्त्राणां विषयो भवतीति धर्मसंविज्ञानाय च। सर्व एवाय मेवं प्रकारो धर्मो मन्त्रेभ्य एव निर्बभावित्येतदेतेन ख्यापितं भवति॥

"अङ्गादङ्गात् सम्भवसि"—इत्येता मृचं प्रवासादेत्य पुत्रस्य मूर्द्धनि जपन् जिघ्रति *। अनुष्टुबेषा। स पुत्र उच्यते;—हे 'पुत्र!' 'अङ्गाद् अङ्गात् सम्भवसि' त्वं 'हृदयात्' च 'अधिजायसे' यत्तदुक्तम्—"अङ्गादङ्गात्सम्भूतस्य हृदयादधिजातस्य (२५८पृ० ४पं०)"—इति। तदनेनापि स्पष्टार्थतरेण मन्त्रेणोच्यत इति पूर्वस्यास्पष्टार्थतायां स्पष्टा-र्थीकरणार्थं मन्त्रः। तत्र हि 'ऋतस्य दीधितिं सपर्यन्'—इत्यत्र 'ऋतस्य' "प्रजननयज्ञस्य रेतसो वा" "विधानं" "विशेषेण पूजयन्"—इत्युक्तम् (२५८पृ० ५पं०), तत्पुनरेतदस्पष्टम्; इह पुनरङ्गादङ्गात् सम्भवसि हृदयादधिजायसे इत्येव मुच्यते। तत्रैवं सति यथैव पुमान् अङ्गादङ्गात् सम्भवति हृदयाच्चाधिजायते, तथैव दुहितापीत्यविशेष उपपद्यते। तस्मात् साधूक्तम्—"अविशेषेण मिथुनाः पुत्रा दायादा इति (२५८पृ०५पं०)"। 'आत्मा वै पुत्र नामासि' यस्मादङ्गादङ्गात् सम्भूतस्त्वं हृदयादधिजातस्तस्मादात्मैव त्वं ममैवावयवभूत इत्यभि-प्रायः। केवलं तु पुत्र नामा त्वम्, अहं पितृनामा, एतावानावयो-र्विशेषो नाममात्रं भिन्न मित्यभिप्रायः। 'सः' त्वं 'जीव शरदः

---

* "विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्द्धानं परि गृह्य जपेद् यदा वा पितास इति विद्यादुपेतस्य वाङ्गादङ्गात् संभवसीति" गो०गृ० २प्र० ८ख० २१सू०।

शतम्'—इत्याशीः। सर्वस्मिन्नपि संवत्सरे शरदि बहुजीवाः प्रचुररोगा भवन्ति, तस्माच्छरदः, तस्माच्छरदेवोपलक्ष्य संवत्सरशत मेतदायु-राशास्यते॥

'अविशेषेण पुत्राणां दायो भवति धर्मतः मिथुनानाम्'। क एव माह? 'मनुः' 'स्वायम्भुवः' स्वयम्भुवोऽपत्यं स्वायम्भुवः*। कस्मिन् काले स एव माह? 'विसर्गादौ' सृष्ट्यादावित्यर्थः। पूर्वं मङ्गं श्लोकस्य स्पष्टमेव। एव मेताभ्या मृक्-श्लोकाभ्या मुक्त मविशेषेण पुत्रस्य दुहितुश्च दायादत्वम्॥

"न दुहितर इत्येके" न दुहितरो दायाद्य मर्हन्तीत्येव मेके धर्मविदो मन्यन्ते। ब्राह्मण मपि चैतस्मिन्नर्थे दर्शयति,—"तस्मात् पुमान् दायादः, स्त्री अदायादा;—इति" "विज्ञायते" एतस्मिन् ब्राह्मणे विचार्यमाणे ज्ञायते; न दुहितरो दायाद्य मर्हन्ति, पुमानेवार्हतीति। "तस्मात् स्त्रियं जातां परास्यन्ति, न पुमांस मिति च"। एतदपरं दर्शनं दुहितुरदायादत्वं लिङ्गतो दर्शयति;—"अथ यत् स्थालीं परास्यन्ति हवनकर्मणो न तया जुह्वति, न दारुमयं परास्यन्ति हवनकर्मणः दारुमयेनैव जुह्वति; तस्मात् स्त्रियं जातां परास्यन्ति परस्मै प्रयच्छन्ति; न पुमांसम्"†। तस्मात् पुमानेव पैतृकस्य वित्तस्येष्टे, न दुहिता। किञ्च स्त्रीणां दानविक्र-यातिसर्गा विद्यन्ते, न पुंसः। प्रदीयते हि परस्मै स्त्री, विक्रीयते

* तथाहि—"यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।"—इति म० ९, १३०। किञ्च १३३, १३९ श्लोकौ च द्रष्टव्यौ।

† रोथ्स-मुद्रित-पुस्तके तु नैवं पाठः।

च वैवाहिकेन शुल्केन। "विक्रयश्चाप्य मपत्यस्य मतिमान् को न मंस्यते। स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव सः॥" इति भगवता वासुदेवेनोक्तं सुभद्राहरणे। तथा च ब्राह्मणमपि दर्शयति,—"चातुर्मास्येष्वनृतं वा एषा करोति, या पत्युः क्रीता सती अन्यथान्यैश्चरति" इति; तस्माच्छुल्केन प्रदानं विक्रयः कन्याया इत्युपपद्यते*। अतिसर्गः परित्यागः, परित्यज्यते हि कन्या स्वबन्धुभिः, स्वयम्बरे योऽवजितः स गच्छतु, यो वा तुभ्यं रोचते तं वृणीष्वेति। स एष क्षत्रियाणा मेव स्वयम्बरधर्मो नेतरेषां वर्णाना मिति; स पुनरथ मितरेषा मपि वर्णाना मदायादत्वे कन्याया लिङ्गं भवति। तस्मान्न दायाद्य मर्हति कन्येति॥

"पुंसोऽपीत्येके, शौनःशेपे दर्शनात्"। यदुक्तं दानविक्रयातिसर्गैर्हेतुभिरदायादत्वं स्त्रिया इति, अनेकान्त एषः; पुंसोऽपि दानविक्रयातिसर्गा विद्यन्त एव। पुरुषोऽपि हि परस्मै दीयते। एवं स्मृतम्—"दत्तक्रीतकृत्रिमक्षेत्रजौरसाः पुत्राः" इति†। तथा च "शौनःशेपे दर्शनात्" शौनःशेपे आख्याने बह्वृचानाम्‡; भारते च शुनःशेपस्य विक्रयो दृष्टः,—'विक्रीतं मध्यमं मन्ये' इत्येव मादि। तथा च परित्यागोऽपि दृष्टः,—यथा विश्वामित्रेण मधुच्छन्द आदी-

* "शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम्"—इति मनुः ९ अ० १०० श्लो०।

† मनुः ९अ० १५८, १५९, १६० श्लो०।

‡ "शोऽजीगर्तः सौयवसि ऋषि रशनया परीत मरण्य उपेयाय। तस्य ह त्रयः पुत्रा आसुः, शुनःपुच्छः, शुनःशेपः, शुनोलाङ्गूल इति। तं होवाच,—ऋषेऽहं ते शतं ददाम्यह मेषा मेकेनात्मानं निष्क्रीणा इति। स ज्येष्ठं पुत्रं निगृह्णान उवाच,—नन्विम मिति नो, कनिष्ठं माता, तौ ह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे; तस्य ह शतं दत्त्वा स त मादाय सो ऽरण्याद् ग्राम मेयाय।"—इति ऐ० ब्रा० ७, ३, १।

नाम्*। तस्मादनैकान्तिकत्वादेवैषां हेतूना मुभयोरपि दायाद्यत्व मित्येके मन्यन्ते ॥

"अभ्रातृमतीवाद इत्यपरम्" आचार्यमत मिति वाक्यशेषः। यैवाभ्रातृका भवति कन्या, सैव पित्र्यं धन मर्हति, नेतरा सभ्रातृका; पुत्रेषु हि पितुः पिण्डदातृषु तिष्ठत्सु न स्त्री धन मर्हति; सा हि परकीयं वंशं वर्द्धयति, न स्वम्, तस्मादसौ नार्थभागिनी। अभ्रातृकायां पुनरयं विशेषः,—अभ्रातृकायाः पितुरन्यः पुत्रो नास्तीति दौहित्रः पिण्डदानादिषु कार्येष्ववतिष्ठते इति भवत्यर्थभागिनी अभ्रातृका दुहिता। तदुक्तम्,—'पितोत्सृजेत् पुत्रिका मनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मदर्थ मपत्य मिति संवाद्याभिसन्धानमात्रं पुत्रिका' इत्येकेषा मिति ॥

निगम मप्येतस्मिन्नर्थे उदाहरन्ति,—"अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मानः"—इति। निगमस्य समासतोऽर्थ माह,—"अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय हतवर्त्मान इति"। अस्या मृचि "अभ्रातृकायाः" कन्यायाः "अनिर्वाहः" अनिर्वहणं विवाहनिषेध इत्यर्थः। "औपमिकः" उपमया दर्शितः, अभ्रातर इवेति। "अमूर्या यन्ति जामयः सर्वा लोहितवाससः। अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मानः (अ० सं० १,१७,१ †)॥" इय मथर्वणां प्रसव-

* "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः,—पञ्चाशदेव ज्यायांसो मधुच्छन्दसः, पञ्चाशत् कनीयांसः; तद् ये ज्यायांसो न ते कुशलं मेनिरे, ताननुव्याजहारान्तान् वः प्रजा भक्षीष्टेति। त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः।"—इति ऐ० ब्रा० ७, ३, ९।

† इह शाखाभेदेन पाठभेदोऽप्यस्ति।

मार्गवहनरोगिणी या स्त्री भवति, तस्या तत्प्रतिकारकर्मणि विनियुज्यते। 'अमूर्याः' 'यन्ति' स्रवन्ति नाड्यो रक्तं मजस्र मविरताः स्त्रिय इवातिलोहितवस्त्राः 'सर्वाः' एताः तिष्ठन्तु उपरमन्तु हतलोहितवहनमार्गाः, अस्य मन्त्रस्य वीर्येण। कथम्पुनस्तिष्ठन्तु? 'अभ्रातर इव योषाः' यथा काश्चिदभ्रातृका योषा हतभर्तृवंशमार्गास्तिष्ठन्ति सन्तानकर्मणि पिण्डदानाय, एव मेता नाड्यः तिष्ठन्त्विति। एव मस्या मृचि अभ्रातृकाया अनिर्वाह उपमया लिङ्गतो दर्शितः॥

"तस्य" अनिर्वाहस्य "उत्तरा" ऋक् "भूयसे" बहुतराय "निः" निर्विविच्य "वचनाय"—॥४॥

अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम्। जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः॥ अभ्रातृकेव पुंसः पितृनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय नयति* गर्त्तारोहिणीव धनलाभाय दाक्षिणाजी† गर्त्तः सभास्थाणुर्गृणातेः सत्यसङ्गरो भवति तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नन्ति‡ सा रिक्थं लभते श्मशानसञ्चयोऽपि गर्त्त उच्यते गुरते§ रपगूर्णो भवति श्मशानं श्मशयनं श्म शरीरं शरीरं शृणातेः शम्नातेर्वा श्मश्रु लोम श्मनि श्रितं भवति॥

* "न पतिं" ख, ग, च।
† "दाक्षिणायाजी" ख, ग। वृत्तौ—"दाक्षिणात्या स्त्री"।
‡ "तत्राक्षेराघ्नन्ति" क, ख, ग।
§ "गुरते" च रोथ्स्-दृष्टेषु हस्तिग्रन्थेषु च।
|| "श्रितं भवति" क, ख, ग।

लोम लुनातेर्वा लीयतेर्वा नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद्गर्त्तेष्ठाः* स्यात् प्रमायुको यजमान इत्यपि निगमो भवति। रथोऽपि गर्त्त उच्यते गृणाते स्तुतिकर्मणः। स्तुततमं यानम्। आ रोहथो वरुण मित्र गर्त्त मित्यपि निगमो भवति। जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान् विवृणुते रूपाणीति चतस्र उपमा नाभ्रात्री मुपयच्छेत† तोकं ह्यस्य तद्भवतीत्यभ्रातृकाया उपयमनप्रतिषेधः प्रत्यक्षः पितुश्च पुत्रभावः पिता यत्र दुहितुरप्रत्ताया रेतःसेकं प्रार्ज्जयति सन्दधात्यात्मानं सङ्गमेन मनसेत्यथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति ज्येष्ठं पुत्रिकाया इत्येके ॥ ५ ॥

अभ्रातेव पुंस इति‡। दीर्घतमःपुत्रस्य कक्षीवत आर्षम्। त्रिष्टुप्। औषसी। प्रातरनुवाकाश्विनयोः शस्यते। 'अभ्रातेव पुंसः' यथा अभ्रातृका कन्या दत्तापि सती पित्रा, स्वीकृतापि भर्त्रा, पुनः 'प्रतीची' "पितॄन्" एव पितृवंश मेव "अभिमुखी एति" "सन्तानकर्मणे पिण्डदानाय नयति" पतिवंश मित्यर्थः। सा हि पितृवंशं पुत्रैः पौत्रैश्च वर्द्धयति, न भर्तृवंश मिति; तस्मादभ्रातृका

* "गर्त्तेष्ठा" क, ख, ग।

† "नाभ्रातृका मुपयच्छेत" ख० इतिपाठमात्रम्।

‡ ऋ० सं० १, १, ८, १।

पैतृकं दायाद्य मर्हतीत्युपपद्यते। "गर्त्तारुगिव सनये धनानाम्"। "गर्त्तारोहिणी इव" काचिद् "दाक्षिणात्या स्त्री", सा यथा "गर्त्तः सभास्थाणुः" त मारोहति 'सनये' लब्धये 'धनानाम्'। एवम् 'उषाः' अपरकाले रात्र्यां नभ आरोहति *। किञ्च 'जायेव पत्य उशती सुवासाः'। यथा जाया पत्ये भर्त्त्रे सुवासा भूत्वा ऋतुकाले आत्मानं दर्शयति, एव मुषा आत्मानं दर्शयति जनानाम्। किञ्च 'उषा हस्रेव निरिणीते अप्सः'। यथा हसना हसनस्वभावा दन्तान् आत्मनो दर्शयति, एव मुषा अपि आत्मनोऽन्तर्भूतानि सर्व्वद्रव्याणां रूपाणि विवृणुते; शार्व्वरेण तमसा दिग्धानि सर्व्वद्रव्याणि प्रकाशो-दकेन धौतानीव करोति॥

"चतस्रः" एताः "उपमाः" अस्या मृचि।—अभ्रातेव पुंस इत्येका। गर्त्तारोहिणीवेति द्वितीया। जायेव पत्य इति तृतीया। हस्रेवेति चतुर्थी। अत्र प्रथमोपमया अभ्रातेव पुंस इत्यनया अभ्रातृकाया अनिर्व्वाहो लिङ्ग्यते; यथा अभ्रातृका पितृनेव प्रत्येति न पतिम्, एव मुषा आदित्य मेव प्रत्येति। एव मभ्रातृका कन्या यस्मिन्नेव वंशे उत्पन्ना भवति, त मेव प्रकाशयति वर्द्धयति, न भर्त्तृवंशम्। इत्येव मुपमया नासौ वोढव्येतदुपप्रदर्शितं भवति; पुत्रार्थत्वाद् विवाहस्य। तस्मादवर्द्धयितृत्वाद् भर्त्तृवंशस्य, वर्द्धयितृत्वाच्च पितृवंशस्य, अभ्रातृका पितृदायाद्य मर्हतीत्युपपद्यते॥

---

* "गर्त्त इति रथनाम। छद्दरो गर्त्त इति तन्नामसु पाठात्। सभौचित्येन राजपुरुषैर्न्यायनिर्णेतृभिश्चाधिष्ठितं स्थान मुच्यते।"—इति, "गर्त्तं माकाशं रथंनि-वासस्थानम्'—इति च सायणः (ऋ० सं० १, १, ८, १)।

निगमप्रसङ्गस्य तत्त्व माचष्टे ;—"गर्त्तः सभास्थाणुः" इति, अक्ष-निर्वपणपीठ मित्यर्थः। "गृणातेः (क्र्या०प०)" स हि "सत्यसङ्गरो भवति" सङ्गीर्य्यते हि तत्र सत्य मिद मत्र पतित मिद मत्र न पतित मित्येवं प्रायेण कितवा स्तत्रानृतं ब्रुवते। "तम्" एवंलक्षणं गर्त्त मारोहति या स्त्री, सा गर्त्तारुगित्युच्यते। तदेतद्गर्त्तस्य सभास्थाणो-रारोहणं रिक्थलाभहेतुर्दाक्षिणात्येषु अपुत्राया अपतिकायाः स्त्रियाः प्रसिद्धम् *। तयैव प्रसिद्ध्या निरुच्यते। देशसमाचारव्यवस्थयापि कश्चिन्मन्त्रार्थो निर्वक्तव्य इत्येतदनेन प्रदर्शितं भवति। "तत्र या अपुत्रा अपतिका सा आरोहति" तं सभास्थाणुम्, तत्र कितवमध्ये अवस्थितं या अपुत्रा स्त्री, या अपतिका, सा आरोहति तस्मिन्नुपविशती-त्यर्थः। ततः "सा" भर्तृबन्धुभ्यः सकाशात् "रिक्थं लभते" यस्तस्या भर्तृसक्तो धनांशस्तम्। एव मसौ सनये लब्धये धनानां गर्त्त मारोहति॥

गर्त्तप्रसङ्ग मुच्यते ;—"श्मशानसञ्चयोऽपि गर्त्त उच्यते"। "गुरतेः (तु०आ०)" उद्यमनार्थस्य। स हि लोकविनाशायाभ्युद्यत इव भवति। यानि हि तत्र पिशाचादीनि सत्त्वान्याश्रितानि भवन्ति। तानि जनमरण माशासते; म्रियमाणेषु जनेषु तानि प्रमुदितानि भवन्ति। "श्मशानं, श्म-शयनम्" इत्याख्यानप्रसङ्ग मुच्यते। तत्र हि श्म शेते ऽत्रेति श्म-शयनं सत् तत् श्मशान मित्युच्यते। श्म-शब्दार्थं

---

* "यथा लोके काचिद् गतभर्तृका योषिद् धनानां स्वकीयरिक्थानां सनये लाभाय गर्त्तं मारोहति। तां तु सभ्या विचार्य्य यदीयं रिक्थं लभते येदद्यैः सन्ताय तदीयं धनं वितरन्ति।"—इति सायणः (ऋ० सं० १, १, ८, १)।

माह;—"श्म शरीरम्" इति। तद्धि तत्र शेते; तत्र हि तन्निक्षिप्यते मृतस्य सतः *। "शृणातेर्वा" कृतव्याख्यान मपि † पुनराह मुख्य-त्वादस्य। तत्र ‡ औपमिकं वृत्रसम्बन्धात्; न हि वृत्रस्य मुख्यं शरीरम् §। श्म-शब्दप्रसक्तं निराह;—"श्मश्रु लोम" इति, तद्धि "श्मनि" शरीरे "श्रितं भवति"। पर्यायप्रसक्तं निराह;—"लोम लुनातेः (क्र्या० उ०)" तद्धि लूयते। "लीयतेर्वा (दि० आ०)" तद्धि शरीरे लीयते॥

तत्र निगम मपि प्रोदाहरन्ति;—श्मशानसञ्चयोऽपि गर्त्त इति "नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद् गर्त्तेष्ठाः स्यात् प्रमायुको यजमानः" इति। उपर इति यूपस्यातष्टप्रदेश उच्यते; "पञ्चमभागोऽपरा यूपाः"—इति श्रुतम्। तदतष्टं यूपस्य नाविष्कुर्यादित्यर्थः। पांशुभिस्तदवच्छादनीयं बर्हिषा च। यदि पुनरुपरस्य कञ्चिदप्यवयव माविष्कुर्याद् 'गर्त्तेष्ठाः' गर्त्तप्रतिष्ठः श्मशानप्रतिष्ठः, 'प्रमायुकः' प्रमरणधर्मायुरेव यथाविहितादायुषो यजमानः स्यात्। "इत्यपि निगमो भवति" अप्यय मप्यन्ये बहव इत्यपिशब्दः॥

"रथोऽपि गर्त्त उच्यते"। "गृणातेः" स्तुत्यर्थस्य। तद्धि "स्तुततमं यानम्" अश्वादिभ्यो यानेभ्यः सुखतरं हि तेन गम्यते। रथोऽपि गर्त्त इत्यस्मिन्नर्थे "आरोहथो वरुण मित्र गर्त्त मित्युपि निगमो

---

* "श्मशाने वा निखनन्तु"—इति ऋथ० सं० ५, ११, ८।
† २१० पृ० ९ पं०। तट्टीका च २१९ पृ० १पं०।
‡ ऋ० सं० १, १, २०, ५ ऋचि।
§ २१० पृ० २श्ल० द्रष्टव्यम्।

भवति"। "हिरण्यरूपं ०—० दितिञ्च"*। श्रुतविदात्रेय एतया त्रिष्टुभा मित्रावरुणावस्तौत्। राजसूयेऽभिषेचनीयो नाम क्रतुः, स तत्र यजमानस्य रथ मारुरुक्षतः गृहीतेषुधनुष्कौ बाहू अनया अभिमन्त्र्येते†। तावेवात्र मित्रावरुणावधिदेवताभिप्रायेण। एवं ह्याह,— मित्रोऽसीतीय मभिमन्त्रयति मित्रस्य ह्येतद्रूपम्, वरुणोऽसीतीमं वरुणस्यैतद्रूप मिति, तावुच्येते‡। हे 'मित्र! वरुण!' 'हिरण्यवर्णम्' 'उषसो व्युष्टौ' उषसो व्युच्छेदनकाले 'उदिता' च उदयकाले 'सूर्यस्य' यौ युवा मेतस्मिन् काले एवंरूपम् 'अयःस्थूणम्' अयोमयं गर्त्तं स्थूणं स्वं 'गर्त्तं' रथम् 'आरोहथः', तौ युवां ब्रवीमि ममाप्येवं रथं गर्त्त मेतस्मिन् विधावङ्गभूतं तत्स्वरूप मेव साम्प्रत मारोहतम्, 'अतः' एन मारुह्य 'चक्षाथे' कुरुत मित्यर्थः। 'अदितिं दितिञ्च' अदीन मनुपक्षीण मात्मपक्षं दीनञ्चोपक्षीण मभिन्नपक्ष मित्यर्थः॥

"गर्त्तः सभास्थाणुः§"—इत्यत आरभ्य प्रसक्तानुप्रसक्त मुक्तम्॥

"जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः"— इति। अय मप्यर्द्धर्चः पूर्व मेव‖ व्याख्यातो भाष्यकारव्याख्यानुक्रमं भित्त्वा अस्माभिः, तथा ह्यृग्वाक्यस्याप्येकवाक्यता न विच्छिन्ना भवेदिति॥

---

* "हिरण्यरूप मुषसो व्युष्टावयःस्थूण मुदिता सूर्यस्य। आरोहथो वरुण मित्र गर्त्त मतश्चक्षाथे अदितिं दितिं च॥"—इति ऋ० सं० ४, ३, २१, ३।

† "बाहू उद्गृह्णाति हिरण्यरूपा इति"—इति का० सू० १५, ५, १८।

‡ ऐ० ब्रा० १, १, ४ एवमादि। द्रव्यदेवतयोः रूप मिति याज्ञिकानां पारिभाषिकी संज्ञा।

§ १९९ पृ० १४ पं०।

‖ १९८ पृ० ४ पं०।

"चतस्र उपमाः"—इति यदुक्तं भाष्यकारेण, तदपि परिसङ्ख्याय ताः उपपादिताः अस्माभिः* । एवम् "अभ्रातेव पुंस एति प्रतीची"—इत्यनेन पादेनास्या ऋचि अनिर्वाहो दर्शितः ॥

अन्यत्रापि चोक्तम्,—"नाभ्रातृका † मुपयच्छेत तोकं ह्यस्य तद् भवति—इति" । अथ मस्मिन् वाक्ये 'नाभ्रातृका मुपयच्छेत'—इति प्रत्यक्ष एवोपयमनप्रतिषेधो विवाहार्थे पाणिग्रहणप्रतिषेध इत्यर्थः । पूर्वयोर्हि मन्त्रयोरुपमया लिङ्गतो विवाहप्रतिषेधो दर्शितः, एतस्मिंस्तु वाक्ये साक्षादेव प्रतिषेधः आहत्य विधानेनैव नाभ्रातृका मुपयच्छेतेति । अत इद मुक्तम्,—"उपयमनप्रतिषेधः प्रत्यक्षः"—इति ‡ ॥

आह;—किं मुपयमनप्रतिषेध एव? नेत्युच्यते;—"पितुश्च पुत्रभावः" प्रत्यक्षः श्रूयते । कथम्? "तोकं ह्यस्य तद् भवति"—इति । तोक मित्यपत्यनाम § । यदपत्य मभ्रातृकायाः पितुर्भवति, नेतरस्य वोढुः; इत्येव मितरस्य विवाहप्रतिषेध एव नेत्युच्यते पुत्रभावादितरस्य च पुत्रिकापितुरपत्यप्राप्तिरिति । तस्मादुपपन्नं भवति,—येवाभ्रातृमती, सैव पैतृकं धन मर्हति नेतरेति ॥

अधुना योऽसौ शासद्वह्नि रित्यस्या ऋचः ‖ उत्तरोऽर्द्धर्च उत्सृष्टः, स एवाभ्रातृकावादपक्षेणैव निरुच्यते । पूर्वोऽपि च शासद्वह्नि रित्यय मभ्रातृमतीवादपक्षेणैव योजयितव्यः । एष एव हि स्थितः पक्षः ।

---

* २९८ पृ० ११ पं० ।

† "नाभ्रात्री"—इत्येव मङ्गभूतपुस्तकपाठः ।

‡ "यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥" म० ३अ० ११ ।

§ १भा० १०१ पृ० (१)।

‖ उक्तं पुरस्ताद् व्याख्यास्यत इति २९१ पृ० १९ पं० ।

तस्या एव स्वभ्रातृमत्या यः पुत्रो भवति, त मेव पुत्रिकाविधानेन कृताभिसन्धित्वात् पौत्रो ममाय मिति अपुत्रः सन् मातामह उपगच्छति, नेतरान् भ्रातृमतीपुत्रान्; अन्यथा सर्वे एव हि वोढारो अपुत्राः स्युः, ततो विवाहपरिश्रमो व्यर्थ एव स्यात्। अथवा सर्व एव लोको द्व्यामुष्यायण * एव स्यात्। किञ्च पुत्रिकापितुरपि या भार्या सान्यस्य दुहितेति तस्या मपि या जायते सा मातामहस्यैव, नेतरस्य पुत्रिकापितुः स्यात्। अनिष्टं चैतत्सर्वम्। तस्माद् यैवाभिसन्धिपूर्वकं धर्मेण पुत्रिका क्रियते, तस्या एव पुत्रो मातामहस्य भवति, न सर्वस्या इति; सैव च दायाद्यार्हा, नेतरा भ्रातृमती। अत इद मुच्यते;—"पिता यत्र दुहितुः" इति। 'पिता' 'यत्र' यस्मिन् काले 'दुहितुः' "अप्रदत्तायाः" प्राक् प्रदानादित्यर्थः। "रेतः-सेकं" रेतसः सेक्तारं यो दुहितरि रेतः सिञ्चति तं जामातरं "प्राजयति" प्रसाधयति, प्रकल्पयति, उपवर्त्तयतीत्यर्थः। तदा तस्मै तां दुहितरं ददत् किं करोति? "संशग्म्येन मनसा दधन्वे" "सन्दधाति" अभिसन्दधाति "आत्मानम्" यदत्रापत्य मुत्पत्स्यते तन्ममेति। कथम्पुनरभिसन्दधात्यात्मान मिति 'संशग्म्येन' "मनसा सङ्गमेन" मनसा विगतापुत्रत्वसन्तापेन चेतसा,—नाह मपुत्रः, इय मेव पुत्रिका मम पुत्रः, यो ह्यस्या मुत्पद्यते, स पौत्रो मम भविष्यति इत्येवं सुखेन मनसा सन्दधात्यात्मानं तस्यां पुत्रिकायाम्। तत्रैवं सति यस्तस्या मेव कृतपुत्रिकाधर्मिण्या मुत्पद्यते दौहित्रः, त मेव नप्ता ममाय मित्येव मुपगच्छति मातामहः, न सर्वानेव दौहित्रान्;

* अमुष्यापत्य मामुष्यायणः, द्वयोः (जनयितुर्दातुश्च) आमुष्यायणो द्व्यामुष्यायणः।

भ्रातृमत्या अपि स तस्या एव पुत्रो मातामहस्य भवति, न सर्वस्याः; इति सैव च दायाद्यार्हा, नेतरा। स एव च मुख्यया वृत्त्या मातामहस्यैव पौत्रो भवति, नेतरे भ्रातृमतीपुत्राः *। ते हि गौण्या वृत्त्या जनयितुः पितुः पुत्राः सन्तो मातामहस्य पौत्रा इत्युच्यन्ते कदाचिल्लोके शास्त्रे वा ॥

तदेवं सति "अङ्गादङ्गात् सम्भवसि", "आत्मा वै पुत्र-नामासि"-इत्येव मादिषु गौणं दुहितुः पुत्रत्व मुच्यते। किञ्च; यदि दुहिता पुत्रेण अविशिष्टा एव स्यात्, ततो दुहितेति विशेष-समाख्या नैव स्यात्; अस्ति चेयम्। तस्माद् विशिष्टतरः पुत्रो दुहितुः सकाशादित्युपपद्यते ॥

यदपि चोक्तम्,—"अविशेषेण पुत्राणां दायो भवति"—इति, तदप्यभ्रातृमतीपक्षे द्रष्टव्यम्। अथवा वेदस्मृत्योर्विरोधे वेददृष्ट एव धर्मो ज्यायान्, न स्मृतिदृष्टः †।

तस्मिंश्च वेदे "अथैतां जाम्या रिक्थप्रतिषेध उदाहरन्ति" धर्म-विदः,-येय मृग् वक्ष्यमाणा (६ ख०) "न जामये तान्वः"—इति। अथ-शब्दो विशेषाधिकारार्थः। "ज्येष्ठं पुत्रिकाया इत्येके"—इति। यदा उत्सृष्टायां पुत्रिकायां पुत्रिकापितुरन्ये पुत्रा जायेरन्, तदा विभागकाले ज्येष्ठं भागं पुत्रिकायै च दद्याद्, यथाभाग मितरान्

---

* तथाच मनुः—"दौहित्र एव च हरेदपुत्रस्याखिलं धनम्"—इति ९, १३१।

† अत्रेद मपि विचार्य मस्ति—अविशेषेणेत्यस्य ऋक्श्लोकत्वं स्वीकृतं भाष्यकृता यास्केन, न तु स्मृतित्वम् (२५९ पृ० ९ पं०), तत् कथ मुपपद्येतैतद् वचनं देवराजस्येति? वस्तुतोऽत्र अथवा-पक्षो निरर्थक एव, अपुत्रस्यैव पितुर्धनहरणे स्मृतीनां सम्मतिः। म० ९, १३१ इत्यादयो द्रष्टव्याः।

पुत्रान् विभजेत्, * अभागा एव स्तिरा दुहितर इति। तदेतदनयर्चा निरुच्यते यथा दुहितॄणां भागो नास्तीति—॥ ५॥

न जामये तान्वो रिक्थ मारैक् चकार गर्भं सनितुर्निधानम्। यदी मातरो जनयन्त वह्नि मन्यः कर्त्ता सुकृतोरन्य ऋन्धन्॥ न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति जा मपत्यं † जमतेर्वा स्याद्गतिकर्म्मणो निर्गमनप्राया भवति तान्व आत्मजः पुत्रो रिक्थं प्रारिचत् प्रादाच्चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य। यदी मातरो ‡ ऽजनयन्त वह्निम्। पुत्र मवह्निं च स्त्रिय मन्यतरः सन्तानकर्त्ता भवति पुमान् दायादोऽन्यतरोऽर्द्धयित्वा जामिः प्रदीयते परस्मै॥ ६॥

इति तृतीयाध्यायस्य प्रथमः पादः॥ ३, १.

न जामये इति §। "न 'जामये' भगिन्यै" "तान्वः आत्मजः" आत्मनो धियो जातः। स आत्मजः किं करोति? इति, 'रिक्थम् आरैक्'। 'रिक्थं' पैतृकं धनं 'न' "प्रादात्" न प्रददौ। किन्तर्हि तस्याः करोति? इति। उच्यते,—'चकार गर्भं सनितुर्निधानम्। "सनितुः हस्तग्राहस्य" भगिनीभर्त्तुः प्रसवसमर्थां करोति, पुष्णा-

* तथाच—"पुत्रिकायां कृतायान्तु यदि पुत्रो न जायते। समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः॥"—इति म० ९, १३४।

† "जनयन्त्यजौन मपत्यं"—क, ख।

‡ "यदि च मातरो" ङ, च।

§ ऋ० सं० ३, १, ५. १।

तीत्यर्थः। किञ्च; 'यदी * मातरः' यत् पुत्रद्वयं मातरो जनयन्ति, "वह्निं" च वोढारं "पुत्रम्" "अवह्निं च" अवोढ्रीं स्त्रियम्, तयोर्द्वयोरपि वोढ्रवोढ्र्योः पुत्रयोः † "अन्यतरः" एकतरः 'कर्त्ता' "सन्तानकर्त्ता भवति"। कतमः? यः "पुमान्" स एव "दायादः" दायाद्यार्हः, नेतरः कन्याख्यः। किञ्च; तयोरुभयोरपि 'सुकृतोः' सुकृतयोः सुतरा मेकेनापि प्रयत्नेन कृतयोरुत्पादितयोः 'अन्य ऋन्धन्' "अन्यतरोऽर्द्धयित्वा" सुकृतोऽपि सन् "जामिः" जाम्याख्यो भगिन्याख्यः "प्रदीयते परस्मै" न कस्याश्चिदप्यवस्थाया मसावात्मीयो भवतीत्यभिप्रायः॥ एव मस्या मृचि 'न जामये तान्वो रिक्थ मारैक्' इति न दुहितरो रिक्थभागिन्यो भवन्ति, नैताः सन्तान-कर्मणि पितुरुपतिष्ठन्ते, वर्द्धयित्वा ह्येताः परस्मै दीयन्ते, तस्माद-भागा एता इति॥

यत् पुनरुक्तं पुंसोऽपि दानातिसर्गविक्रया विद्यन्त इति ‡, तत् कदाचित् केनचिन्निमित्तेन भवति, स्त्री तु निसर्गेणैव दीयते विक्रीयते विसृज्यते वा; सा हि परार्थ मेवोत्पद्यते, तस्मादभागा इति ॥६॥

इति निरुक्तवृत्तौ अष्टमाध्यायस्य (तृतीयाध्यायस्य) प्रथमः पादः॥ ३, १.

---

* "निपातस्य च (पा॰ ६, ३, १३६)"—इति दीर्घः।

† "वह्निं" 'पुमान् स्त्रिया (पा॰ १, २, ६७)'—इति वह्नेः शेषः।"—इति सायणः।

‡ २५८ पृ॰ १२ प॰। टीकाया मपि २६४ पृ॰ ११ पं॰।

॥ द्वितीयः पादः ॥

**मनुष्यनामान्युत्तराणि पञ्चविंशतिर्मनुष्याः कस्मा-न्मत्वाकर्म्माणि सीव्यन्ति मनस्यमानेन सृष्टा मनस्यतिः पुनर्मनस्वीभावे मनोरपत्यं मनुषो वा तत्र पञ्चजना इत्येतस्य निगमा भवन्ति ॥ १ (७) ॥**

प्रसक्तानुप्रसक्त मुक्तम्, तद्यथा—'जनयितुः प्रजा'—इत्येव मादि *; प्रकृत मिदानी मुच्यते;—

"मनुष्यनामान्युत्तराणि पञ्चविंशतिः" †। मनुष्याणां नामानि 'मनुष्यनामानि', 'उत्तराणि' प्रकृतेभ्योऽपत्यनामभ्यः; अपत्यान्येव हि विवृद्धानि सन्ति मनुष्या इत्युच्यन्ते। कियन्ति पुनस्तानि? 'पञ्च-विंशतिः' पञ्च च विंशतिश्च पञ्चविंशतिः (२५)। कतमानि पुनस्तानि? "मनुष्याः, नराः"—इत्येव मादीनि ‡॥

आह;—"मनुष्याः कस्मात्"? उच्यते;—"मत्वा" ज्ञात्वा, तत एते "कर्माणि" "सीव्यन्ति" तन्वन्तीत्यर्थः। अथ वा "मनस्यमानेन" प्रजापतिना "सृष्टाः"। "मनस्यतिः पुनः" अयं धातुः "मनस्वीभावे"। मनस्वीभावो नाम प्रहृष्टेन प्रहृष्यता प्रजापतिनैते सृष्टाः §। अथ वा "मनोरपत्यं" मनुष्याः ॥ "मनुषो वा" ॥

---

* १५२ पृ० ८ पं०। इतो तु १५४ पृ० ११ पं०।

† १भा० १७९ पृ० ३ख०।

‡ १भा० १७९—१८० पृ०।

§ मनुः १अ० ३२—५१ श्लो०।

|| "मनोर्जातावञ्यतौ षुक् च"—इति पा० ४, १, १६१ सू०।

"तत्र पञ्चजना इत्येतस्य निगमा भवन्ति" सन्दिग्धाः, तत्रेय न्यृगुदाहरणम्। तद्यथा ;—॥ १ ॥

तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येना॒सु॑राँ अ॒भिदे॒वा अस॑ाम। ऊर्जा॑द उ॒त य॑ज्ञियास॒ः पञ्च॑जना॒ मम॑ हो॒त्रं जु॑षध्वम्॥ तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवा असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वापि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः सोऽर्द्देवानसृजत तत्सुराणां सुरत्व मसोरसुरानसृजत तदसुराणा मसुरत्व मिति विज्ञायते। ऊर्जा॑द उ॒त य॑ज्ञियास॒ः। अन्नादाश्च यज्ञियाश्चोर्गित्यन्ननामोर्जयतीति सतः पक्वं सुप्रवृक्ण मिति वा। पञ्च॑जना॒ मम॑ हो॒त्रं जु॑षध्वं गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवो निषादः कस्मान्निषद्य* मस्मिन् पापक मिति॑ नैरु॒क्ताः। यत् पाञ्च॑जन्यया वि॒शा। पञ्चजनीनया विशा पञ्च पृक्ता सङ्ख्या स्त्रीपुन्नपुंसकेष्वविशिष्टा बाहुनामान्युत्तराणि द्वादश बाहु कस्मात् प्रबाधत आभ्यां कर्माण्यङ्गुलिनामान्युत्तराणि द्वाविंशतिरङ्गुलयः कस्मादग्रगामिन्यो भवन्तीति वाग्रगालिन्यो भवन्तीति वा-

* 'निषादः कस्मान्निषदनो भवति निषद्य" ङ, च।

**प्रकारिण्यो भवन्तीति * वाञ्छना भवन्तीति वाञ्चना † भवन्तीति वापि वाभ्यञ्चनादेव ‡ स्युस्तासां मेषा भवति ॥ २ (८) ॥**

तदद्य वाचः०—०जुषध्वम् §। सौचीकस्याग्नेरार्षम्। तस्य विश्वैर्देवैः सह संवादः। तत्रेयं होतृजपे विनियुक्ता। "तद्" वीर्यं "वाचः" "परमम्" उत्कृष्टम् अहम् "अद्य" "मंसीय" मन्ये जाने इत्यर्थः। तेन वीर्येण किम्? इति। "येन असुरान् अभिभवेम" वयम्। 'ऊर्जादः' अन्नभक्षयितारः। अपि च हे 'यज्ञियासः' यज्ञसम्पादिनः 'देवाः' यूयम्। अपि च हे 'पञ्चजनाः' मनुष्याः! निषादपञ्चमा वर्णाः! 'मम' इदं 'होत्रं' 'जुषध्वम्' अनुगृह्णीध्वम् ॥ इति समस्तार्थः ॥

अथैकपदनिरुक्तम्।—"असुराः अ-सुरता स्थानेषु" ते हि न सुष्ठु रताः स्थानेषु, चपला इत्यर्थः। अथ "वा" "अस्ताः स्थानेभ्यः इति" प्रच्याविता देवैरित्यर्थः। "अपि वा असुरिति प्राणनाम"। स हि "अस्तः" क्षिप्त इव "शरीरे भवति" तस्य हि तत्र नित्य मवस्थान मित्यभिप्रायः। "तेन" हि "तद्वन्तः" भवन्ति। रो मत्वर्थे ॥। अथ वा इद मन्यद् ब्राह्मणोक्तं निर्वचनं स्यात् "सोर्देवानसृजत" सुरिति प्रशस्तनाम। प्रशस्तादात्मनः प्रदेशात् प्रजापतिः

---

* इत उत्तरं "वाप्रसारिण्यो भवन्तीति"—इत्यधिकम् छ, च।

† "वाञ्जना" क, ख, ग।

‡ "वाभ्यञ्जनादेव स्युः" क, ख, ग।

§ ऋ० सं० ८, १, १९, ४।

॥ १ भा० ७१ पृ० (१९) द्रष्टव्यम्।

सुरानसृजत, ऊर्द्धेभ्यः प्राणेभ्यः। तदुक्तम्,—'ऊर्ध्वं मुदङ्ग्यपूर्वपक्षः पञ्चदशः, तेन "सोर्देवानसृजत तत् सुराणां सुरत्वम्"—इति विज्ञायते। एव मेव प्रातिलोम्येन "असोरसुरानसृजत"। असुरिति प्रशस्तप्रतिषेधः। अप्रशस्तादात्मनः प्रदेशात् प्रजापतिरसुरानसृजत। तदुक्तम्,—'अर्वाङ् वा तिरदपरपक्षः, तेन असुरानसृजत'—इति। "ऊर्ज्जाद उत यज्ञियासः, अन्नादाश्च यज्ञियाश्च"। "ऊर्गित्यन्ननाम"; तद्धि "ऊर्ज्जयति" बलिष्ठं करोतीत्यर्थः। अथ "वा" "पक्षम्" एतत् "सुप्रदकृणम्" भवति "इति"; ककाररेफसामान्यात् पचेर्व्वा स्यात्। द्वयोरपि वा तद्धि पक्वं सन्मृदुत्वात् सुच्छेद्यं भवति॥

"पञ्चजना मम होत्रं जुषध्वम्"। एतदत्र सन्देहपद मेक मुद्धृत्य प्रदर्शितम्। "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके" मन्यन्ते *। "चत्वारो वर्णाः, निषादः पञ्चमः;—इत्यौपमन्यवः"। निषद्य हन्तीति निषादः प्राणिवधजीवनः †। अथ वा "निषण्ण मस्मिन् पापक मिति" निषादः सौधन्वनाः ‡ इत्येके मन्यन्ते। स च रथकारः §।

---

* "पाञ्चजन्यं वा एतदुक्थं यद् वैश्वदेवं, सर्वेषां वा एतत् पञ्चजनाना मुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनाना मुक्थं सर्वे एनं पञ्चजना विदुः"—इति ऐ० ब्रा० ३, ३१।

† मनु० १० अ० ४८ श्लो०।

‡ सौधन्वनाः सुधन्वनः पुत्राः"—इति सायणः (ऋ० सं० म० १, सू० ११०, ऋ० ४)। "ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः"—इति निरु० दै० का० ११, १, ९।

§ "रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया। ताँ ऊ न्व१स्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि॥"—इति ऋ० सं० १, ७, ७,१।

तस्य भिन्नकाल माधानं श्रूयते ;— "वर्षासु रथकारः"। "ऋभूणां त्वा इति रथकारस्य" इति च मन्त्रभेदः ;—"सौधन्वना ऋभवः (ऋ० सं० १,७,१०,४)"—इति च मन्त्रलिङ्गात् ॥

यथा तु पञ्चजन-शब्देन मनुष्या एव निषादपञ्चमा वर्णा उच्यन्ते, तथैव निराह ;—"यत्पाञ्चजन्यया विशा०—०स्य क्षयः" *। प्रगाथेन दृष्टा। इय मनुष्टुप्। ऐन्द्री। पृष्ठस्य पञ्चमेऽहनि मरुत्वतीयशस्त्रस्य प्रतिपदेषा। 'यत्' यदा "पञ्चजनीनया विशा" पञ्चजनसमुदायलक्षणया सहितैः स्तोतृभिः ऋत्विग्भिः अवर्षति 'इन्द्रे' वर्षार्थिभिः 'घोषाः' स्तुतीः 'असृक्षत' असृज्यन्त। निषादपञ्चमा वर्णा आर्त्ताः सन्तो वर्षाभावे अस्तुवतैव इन्द्रम्—'वर्ष भगवन्!'—इत्येव मर्थयन्तः। अत इद मुक्तम्,—यदा पाञ्चजन्यया विशा सह घोषा ऋत्विग्भिः असृज्यन्तेति। तदा किम्? इति। तदा उपश्रुत्य स इन्द्रः ताभिः प्रह्लादितचेताः 'अस्तृणाद्' अहन् वर्षार्थं मेघान्। 'बर्हणा' परिवृढेन वज्रेण, परिवृढानि वा मेघजालानि 'विपः' विपाट्, पिता मेघानां मेधावी वा 'अर्यः' ईश्वरः कृत्स्नस्य जगतः। कस्मात् पुनरस्तृणात्? यस्मात् 'मानस्य स क्षयः' मानस्य दर्पस्य बलस्य वीर्यस्य स क्षयः निवासः, तस्मात् अस्तृणात्। अवीर्यो हि स्तूयमानः किं कुर्यात् परितुष्टोऽपि? अथवा मानस्य सत्कारस्य पूजायाः स इन्द्रः क्षयो निवासो भाजन मिति मन्वानैः स्तोतृभिः वर्षार्थिभिः सत्कृतः, तान् वर्षप्रदानेन प्रतिसत्कारयिष्यन् अस्तृणात् मेघान्। अपि वा अस्य

---

* "यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत। अस्तृणाद् बर्हणा विपो३ र्यो मानस्य स क्षयः॥"—इति ऋ० सं० ६, ४, ४२, १।

जगन्निर्माणस्य देवादेः स्थावरान्तस्य स इन्द्रः क्षयो निवास आश्रयो यस्मात् ततो मेघावरणात्। अनावृष्टिद्वारेणास्य जगतः विनाशो माभूत् कथन्नामेत्यभिप्रायः॥

"पञ्च पृक्ता सङ्ख्या"। सा हि "स्त्रीपुन्नपुंसकेष्वविशिष्टा" एव भवति। तद्यथा,—पञ्च स्त्रियः, पञ्च पुरुषाः, पञ्च कुलानि इति। एवं पञ्चशब्दे स्त्रीपुन्नपुंसकेषु विशेषो नास्ति *॥

"बाहुनामान्युत्तराणि द्वादश" †। बाह्वोर्नामानि 'बाहुनामानि'; 'उत्तराणि' प्रकृतेभ्यो मनुष्यनामभ्यः। मनुष्याणामेव हि भवन्तीति मनुष्यनामभ्य उत्तराणि 'बाहुनामानि'। कियन्ति पुनस्तानि? 'द्वादश' द्वे च दश च द्वादश। कतमानि पुनस्तानि? "आयती, च्यवाना, अभीशू"—इत्येव मादीनि ‡। आभिश्चीभवतः कर्मभिरेताविति आयती। च्यावयितारौ कर्मणां च्यवाना। अभीशू अभ्यश्नुवाते कर्माणि। इत्येवमादि योज्यम्॥

आह;—"बाहू कस्मात्"? उच्यते;—"प्रबाधत आभ्यां कर्माणि" प्रकर्षेण बाधते प्रक्षिपयत्याभ्यां कर्माणि॥

"अङ्गुलिनामान्युत्तराणि द्वाविंशतिः" §। अङ्गुलीनां नामानि 'अङ्गुलिनामानि', 'उत्तराणि' प्रकृतेभ्यो बाहुनामभ्यः; बाह्वोरेव ह्यङ्गुलयो भवन्तीति बाहुनामभ्य उत्तराणि अङ्गुलिनामानि। कियन्ति पुनस्तानि? 'द्वाविंशतिः' द्वे च विंशतिश्च द्वाविंशतिः।

---

* १भा० १८५—१८७ पृ० (११)।

† १भा० १८८ पृ० ४ख०।

‡ १भा० १८८—१९१ पृ०।

§ १भा० १९१ पृ० ५ख०।

कतमानि पुनस्तानि ? "अण्युवः, अण्वः, क्षिपः"—इत्येव मादीनि *।
वाङ्मये अवस्थिता अवन्त्येताः कर्माणीति अण्युवः। अण्वः परि-
माणात् एताः। क्षिप्यते आभिः क्षेप्तव्यं द्रव्य मिति क्षिपः। इत्येव
मादि ॥

आह ;—"अङ्गुलयः कस्मात्" ? उच्यते ;—"अग्रगामिन्यो भवन्ति"
अग्रे ह्येताः कर्मसु गच्छन्ति। अथ "वा" "अग्रगालिन्यो भवन्ति"
अग्रे ह्येता गलन्ति उदकानि। "अग्रकारिण्यो वा भवन्ति" अग्रे
ह्येताः कर्माणि कुर्वन्ति। "अङ्कना भवन्ति वा" तथाहि,—यो
ह्येताभिरभिहन्यन्तेऽथावस्थित इव भवन्ति। "अपि वा अभ्यञ्चनादेव
स्युः" एता हि तं तं मर्थं माभिमुख्येनाञ्चन्ति गच्छन्ति। ये तु
"अभ्यञ्चनाः"—इत्यभिधीयन्ते, तेषा मभ्यञ्च्यत आभिरिति † ॥

"तासाम्" अङ्गुलीनाम् "एषा" निर्वाचिका ऋग् "भवति",
—॥ २ ॥

**दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोज-
नेभ्यः। दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश
युक्ता वहद्भ्यः ॥** अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि
कक्ष्याः प्रकाशयन्ति कर्माणि योक्त्राणि योजनानीति
व्याख्यात मभीशवोऽभ्यश्नुवते कर्म्माणि। दश धुरो
दश युक्ता वहद्भ्यः। धूर्धूर्वतेर्वधकर्म्मण इय मपीतरा धूरे-

* १भा० १९१—१९९ पृ०।

† क्वचित् 'अङ्कना भवन्ति', 'अञ्चना भवन्ति'—इति द्विविधोऽपि पाठः समाती दृश्यकारस्य।

तस्मादेव विहन्ति वहं धारयतेर्वा कान्तिकर्म्माण उत्तरे धातवोऽष्टादशान्ननामान्युत्तराण्यष्टाविंशतिरन्नं कस्मा दानतम्भूतेभ्योऽत्तेर्वान्तिकर्म्माण उत्तरे धातवो दश। बलनामान्युत्तराण्यष्टाविंशतिर्बलं कस्माद्बलं भरं भवति बिभर्त्तेर्धननामान्युत्तराण्यष्टाविंशतिरेव धनं कस्मा-द्धिनोतीति सतो गोनामान्युत्तराणि नव क्रुध्यति-कर्म्माण उत्तरे धातवो दश क्रोधनामान्युत्तराण्येकादश गतिकर्म्माण उत्तरे धातवो द्वाविंशशतं क्षिप्रनामा-न्युत्तराणि षड्विंशतिः क्षिप्रं कस्मात् संक्षिप्तो वि-कर्षोऽन्तिकनामान्युत्तराण्येकादशान्तिकं कस्मादानीतं भवति सङ्ग्रामनामान्युत्तराणि षट्चत्वारिंशत् सङ्-ग्रामः कस्मात् सङ्गमनाद्वा सङ्गरणाद्वा सङ्गतौ ग्रामा-विति वा तत्र खल्व इत्येतस्य निगमा भवन्ति॥ ३ (९)॥

दशावनिभ्य इति *। अवनय इत्येव मादीनि नद्यादिनामभिः सन्दिश्यते, तदर्थ मिद मुदाह्रियते। त्रिष्टुबेषा। अर्बुदस्य काद्रवेयस्य सर्पस्यार्षम् †। ग्रावस्तुतौ विनियुक्ता। दशभिरवनिभिः ये उपचर्यन्त ग्रावाणः, सोमाभिषवकर्म्मणि प्रवृत्ते, ते दश अवनयः; ‡ तेभ्यो 'दशा-वनिभ्यो' हे ऋत्विजः! यूय मपि 'अर्चय' स्तुतीः प्रोच्चारयतेत्यर्थः।

* ऋ० सं० ८ ४, १०, २।

† "ताम् सोमाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्"—इति ऐ० ब्रा० ६, १, १।

‡ भा० १९५ पृ० (११)।

एव मेव दशभिः कक्ष्याभिर्ये उपचर्यन्ते, ते दशकक्ष्याः;* तेभ्यो 'दशकक्ष्येभ्यः' अर्चत। दशभिर्योक्त्रैः ये उपचर्यन्ते, ते दशयोक्त्राः†; तेभ्यो 'दशयोक्त्रेभ्यः' अर्चत। दशभिर्योजनैः ये उपचर्यन्ते, ते दशयोजनाः‡; तेभ्यो 'दशयोजनेभ्यः' अर्चत। दशभिरभीशुभिर्ये उपचर्यन्ते, ते दशाभीशवः§; तेभ्यो 'दशाभीशुभ्यः' अर्चत। 'अजरेभ्यः' अजरणधर्मभ्यः 'दश धुरः'‖ य एते ग्रावाणः तेभ्यः अर्चत। दशभिर्दशभिरङ्गुलीभिर्य एते युक्ता वहन्ति ग्रावाणः, तेभ्य एभ्यो 'दश युक्ता वहद्भ्यः' अर्चत॥ इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"अवनयोऽङ्गुलयो भवन्ति" ता हि "अवन्ति कर्माणि" रक्षन्ति भक्षयन्ति वा क्षिपयन्तीत्यर्थः। "कक्ष्याः" अङ्गुलय एव; ता हि "प्रकाशयन्ति कर्माणि" प्रकटीकुर्वन्तीत्यर्थः। "योक्त्राणि"—इत्येतत् पदं "योजनानि इति" अनेन पदेन व्याख्यातम्। योजनानीत्येतत् निगदसिद्ध मेव। "अभीशवः" अपि अङ्गुलय एव; ता हि "अभ्यश्नुवते कर्माणि" व्याप्नुवन्तीत्यर्थः। अनेकैर्नामभिरङ्गुलय एवोक्ताः अनेकक्रियाशक्त्युपप्रदर्शनाय। एते ग्रावाण एव मनेकक्रियायोगिनीभिरङ्गुलीभिर्गृहीतास्तदर्थं मर्चतेति। "धूः धूर्वतेः वधकर्मणः" ध्वरति धूर्वतीति वधकर्मसु पठितम्¶। "इय

* १भा० १९४ पृ० (१०)।
† १भा० १९७ पृ० (१६)।
‡ १भा० १९७ पृ० (१७)।
§ १भा० १९८ पृ० (२०)।
‖ १भा० १९७ पृ० (१८)।
¶ १भा० २८१ पृ० (४)।

मपीतरा धूः" अनडुहादिसम्बन्धिनी। "एतस्मादेव" धातोः वधकर्मणः। सापि "विहन्ति वहम्" अनडुहोऽश्वस्य वा। "धारयतेर्वा" सा हि धारयत्यश्व मनड्वाहञ्च॥

"कान्तिकर्माण उत्तरे धातवोऽष्टादश"*। खल्वयं पुरुषो व्याख्यातः सर्वाङ्गः साङ्गुलः, तं खलु काम एव प्रथम मा विवेशेति उत्तरे कान्त्यर्था इत्यर्थः। यदपि ह्यकान्तं भवति, तदप्यङ्गुलीभिरेव कान्तं क्रियत इत्यतोऽङ्गुलिनामभ्यः 'उत्तरे कान्तिकर्माणः' समाम्नाताः। कियन्तः पुनस्ताः? इति। 'अष्टादश' अष्टौ च दश च अष्टादश (१८)। कतमे पुनस्ते? इति। "वष्मि, उश्मसि, अववेति" —इत्येव माद्यः†॥

"अन्ननामान्युत्तराणि अष्टाविंशतिः"‡। अन्नस्य नामानि 'अन्ननामानि', 'उत्तराणि' प्रकृतेभ्यः कान्तिकर्मभ्यः; अन्न मेव हि कान्तं सर्वभावेभ्यो भवतीति कान्तिकर्मभ्यः उत्तराणि अन्ननामानि। कियन्ति पुनस्तानि? 'अष्टाविंशतिः' अष्टौ च विंशतिश्च अष्टाविंशतिः (२८)। कतमानि पुनस्तानि? "अन्धः, वाजः, पाजः, प्रयः, पृक्षः"—इत्येव मादीनि§। अन्ध इत्ययं निर्वक्ष्यति॥। वाजयितव्यं पूजयितव्यञ्च एतद् भोजनायोपस्थितं भवतीति वाजः। पीयत इति पाजः। प्रयः पानादेव॥

---

* १भा० १९९ पृ० ९ ख०।

† १भा० १९९—२०१ पृ०।

‡ १भा० २०१ पृ० ७ ख०।

§ १भा० २०४—२११ पृ०।

|| नैग० का० ५, १, १।

आह;—"अन्नं कस्मात्"? उच्यते;—"आ" आभिमुख्येन ह्येतत् "नतं" प्रह्वीभूतं भवति भोजनाय भूतानाम्। "अत्तेर्वा" अद्यते अत्ति च भूतानि, तस्मादन्नं तदुच्यत इत्युक्तम्॥

"अत्तिकर्माण उत्तरे धातवो दश"*। अन्न मेव ह्यद्यत इत्यन्न-नामभ्य 'उत्तरेऽत्तिकर्माणः' समाम्नाताः। कियन्तस्ते? इति 'दश' (१०)। कतमे पुनस्ते? "आवयति, भर्वति, बभस्ति"—इत्येव मादयः † ॥

"बलनामान्युत्तराण्यष्टाविंशतिः" ‡। बलस्य नामानि 'बलना-मानि', 'उत्तराणि' प्रकृतेभ्योऽत्तिकर्मभ्यः; य एव ह्यदन्ति त एव बलवन्तो भवन्तीत्यत्तिकर्मभ्य उत्तराणि बलनामानि समाम्नातानि। कियन्ति पुनस्तानि? 'अष्टाविंशतिः' अष्टौ च विंशतिश्च अष्टाविंशतिः (२८)। कतमानि पुनस्तानि? "ओजः, पाजः, शवः"—इत्येव मादीनि §। ओजः ओजतेर्वोब्जते वा। इत्येव मादि।

आह;—"बलं कस्मात्"? उच्यते;—तद्धि "भरं भवति" भ्रियते (भृ०उ०) हि सः, योऽवलिप्तो भवति। "बिभर्त्तेः" वा (जु०उ०) स एति॥

"धननामान्युत्तराण्यष्टाविंशतिरेव" ‖। य एव बलवन्तो भवन्ति त एव धनं प्राप्नुवन्ति इति बलनामभ्यः 'उत्तराणि धननामानि'।

---

* १भा० ३११ पृ० ८ ख०।
† १भा० ३१३—३१४ पृ०।
‡ १भा० ३१५ पृ० ९ ख०।
§ १भा० ३१५—३११ पृ०।
‖ १भा० ३११ पृ० १० ख०।

कियन्ति पुनस्तानि? 'अष्टाविंशतिरेव' (२८)। धननामान्युत्तराण्यष्टाविंशतिः-इमान्यष्टाविंशतिरेवेत्येव शब्दः। कतमानि पुनस्तानि? "मघम्, रेक्णः, रिक्थम्, वेदः"—इत्येवम्प्रभृतीनि*। रिच्यत इति रेक्णः। अतिरिच्यमान मेतद्धि हैव तिष्ठति म्रियमाणस्येति रिक्थम्। विद्यते लभ्यते एव इति वेदः। इत्येव मादीनि॥

आह;—"धनं कस्मात्"? उच्यते;—"धिनोतीति सतः" सत इति कारकावधारणम्, धिनोतिस्तर्पणार्थः† ॥

"गोनामान्युत्तराणि नव"‡। गवां नामानि 'गोनामानि', प्रकृतेभ्यो धननामभ्यः; गाव एव हि प्रकृष्टं धन मिति धननामभ्यः 'उत्तराणि' गोनामानि। कियन्ति पुनस्तानि? 'नव' (९)। कतमानि पुनस्तानि? "अघ्न्या, उस्रा, उस्रिया"—इत्येव मादीनि§। अघ्न्या अहन्तव्या भवति। इत्येव मादि निर्वचनम्। उक्तनिर्वचनो हि गो-शब्दः‖, अतो गौः कस्मात् इति न ब्रवीति॥

"क्रुध्यतिकर्माण उत्तरे धातवो दश"¶। धनार्थ मेव हि गवार्थं च क्रोधो भवतीति गोनामभ्यः 'उत्तरे' क्रुध्यर्थाः समाम्नाताः। कतमे पुनस्ते? इति। "रेळते, हेळते"—इत्येव मादयः**॥

क्रुध्यर्थसम्बन्धेनैव "क्रोधनामान्युत्तराणि"। कियन्ति पुनस्तानि?

---

* १भा० २२१--२२८ पृ०।
† 'धिवि हिवि धिवि जिवि प्रीणनार्थाः' भू० प०। पा० ३, १, ८०।
‡ १भा० २२८ पृ० ११ ख०।
§ १भा० २२८—२३२ पृ०।
‖ १०५ पृ० १ ख०।
¶ १भा० २३२ पृ० १२ ख०।
** १भा० २३२—२३३ पृ०।

Kátantra, (Sans.) Fasc. I—VI @ 1/ each .. .. .. 6 0
Kathá Sarit Ságara, (English) Fasc. I—X @ 1/ each .. .. 10 0
Lalita Vistara, (Sans.) Fasc. I—VI @ /10/ each .. .. 3 12
Ditto (English) Fasc. I—II @ 1/ each .. .. 2 0
Maitri Upanishad, (Sans. & English) Fasc. I—III (in one volume) .. 1 14
Mímáṃsá Darṣana, (Sans.) Fasc. II—XVI @ /10/ each .. .. 9 6
Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /10/ each .. .. 2 8
Nṛisiṃha Tápaní, (Sans.) Fasc. I—III @ /10/ each .. .. 1 14
Nirukta, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. I—III @ /10/ each Fasc. 5 10
Nárada Pancharátra, (Sans.) Fasc. IV @ /10/ each .. .. 0 10
Nyáya Darṣana, (Sans.) Fasc. I and III @ /10/ each .. .. 1 4
Nítisára, or, The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—IV 1 14
Parisishtaparvan (Sans.) Fasc. I .. .. .. .. 0 10
Piṅgala Chhandaḥ Sútra, (Sans.) Fasc. I—III @ /10/ each.. .. 1 14
Prithiráj Rásau, (Sans.) Fasc. I—V @ /10/ each .. .. 3 2
Ditto (English) Fasc. I .. .. .. .. 1 0
Páli Grammar, (English) Fasc. I and II @ /10/ each .. .. 1 4
Prákṛith Lakshaṇam, (Sans.) Fasc. I .. .. .. 1 8
Parásara Smṛiti (Sans.) Fasc. I and II .. .. .. 1 4
Rig Veda, (Sans.), Vol. I, Fasc. IV .. .. .. .. 0 10
Śrauta Sútra of Ápastamba, (Sans.) Fasc. I—VIII @ /10/ each .. 5 0
Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /10/ each .. 6 14
Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /10/ each .. 5 10
Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /10/ each Fasc. .. .. .. 23 2
Sáhitya Darpaṇa, (English) Fasc. I—IV @ /10/ each .. .. 2 8
Sáṅkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each .. 1 4
Súrya Siddhánta, (Sans.) Fasc. IV .. .. .. .. 0 10
Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. 0 10
Śaṅkara Vijaya, (Sans.) Fasc. II and III @ /10/ each .. .. 1 4
Sáṅkhya Pravachana Bháshya, (English) Fasc. III .. .. 0 10
Sáṅkhya Sára, (Sans.) Fasc. I .. .. .. .. 0 10
Suśruta Saṃhita, (Eng.) Fasc. I and II @ 1/eac'n .. .. 2 0
Taittiríya Áraṇyaka, (Sans.) Fasc. I—XI @ /10/ each .. .. 6 14
Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /10/ each .. .. 15 0
Ditto Saṃhitá, (Sans.) Fasc. I—XXXII @ /10/ each .. .. 20 0
Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each .. .. 1 14
Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each 1 4
Ditto Aitareya Śvetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each .. .. .. .. 1 4
Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /10/ each .. .. 11 14
Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each .. .. 6 14
Váyu Puráṇa, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—4, @ /10/ each Fasc. .. .. .. .. .. 6 4
Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /10/ each .. .. 1 4
Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each .. 4 6
The same, bound in cloth .. .. .. .. 5 2

## *Arabic and Persian Series.*

'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each .. 8 2
Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each .. .. 27 8
Ditto (English) Vol. I (Fasc. I—VII) .. .. .. 12 4
Akbarnámah, with Index, (Text) Fasc. I—XXII @ 1/4 each .. 27 8
Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each .. 11 14
Beale's Oriental Biographical Dictionary, pp. 291, 4to, thick paper, @ 4/12; thin paper .. .. .. .. .. 4 8
Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each .. .. .. .. .. .. 26 4
Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each .. .. 17 8
Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. 3 0
Futúḥ-ul-Shám Waqídí, (Text) Fasc. I—IX @ /10/ each .. .. 5 10
Ditto Ázádí, (Text) Fasc. I—IV @ /10/ each .. .. 2 8
Haft Ásmán, History of the Persian Mansawi. (Text) Fasc. I .. 1
History of the Caliphs, (English) Fasc. I—VI @ 1/ each .. .. 6

*(Turn over.)*

Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /10/ each .. Rs. 1 14
Iṣabáh, with Supplement, (Text) 34 Fasc. @ /12/ each .. .. 25 8
Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each .. .. 3 2
Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each.. .. 9 6
Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I. .. .. 1 0
Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc XIX with Index @ /12/ .. .. .. 12 0
Mu'áṣir-i-'Álamgírí (Text), Fasc. I—VI @ /10/ each .. .. 3 12
Nukhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0 10
Niẓámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. 2 0
Suyúṭy's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. .. 8 12
Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. .. 3 2
Ditto (English) Fasc. I—XIV @ 1/ each .. .. 14 0
Táríkh-i-Fírúz Sháhi, (Text) Fasc. I—VII @ /10/ each .. .. 4 6
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. .. 5 10
Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. .. .. 3 2

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each .. .. 80 0
   Ditto Index to Vols. I—XVIII .. .. 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.
   *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*
   General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. .. .. .. .. 2 0
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. .. 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. .. 4 0
   Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 4 0
   A Grammar and Vocabulary of the Northern Balochí Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. .. .. 4 0
   Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. .. 2 0
   Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882).. 4 0
4. Anis-ul-Musharrihin .. .. .. .. .. 3 0
5. Catalogue of Fossil Vertebrata .. .. .. .. 2 0
6. Ditto of Arabic and Persian Manuscripts .. .. .. 1 0
7. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. 2 0
8. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 8
9. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1 0
10. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
11. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2 0
12. Khizánat-ul-'ilm .. .. .. .. .. 4 0
13. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40 0
14. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. .. 12 0
15. Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1 0
16. Sharaya-ool-Islám .. .. .. .. .. 4 0
17. Tibetan Dictionary .. .. .. .. .. 10 0
18. Ditto Grammar .. .. .. .. .. 8 0
19. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. 2 0

Notices of Sanskrit Manuscripts, Fasc. I—XVIII @ 1/ each .. 18 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 517.



# सभाष्यवृत्ति-निरुक्तम् ।

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAS'RAMÍ.

VOL. II.

FASCICULUS IV.

CALCUTTA:

PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 67, PARK STREET.

1884.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 AND 59, LUDGATE HILL, LONDON, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Atharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /10/ each.. | Rs. | 3 | 2 |
| Áśvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each | .. | 2 | 8 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /10/ each .. | .. | 8 | 12 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each | .. | 3 | 2 |
| Aphorisms of Sáṇḍilya, (English) Fasc. I .. .. | .. | 0 | 10 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each | .. | 6 | 14 |
| Brahma Sútras, (English) Fasc. I .. .. .. | .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. | .. | 5 | 0 |
| Bṛihad Áraṇyaka Upanishad, (Sans.) Fasc. IV, VI, VII & IX @ /10/ each | | 2 | 8 |
| Ditto (English) Fasc. II—III @ /10/ each .. | .. | 1 | 4 |
| Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each | .. | 3 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each | .. | 1 | 4 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, 1—7, @ /10/ each Fasc. .. .. .. | .. | 27 | 8 |
| Chhándogya Upanishad, (English) Fasc. II .. .. | .. | 0 | 10 |
| Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each .. .. | .. | 1 | 14 |
| Gopatha Bráhmaṇa, (Sans. & Eng.) Fasc. I and II @ /10/ each | .. | 1 | 4 |
| Gopála Tápaní, (Sans.) Fasc. I .. .. .. | .. | 0 | 10 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each .. | .. | 7 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /10/ each .. | .. | 1 | 14 |

*(Continued on third page of cover.)*

"एकादश" (११)* । कतमानि पुनस्तानि? "हेडः, हरः, हृणिः,† त्यजः" इत्येव मादीनि‡ । हे अरे इत्यनेनाविष्टो भवतीति हेडः। नीचैरनेन नरकं प्रति ह्रियते इति हरः। नीचैरनेन ह्रियते नरकं प्रतीति हृणिः। त्यजत्यनेनाविष्टो धर्मं जहातीति त्यजः। इत्येव मादि ॥

"गतिकर्माण उत्तरे धातवो द्वाविंशशतम्" (१२२)§ । क्रुद्धा एव सन्तः सुतरां गच्छन्तीति क्रोधनामभ्यः 'उत्तरे' 'गतिकर्माणः' समाम्नाताः || ॥

"क्षिप्रनामान्युत्तराणि षड्विंशतिः" ¶ । गतिसम्बन्धादेव 'क्षिप्रनामानि उत्तराणि' समाम्नातानि । कियन्ति पुनस्तानि? 'षड्विंशतिः' षट् च विंशतिश्च षड्विंशतिः (२६)। कतमानि पुनस्तानि? "नु, मक्षु, द्रवत्"—इत्येव मादीनि** । नुन्न इव क्षिप्रं गच्छतीति नु। मां क्षिणोति मां क्षिणोतीति सर्व एव हि क्षिप्रगामिनं मन्यन्ते इति मक्षु । द्रवत् द्रवतेः । इत्येव मादि ॥

आह;—"क्षिप्रं कस्मात्"? उच्यते;—"विकर्षः" विकृष्टो विक्षिप्तोऽर्थः "संक्षिप्तः" क्षिप्र मुच्यते ॥

"अन्तिकनामान्युत्तराण्येकादश" †† । य एव हि क्षिप्रं गच्छति,

---

* १भा० २११ पृ० १२ ख० ।
† १भा० २१४ पृ० (१) द्रष्टव्यम् ।
‡ १भा० २१४—२१९ पृ० ।
§ १भा० २१९—२२९ पृ० १४ ख० ।
|| १भा० २२९—२५० पृ० ।
¶ १भा० २५० पृ० १५ ख० ।
** १भा० २५८—२६४ पृ० ।
†† १भा० २६४ पृ० १६ ख० ।

स एवाभिप्रेतार्थस्य अन्तिके समीपे भवन्तीति चिप्रनामभ्यः 'उत्तराणि' 'अन्तिकनामानि'। कियन्ति? 'एकादश' (११)। कतमानि पुनस्तानि? "तळित्, आसात्"—इत्येव मादीनि *। ताड्यतेऽस्मिन् प्रदेशेऽवस्थित इति तळित् इत्युच्यते। अन्तिकप्रदेशोपासन्नः स आसात्। इत्येव मादि योज्यम्।

आह;—"अन्तिकं कस्मात्"? उच्यते;—तद्धि "आनीतं भवति" सन्निकृष्टत्वात्॥

"सङ्ग्रामनामान्युत्तराणि षट्चत्वारिंशत्" †। सङ्ग्रामस्य नामानि 'सङ्ग्रामनामानि', 'उत्तराणि' प्रकृतेभ्योऽन्तिकनामभ्यः; अन्तिकीभूताना मेव हि सङ्ग्रामो भवतीत्यन्तिकनामभ्य उत्तराणि सङ्ग्रामनामानि। कियन्ति पुनस्तानि? 'षट्चत्वारिंशत्' (४६)। कतमानि पुनस्तानि? "रणः, विवाक्, नदनुः"—इत्येव मादीनि ‡। रणन्त्यस्मिन् प्रहरा इति रणः। विविधा प्रहराणा मत्र वाग् भवतीति विवाक्। नदन्त्यस्मिन् प्रहरा इति नदनुः। इत्येव मादि योज्यम्॥

आह;—"सङ्ग्रामः कस्मात्"? उच्यते;—"सङ्गमनाद्वा"; सङ्गच्छन्ति हि परस्परेण तत्र योधाः। "सङ्गरणाद् वा" सङ्गृणन्ति संशब्दायन्ते प्रहरा यत्र परस्परेण। "सङ्गतौ ग्रामाविति वा"। ग्राम इति सङ्घात इत्युच्यते। परस्परं जीगीषया समागतौ तत्र भवतः॥

"तत्र" षट्चत्वारिंशत्के सङ्ग्रामनामगणे "खले" § —"इत्येतस्य"

---

* १आ० २६४—२६६ पृ०।

† १आ० २६६—२६७ पृ० १० ख०।

‡ १आ० २६७—२७८ पृ०। तत्र "विखादः"—इति तृतीयं पदम् (२६८ पृ०)।

§ १आ० २७६ पृ० (२८)।

नाम्नः "निगमाः" सन्दिग्धाः "भवन्ति", इतरोऽपि धान्य-खल इत्युच्यते सङ्ग्रामोऽपि। तत्रैवं सति अस्या ऋचि वक्ष्यमाणायां* 'खल न पर्षान्'—इति व्यपदेशात् विभागो लक्ष्यते सत्यखल-सङ्ग्राम-खलयोः—॥ ३॥

अभीदमेकमेको अस्मि निष्षाळ्†भी द्वा किमु त्रयः करन्ति। खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः॥ अभिभवामीद मेकमेको ऽस्मि‡ निष्षहमाणः§ सपत्नानभिभवामि द्वौ किं मा त्रयः कुर्वन्त्येक इता सङ्ख्या द्वौ द्रुततरा सङ्ख्या त्रयस्तीर्णतमा सङ्ख्या चत्वारश्चलिततमा सङ्ख्याष्टावश्नो-तेर्नव न वननीया नावाप्ता वा दश दस्ता दृष्टार्था वा विंशतिर्द्विर्दशतः शतं दशदशतः सहस्रं सहस्वदयुतं नियुतं प्रयुतं॥ तत्तदभ्यस्त मर्बुदो¶ मेघो भवत्यरण मम्बु तदोऽम्बुदोऽम्बुमद्भातीति** वाम्बुमद्भवतीति वा स यथा महान् बहुर्भवति वर्षस्त††दिवार्बुदम्। खले न

* इत उत्तरस्मिन्नेव खण्डे (६ पं०)।
† "निःषाळ" क। "निष्षाळ" ग, ङ, च।
‡ "मेको अस्मि" क ख, ग।
§ 'निःषहमाणः" ङ, च।
‖ "प्रयुतं नियुतं' क, ख, ग।
¶ "मम्बुदो" ङ, च।
** "महोऽम्बुमद्भातीति" क, ख, ग।
†† "वर्षस्त" च।

पृषान् प्रति हन्मि भूरि। खल इव पर्षान् प्रतिहन्मि भूरि खल इति सङ्ग्रामनाम खलतेर्वा स्खलतेर्वाय मपीतरः खल एतस्मादेव समास्कन्नो भवति। किं मा निन्दन्ति शत्रवोऽनिन्द्राः। य इन्द्रं न विदु*रिन्द्रो ह्यह मस्म्यनिन्द्रा इतर इति वा व्याप्तिकर्माण उत्तरे धातवो दश तत्र द्वे नामनी† आक्षाण आश्नुवान आपान आप्नुवानो वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् तत्र वियात इत्येतद् वियातयत इति वा‡ वियातयेति वा। आखण्डल प्र हूयसे। आखण्डयितः§। तळि॥ दित्यन्तिकवधयोः संसृष्टकर्म¶ ताडयतीति** सतः॥

॥ ४ (१०) ॥

"अभीऽ३द मेक०—०ऽनिन्द्राः"††। वैकुण्ठस्येन्द्रपुत्रस्येय मार्षम्। जगती। दशरात्रस्य नवमेऽहनि निष्केवल्ये शस्यते। आध्यात्मिको मन्त्रः। "इदं" तावत् जगत् 'एकः' एव अहम् 'अभि अस्मि' "अभि भवामि", अभि भूय च भवामि। अस्य सर्वस्याह मेकोऽधिपतिरि-त्यभिप्रायः। कथम्पुनरभिभवाम्यह मेतत्? "एकम् एकः" 'निष्-

---

* "न विविदु" ङ, च।

† "माक्षी" क, ख, ग।

‡ नैतद् "वा"-पदं दृश्यते ङ-च-पुस्तकयोः।

§ "आखण्डयितः खण्डं खण्डयतेः" ङ, च।

|| 'तळि" क, ख। 'तडि" ङ, च।

¶ "संसृष्टं कर्म" क।

** "ताळयतीति' क, ख, ग।

†† ऋ० सं० ८, १, ९, १।

षाट्' "निषषहमाणः" "सपत्नान्" शत्रून् निश्चयेनाधिकं वाभिभवा-मीत्यर्थः। सहतिरभिभवार्थश्छन्दसि। कथम्पुनरभिभवन् सपत्नानह-मस्य जगत आधिपत्ये वर्त्ते? यावदेकं तावदागतं सन्त मेक एवा-भिभवामि सपत्नम्, 'अभी द्वा' "द्वौ" अप्यागतौ एक एव "अभि भवामि"। "किम्" 'उ' "त्रयः" 'करन्ति' त्रयोऽपि युगपदागताः सन्तः एकाकिनोऽपि मम किं "कुर्वन्ति"? न किञ्चिदपीत्यभिप्रायः। किञ्च 'खले न पर्षान्' गाह्यमाने हन्यमाने गम्यमानेऽन्ने। एकः खलशब्दः उपमानम्, उपमासम्बन्धात्; यथा 'खले' खलस्थाने कर्षकेण 'पर्षान्' बहूनपि सञ्चितान् अप्रतिबन्धेन क्षुधेरन्, एव मह मपि भूरीनपि शत्रूनागतान् क्षणादेव तैरप्रतिबध्यमानः 'हन्मि'। त मेव-म्प्रभावं सन्तं मां "किं निन्दन्ति शत्रवः?" नाहं निन्दार्हः, स्तव्योऽह मित्यभिप्रायः। अपि च "अनिन्द्राः", 'ये' माम् "इन्द्रं न विदुः" याथात्म्यतः,ते कथ मविज्ञायैव मां निन्दन्ति? नैतन्न्याय्य मित्यभिप्रायः। "अनिन्द्रा इतर इति वा" अथवा अनिन्द्राः सन्तः आत्मना कथ मिन्द्रं सन्तं मां निन्दन्ति? न तु नामेन्द्रत्वेनैवाह मतिरिक्तस्तेभ्यः, अथ कथ मितरे अनिन्द्राः सन्तो न लज्जन्तीत्यभिप्रायः॥ इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"एक इता सङ्ख्या" गता सङ्ख्या, अलं प्राप्तेत्यर्थः *। द्व्यादिकं वापीयं गन्ता। "द्वौ द्रुततरा सङ्ख्या" एकस्याः सकाशात् †। "त्रयस्तीर्णतमा सङ्ख्या" द्वयोः सकाशात् ‡। प्रसक्तानु-

* "एकपदी" दे० का० ११, ४, ९।

† 'द्विपदी" दे० का० ११, ४, ९।

‡ "त्रिनाभि" नैग० का० ४, ४, ९।

प्रथक मुच्यते;—"चत्वारश्चलिततमा सङ्ख्या" चिभ्यः सकाशात्*। "अष्टावश्नोतेः" ते हि सप्त सङ्ख्या व्याप्य वर्त्तन्ते†। "नव" इति या सङ्ख्या, सा "न वननीया" न सम्भजनीया भवति; नव-सङ्ख्या-युक्तायां हि तिथौ न कश्चिदप्यारम्भः क्रियते‡। "दश" इति या सङ्ख्या, सा "दस्ता"; दशान्तैव हि§ सङ्ख्या भवति। "दृष्टार्था वा" दृष्टार्थैव हि‖ दशाना मुपरि पुनः पुनः दृश्यते सङ्ख्या। तद्यथा;—एकादशेत्येव मादि। तस्माद् दृष्टार्थदर्शनाद् दशेत्युच्यते। "विंशति-र्द्विदशतः" द्विः दश विंशतिरित्युच्यते। "शतं दशदशतः" दशकृत्वो-ऽभ्यस्ता या दश, ताः समुदिताः शत मित्युच्यते¶। "सहस्रं सह-स्वत्"**। सह इति बलनाम††, तेन तद्वत्; दुर्बलाना मपि सहस्रं समुदितं बलवदेव भवति सङ्घातबलीयस्त्वात्। "अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम्" सहस्रं दशकृत्वोऽभ्यस्त मयुत मामिश्रीभूत मयुत मित्युच्यते‡‡, अयुत मपि दशकृत्वोऽभ्यस्तं नियुत मित्युच्यते§§, नियुत मपि दशकृत्वोऽभ्यस्तं प्रयुत मित्युच्यते‖‖। अथार्बुदशब्द-

* "चतुष्पदी" दे॰ का॰ ११, ४, ९।
† "अष्टापदी" दे॰ का॰ ११, ४, ९।
‡ "नवपदी" दे॰ का॰ ११, ४, ९।
§ "दस्यतेः चयार्थात्" दे॰ का॰ ७, ९, ४। पुरस्ताच्च ७१ पृ॰ ९ पं॰ किञ्च ७२ पृ॰ ११ पं॰।
‖ तथा च दशेति दृशेः रूप मिति भावः। "दश" ऋ॰ सं॰ १, ७, १, २।
¶ "शतशाः" दे॰ का॰ १०, ४, २।
** "सहस्रशाः" दे॰ का॰ १०, ४, २।
†† १भा॰ ११९ पृ॰ (१७)।
‡‡ "अयुतं" दे॰ का॰ ११, १, २। य॰ वा॰ सं॰ १७, २।
§§ "नियुतं" य॰ वा॰ सं॰ १७, २।
‖‖ "प्रयुतं" य॰ वा॰ सं॰ १७, २।

विवचया अम्बुशब्दं निर्वक्ति ;—अरणशीलम् "अम्बु*", तस्य दाता मेघः, सः "अम्बुदः", तस्य; "स यथा" उदकभाव मापद्यमानो "महान् बहुर्भवति वर्षन् तदिवार्बुदम्" तदिव वर्षन् यद् बहु द्रव्यजातं भवति, तदर्बुद मित्युच्यते †। "खल इति सङ्ग्रामनाम" ‡। "खलतेर्वा" भंशयत्यर्थस्य, भ्रंशन्ति हि योधाः। "स्खलतेर्वा" हिंसार्थस्य, हिंसन्ते हि तत्र परस्परेण। "अय मपीतरः" "खलः" धान्यखलः "एतस्मादेव", तत्रापि हि भ्रंशन्ति चूर्णमानानि धान्यानि हिंस्यन्ते वा, चूर्ण्यन्त इत्यर्थः। अथवा "समास्कन्नः" असौ "भवति" विप्रकीर्णैः धान्यैः॥

"व्याप्तिकर्माण उत्तरे धातवो दश"(१०) §। सङ्ग्रामे हीतरेतरं व्याप्नुवन्ति योधा इति सङ्ग्रामनामभ्यः 'उत्तरे' 'व्याप्तिकर्माणः'। कतमे पुनस्ते? इति। "इन्वति, नक्षे"—इत्येव मादयः ||। "तत्र" दशके व्याप्तिकर्मधातुगणे एते "द्वे" "नामनी" भवतः—'आचाणः(१)' इति, 'आपानः(९)' इति च ¶। तत्र, "आचाण आश्नुवानः" यो हि अश्नोति व्याप्नोति स आचाण इत्युच्यते, तथा च य आप्नोति स "आप्नुवानः" सन् "आपानः" इत्युच्यते॥

"वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत्" **। सङ्ग्रामे हीतरेतरं व्याप्य ततो घ्नन्तीति व्याप्तिकर्मभ्यः 'उत्तरे' 'वधकर्माणः' समाम्नाताः।

---

* १भा० ११० पृ० (११)।

† "अर्बुदं" य० वा० सं० १७, १।

‡ १भा० २०९ पृ० (१८)।

§ १भा० २०८ पृ० १८ ख०।

|| १भा० २०८—२८० पृ०।

¶ १भा० २०९ पृ० (१), (९)।

** १भा० २८० पृ० १९ ख०।

कियन्तः? 'त्रयस्त्रिंशत्'(३३)। कतमे पुनस्ते? इति। "दभ्नोति, श्नथति, ध्वरति, धूर्वति"—इत्येव मादयः*। "तत्र" वधकर्मधातुमध्ये "वियात इत्येतद्" नाम †। तत्पुनरेवं निर्वक्तव्यम्;—"वियातयते" नाना प्रकारं यातयते यः शत्रून्, स वियातः। अथ "वा" एव मन्यथा स्यात्—"वियातय" एव मुच्यते यः स्तोतृभिः, स वियातः। 'आखण्डलः'—इत्येतदपि नामैव ‡। निगम मपि चात्र दर्शयति;— "आखण्डल प्र हूयसे" §। आभिमुख्येनावस्थितो यः खण्डयति मेघान्, स आखण्डयिता; तस्य सम्बोधनम्। हे "आखण्डयितः!"॥

इरिम्बिठिर्नाम कण्वो मन्त्रदृक्। तस्यैव मार्षम्। गायत्री। ऐन्द्री। रात्रिपर्यायेषु मध्यमरात्रिपर्याये होतुरियं शस्त्रे विनियुक्ता। "शचिगो०—०हूयसे" ‖। शचिगो इति चैकं पदम्। शचीति कर्मनाम ¶। तस्य शच्याख्यस्य कर्मणो येय मिष्टि-पशु-सोमादि-लक्षणा सन्ततिः, सा शाचिः। अथ वा स्वार्थिक एव तद्धितः स्यात्। शच्येव शाचिः। तं प्रत्याह्वयमानो यो गच्छति, स शाचिगुरिन्द्रः, तस्य सम्बोधनं हे 'शाचिगो!' इति। तथैव शाच्यां य आगतः सन् पूज्यते स शाचि-पूजनः, तस्य सम्बोधनं हे 'शाचिपूजन!'। हे 'आखण्डल' आखण्डयितः! शत्रूणां मेघानां वा। इय मस्माभिः

---

* १अा० १८१ १८९ पृ०।

† १अा० १८२ पृ० (१९)।

‡ १अा० १८४ पृ० (११)।

§ ऋ० सं० ६, १, १४, १।

‖ "शाचिगो शाचिपूजनायं रणाय ते सुतः। आखण्डल प्र हूयसे॥" ऋ० सं० ६, १, १४, १।

¶ १अा० १०० पृ० (११)।

प्रस्तुता शची यां प्रति ते नित्य मिष्ट मागतं यथा च पूज्यसे त्व मागतः सन्, किञ्च एतस्याञ्च शच्या मस्मिन् कर्मणि ‘अयं’ ‘रणाय’ रमणाय ‘ते’ तव ‘सुतः’ अभिषुतः सोमो यतोऽस्माभिः त्वं ‘प्रह्वयसे’ प्रकर्षेणादरवद्भिर्ह्वयसे आह्वयसे। स एव मेतज्ज्ञात्वा अस्मदनुग्रहाय अनतीतकाल मागन्तु मर्हसीत्यभिप्रायः॥

आखण्डलशब्देऽल्पतरं वक्तव्यं बहुतरं तडिच्छब्दे इति क्रमभेदतो *निरुच्यते ;—“तडिदित्यन्तिकवधयोः संसृष्टकर्म”। तडिदित्येतच्छब्दरूप मन्तिकाभिधायि वधाभिधायि च † इत्येक मेव ह्येतदुभाभ्या मर्थाभ्यां सम्प्रयुज्यते। विद्युदपि च तडिदित्युच्यते ‡। सा पुनः कर्त्तरि कारके “ताडयतीति सतः” ॥ ४ ॥

त्वया॑ व॒यं सु॒वृधा॑ ब्रह्मणस्पते स्पा॒र्हा वसु॑ मनु॒ष्या दंदीमहि। या नो॑ दू॒रे त॒ळितो॒§ या अरा॑तयो॒ऽभि सन्ति॑ ज॒म्भया॒ ता अ॑न॒प्नसः॑। त्वया वयं सुवर्द्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वहूनि मनुषेभ्य आ ददीमहि याश्च नो दूरे तडितो || याश्चान्तिके ऽरातयो ¶ ऽदानकर्माणो वादानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनामा-

* ‘ तु॒ळित् (२१), आख॑ण्डल (२२,” १भा० १८१ पृ० १९ पं०।
† १भा० १९४ पृ० (१), १८४ पृ० (११)।
‡ अनुपद मेव वक्ष्यत्याचार्यः १९८ पृ० १ पं०।
§ “तळितो” क, ख, ग।
|| “तळितो” क, ख, ग।
¶ “याश्चान्तिके अरातयो” क। “याश्चान्तिकेऽरातयो” ङ।

प्नोतीति सतो विद्युत्तडिद्भवतीति* शाकपूणिः सा ह्यव-
ताडयति† दूराच्च दृश्यतेऽपि त्विद मन्तिकनामैवाभि-
प्रेतं स्यात्। दूरे चित् सन्तळिदिवाति रोचसे। दूरे
ऽपि सन्नन्तिक इव सन्दृश्यस इति वज्रनामान्युत्तराण्य-
ष्टादश वज्रः कस्माद् वर्जयतीति‡ ससतस्तत्र कुत्स
इत्येतत् कृन्ततेर्ऋषिः कुत्सो भवति कर्त्ता स्तोमाना
मित्यौपमन्यवो ऽत्राप्यस्य§ वधकर्मैव भवति तत्सख
इन्द्रः शुष्णं जघानेत्यैश्वर्यकर्माण उत्तरे धातवश्चत्वारः॥
ईश्वरनामान्युत्तराणि चत्वारि तत्रेन इत्येतत् सनित
ऐश्वर्येणेति वा सनित मनेनैश्वर्य मिति वा ॥ ५ (११)॥

यथा त्वन्तिकनामेदं तथैव ऋगुदाहरणम्;—"त्वया वयं०—०
अनप्नसः"—इति¶। गृत्समदस्यार्षम्। जगती। प्रवर्ग्ये विनियुक्ता। हे
"ब्रह्मणस्पते!" "त्वया" "वयं" 'सुवृधाः' "सुवर्द्धचित्रा" सुष्ठु वर्द्धिताः
अनुगृहीताः सन्तः 'वसु' "वसूनि" यानि यानि 'स्पार्हा' स्पार्हाणि
'स्पृहणीयानि", तानि तानि 'मनुष्या' "मनुष्येभ्यः" तानभीभय
"आ ददीमहि"। किञ्च, "यास्त्र नो दूरे तळितः" 'या नो दूरे'
अध्वन्यवस्थिताः "अरातयः","याश्चान्तिके"। तडिच्छब्दस्यान्तिकाभि-

* "तळिद्भवतीति" क, ख, ग।
† "ह्यवताळयति" क, ख ग।
‡ "सन्तळिदिवाति" क, ख, ग।
§ "वज्रयतीति" क, ख, ग।
|| "ऽत्राप्यस्य" क, ख, ग।
¶ ऋ० सं० २, ६, १०, ४।

धायित्वम्। दूरे च अन्तिके च या अरातयः। अरातिः सेना। "अदानकर्माणः"। रातिर्दानार्थः *। अस्माक मभिमतानर्थान् ददतो ये निवारयन्ति ते। 'अरातयः' "अदानप्रज्ञाः" न दातव्य मस्मा-भिरेभ्य इत्येवं येषां प्रज्ञा ते अदानप्रज्ञाः। द्विविधा हि शत्रवः,— दुःखसम्नाय्याः, सुखसम्नाय्याश्च; तत्र ये दुःखसम्नाय्याः ते अदानप्रज्ञाः, ये अदानकर्माः ते सुखसम्नाय्याः। ते चोभयेऽपि दूरे चान्तिके चावस्थिता भवन्ति। "ताः" दूरान्तिकावस्थितानुभयानपि "जम्भय" निस्तेजान् कुरु त्वं अस्मास्वते! किञ्च, "अनप्नसः" अरूपास्तेतान् कुरु। "अप्न इति रूपनाम" †। तद्धि "आप्नोति" आश्रयम्॥

"विद्युत्०"। "या ह्यवताडयति" अग्निरूपेण। "दूरात्" एव "च" "दृश्यते"। तस्मान्न तस्या अन्तिकनामाभिसम्बन्धोऽस्ति। "अपि त्विदम्" अपरेणोदाहरणेन "अन्तिकनामैवाभिप्रेतं स्यात्"—"दूरे चित् सन्तळिदिवाति रोचसे" ‡। "दूरेऽपि सन्नन्तिक इव" अवस्थितो "दृश्यसे इति" अत्र दूरेऽपि सन्नन्तिक इवेति स्फुटतर मन्तिकाभि-धानत्वम्, न तथा पूर्वस्मिन् मन्त्रे—'या नो दूरे तळितः' इति॥

एव मन्तिकनामत्वेन वा विद्युन्नामत्वेन वा वधनामत्वेन वा प्रक-रणोपपदे अवेक्ष्य यथासम्भवं निर्वक्तव्यम्॥

"यो विश्वतः०—०वयं तव" §। एषा जगती। आग्नेयी।

---

* १भा० ३५६ पृ० (४)।

† १भा० ३३० पृ० (८)।

‡ ऋ० सं० १, ६, ११, १।

§ "यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन् तळिदिवाति रोचसे। रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव॥" ऋ० सं० १, ६, ११, १।

कुत्सेन दृष्टा। महाव्रते आग्निमारुते शस्त्रे अभिप्लवस्य च षष्ठेऽहनि आग्निमारुते एव च शस्यते। 'यः' त्वं हे 'अग्ने!' 'विश्वतः' सर्वतः 'सुप्रतीकः' सुदर्शनः शोभनदर्शनः, अपि च 'सदृङ्' यतो यतो दृश्यसे ततस्ततः समानदर्शनः तुल्य एव लक्ष्यसे। अपि च "दूरे" अपि "सन्" अतिभ्राजिष्णुत्वात् 'तळिदिव' अन्तिक इव अवस्थितः 'अति रोचसे' अतिरोचिष्णुर्दृश्यसे। अपि च यदेतत् 'राम्याश्चित्' राम्या अपि सन् तम् 'अन्धः' अध्यानलक्षणं तमः, यत् न ध्यातु मपि शक्यते किमुत द्रष्टुम्। एतदपि 'अति' अतीत्य हे 'देवः' सर्वभूतदीपयितः! 'पश्यसि' एव त्वम्; न तेऽस्माक मिव तेनाप्ये-नापि तमसा प्रतिरुध्यते दर्शनम्। तस्य तवैवङ्गुणयुक्तस्य हे 'अग्ने!' 'वयं' 'सख्ये' सखिभावे परिचरणकर्मणि आ उत्तमादुच्छ्रासात्कृता-ध्यवसायाः सन्तः 'मा' केन चिद् विधिना* शत्रुणा वा 'रिषाम' मास्मान् किञ्चिद्धिंसीत् त्वदनुध्यानादेवेत्यभिप्रायः॥

"वज्रनामान्युत्तराण्यष्टादश"†। यो हि हन्यते स वज्रेणैवेति वधकर्मभ्यः 'उत्तराणि' 'वज्रनामानि'। कियन्ति पुनस्तानि? अष्टा-दश; अष्टौ च दश च। कतमानि पुनस्तानि? "दिद्युत्, नेमिः, हेतिः"—इत्येव मादीनि‡, दिद्युत्, द्यतेर्वा द्योततेर्वा; पुनः पुन-रतिशयेन वा द्यति अवखण्डयति, द्योतते दीप्यते वा सा दिद्युत्। अवनामयति खण्डयति प्रहारेणेति नेमिः। हेतिर्हन्तेः। इत्येव मादि॥

---

* "बाधिना" ख।

† १।४ २८९ पृ० १० पं०।

‡ १।४० २८९—२९१ पृ०।

आह ;—"वज्रः कस्मात्"? उच्यते,—"वर्जयति" वियोजयति प्राणैः प्राणिनः। "तत्र, कुत्स इत्येतत्" सन्देहपदम् *। ऋषिरपि कुत्स इत्युच्यते। तत् पुनरेतत् यदा वज्रनाम, तदा "कृन्ततेः" कृत्यतेऽनेनेति "कुत्सः"। यदा पुनरेतदृष्यभिधानं, तदा "कर्त्ता स्तोमानाम् इति" "औपमन्यवः" आचार्यो मन्यते †। "अत्राप्यस्य वधकर्मैव" अभिप्रेतं स्यात्। अत्रापि एतदृषौ वर्त्तमान मभिधान मस्य ऋषेर्वधकर्मैव वधार्थसंयुक्त मेव स्यात्। किङ्कारणम्? "तत्सख इन्द्रः शुष्णं जघान इति" ‡। तेन स्तूयमानो विवृद्धबलः शुष्णं शोषयितारं रसाना मसुरं मेघं वा जघान। मेघो हि शुष्णः § ; तदुदये हि धान्यानि उदकग्राहनिमित्तेन शुष्यन्ति॥

"ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः" ‖। प्रता मेव हि वज्रेणायुधेनैवैश्वर्यं भवतीति वज्रनामभ्य 'उत्तरे' 'ऐश्वर्यकर्माणः'। कतमे पुनस्ते? "इरज्यति, पत्यते, क्षियति, राजति ?"—इति ¶॥

"ईश्वरनामान्युत्तराणि चत्वारि" **। ऐश्वर्यसम्बन्धेनैवोच्यते। कत-

---

* १भा० १८९ पृ० (११)।

† कुत्स आङ्गिरसः ऋ० सं० १, ९४—९८ ; १,१०१—११५ ; ९. ९७, ४५—५८।

‡ "एतच्च यास्केनोक्तम्,—'इन्द्रः शुष्णं जघान' इति। शुष्णं पिप्रु मित्यादि मन्त्रे चाय मर्थो विस्पष्टः"—इति ऋ० सं० १, १, २१, ७ ऋग्व्याख्यायां सायणः। शुष्णं पिप्रु मिति तु ऋ० सं० १, ७, १०, ३। तत्सखपदबोधाय ऋ० सं० ३, ५, १९, १—३ ऋचोऽपि द्रष्टव्याः।

§ "मेघरूपेणावस्थितं शोषणं शुष्ण मसुरम्"—इति सायणः। ऋ० सं० १, ८, २५, १०।

‖ १भा० १९१ पृ० २१ ख०।

¶ १भा० १९१, १९२ पृ०।

** १भा० १९२ पृ० २२ख०।

मानि पुनस्तानि? "राष्ट्री, अर्यः, नियुत्वान्, इनः"*। "तत्र इन इत्येतत्" अभिधान मेवं व्युत्पाद्यम्;—"सनितः" सम्भक्तः "ऐश्वर्येणेति वा"; अथ "वा" "सनितं" सम्भक्तम् "अनेनैश्वर्य मिति"॥ ५॥

यत्रा सुपर्णा अमृतस्य भाग मनिमेषं विदथाभिस्वरन्ति। इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाक मत्राविवेश॥ यत्र सुपर्णाः सुपतना† आदित्यरश्मयो ऽमृतस्य भाग मुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषां भूतानां गोपायितादित्यः स मा धीरः पाक मत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आदित्य इत्युपनिषद्वर्णो भवतीत्यधिदैवत मथाध्यात्मं यत्र सुपर्णाः सुपतना‡-नीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो§ वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषा मिन्द्रियाणां गोपायितात्मा स मा धीरः पाक मत्राविवेशेति धीरो धीमान् पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिं माचष्टे॥ ६ (१२)॥

॥ इति तृतीयाध्यायस्य द्वितीयः पादः॥ ३, २.

---

* १भा० १९१—१९१ पृ०।

†, ‡ "यत्र सुपतना" क, ख, ग।

§ "निमिषन्ति" क, ख, ग।

अधुना मन्त्र मपि व्याचष्टे यस्मिन्नेतदीश्वरनामेन इति;—"यत्रा सुपर्णा०"—इति* । त्रिष्टुबेषा। वैश्वदेवीये सूक्ते दीर्घतमसा दृष्टा। महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते। वैश्वदेवेषु हि सूक्तेष्वेक-देवता बहुदेवताश्च मन्त्रा भवन्ति, तदप्युपेक्षितव्यम्। "यत्र" यस्मिन् मण्डलेऽवस्थिताः "सुपर्णाः सुपतनाः आदित्यरश्मयः" ते हि शोभन मर्थ मुद्दिश्य तमोऽभिघातलक्षणं पतन्ति। अथवा शोभमानाः पत-न्तीति सुपर्णाः। ते किं कुर्वन्ति? उच्यते,—"अमृतस्य भागम्" "उदकस्य" अमरणधर्मणो 'भागं' भजनीय मंश मादाय पृथिवी-लोकात् तेनान्विताः सन्तः सर्वभूतानि "अभि स्वरन्ति"। 'स्वृ शब्दोप-तापयोः (भू०प०)' अभितपन्तीत्यर्थः। अथवा अभिस्वरन्त्यादित्य-मण्डलम्, आभिमुख्येन रसान् गृहीत्वा प्रयान्ति। "अनिमिषन्तः" अनिमिषमाणा इव आदरवन्त इत्यर्थः। 'विदथा' "वेदनेन"† स्वक-र्माधिकारयुक्तेनान्विताः सन्तः इद मेवास्माभिः कर्त्तव्य मादानादिलक्षणं कर्मेति अभिस्वरन्ति। यत्रैतदेवंलक्षणं कर्म कुर्वन्त्यादित्यरश्मयः, तत्र किम्? इति उच्यते;—"इनो विश्वस्य भुवनस्य गोपाः"। 'इनः' "ईश्वरः"; इनो ह्यसावादित्यः, ऐश्वर्येण भवति 'विश्वस्य' 'भुवनस्य' भूतस्य "सर्वेषां भूतानां" 'गोपाः' "गोपायिता" भवति "आदित्यः" मण्डलान्तरपुरुषो यः तत्र मण्डलेऽवस्थितः। "स मा धीरः" "धीमान्" प्रति विशिष्टया बुद्ध्यान्वितः; बुद्धिरेव हि तस्य शरी-

---

* ऋ० सं० २, ३, १८, १।
† १भा० ४२४ पृ० (२२)।

रम् । "पाकः पक्तव्यः"*, पक्तव्यप्रज्ञो "विपक्वप्रज्ञः"; सम्यगदर्शनो-ऽनुग्राह्यतया "आ विवेश" आविशतु ॥

"इति" शब्दः प्रकरणप्रदर्शनार्थः ;—एव मयम् "उपनिषदर्थो भवतीति"। यद्वा ; ज्ञान मुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति, सा रहस्यं विद्या उपनिषदित्युच्यते। उपनिषद्भावेन वर्ण्यत इति उपनिषदर्थः। "अधिदैवतम्" उक्तम् ॥

"अथाध्यात्मम्" उच्यते ;— अधिदैवत मध्यात्म मित्येतौ शब्दौ व्याख्यातौ †। "यत्र" यस्मिन् शरीरे "सुपतनानि इन्द्रियाणि" अवस्थितानि स्वेषु स्वेषु आयतनेषु कृष्णसारादिषु। किं कुर्वन्ति ? उच्यते,—"अमृतस्य" अमरणधर्मणः "ज्ञानस्य" "भागं" भजनीयं स्वं स्वं रूपादिलक्षणं रस मादाय। 'विदथा' "वेदनेन" विज्ञानेन युक्तम् "अभि स्वरन्ति"। न हि इन्द्रियाणां चैतन्य मस्तीति तानि ह्यचेतनानि; चेतनस्य पुरुषस्य कर्त्तुर्विज्ञानमयस्य करणानि, तदधिष्ठानास्तु देवताश्चेतनाः। तदभिप्रायेणोच्यते,—'विदथा' "वेदनेन" विज्ञानेनेति। किं कुर्वन्ति ? "अभि स्वरन्ति" "अभि प्रयन्ति" विषयज्ञानेन पुरुषस्यापि भोक्तुर्दुःखं कुर्वन्ति। अथ वा 'अभि स्वरन्ति' बुद्धि माभिमुख्येन विषयविज्ञान मादाय वाह्यप्रत्ययाधानार्थं स्वरन्ति गच्छन्तीत्यर्थः। तत्र किम् ? इत्युच्यते,—तत्र योऽवस्थितः "ईश्वरः" इनः, "सर्वेषा मिन्द्रियाणां गोपायिता" यः "आत्मा", "स मा धीरः" "धीमान्", "पाकः पक्तव्यः" पक्तव्यप्रज्ञः "विपक्वप्रज्ञः"

---

* १भा० ३२४ पृ० (८)।

† परस्तात् ३२४—३२७ पृ० ४ पं०।

सम्यग्दृशः सर्वज्ञः। सः "अत्र" एव हि देहेऽवस्थितः बुद्ध्यधिदैवत-भावेन तैजसाख्यो माम् "आ विवेश" त्वनुग्राह्यतया स मा मन्त्रे-वात्रस्थितोऽनुगृह्णात्वित्यर्थः; तदनुग्रहाद्ध्यस्य सम्यग् दर्शनं प्रकाशते तदाशास्यत इति। "आत्मगति माचष्टे" एव मपास्य विज्ञान माचष्टे मन्त्रैः * ॥

यदुक्तं "पुष्पफले देवताध्यात्मे वा" † इति, तदेव मुपपाद्यम्,—तत्र एक एव ह्यसावादित्यमण्डले चाधिदैवते चाध्यात्मे च। बुद्ध्यधिदैवताभूतः स एव तत्र तत्रोपेक्षितव्यः। तस्मादमुष्मादादित्य-मण्डलाद् ये रश्मयः प्रसर्पन्ति ते विश्वेदेवा इति; "रश्मयो वै विश्वेदेवाः" इति श्रुतम् ‡। अध्यात्मेऽपि हृदयाकाशाद् यानीन्द्रियाणि प्रसर्पन्ति, त एव रश्मयः। अधिदैवते त एव विश्वेदेवा इत्युक्तम्। एवं तत्र तत्र योज्यम्; प्रकारमात्र मेवेद मुपदर्शितं भाष्य-कारेणेति ॥ ६ ॥

॥ इति निरुक्तवृत्तौ अष्टमाध्यायस्य (तृतीयाध्यायस्य)

द्वितीयः पादः ॥ ३, २ ॥

---

* "मन्त्रः"—इति रोथ्-सम्पादितः पाठः।

† १२४ पृ० १५ पं० किञ्च १२९ पृ० १९पं० व्याख्यानम्।

‡ "आदित्याः"-इत्यादिपदानां व्याख्यातानि द्रष्टव्यानि (१ भा० ४९५—४९७ पृ०)। परस्ताच्च दै० का० १२ अ० ४ पादो द्रष्टव्यः।

॥ तृतीयः पादः ॥

बहुनामान्युत्तराणि द्वादश बहु* कस्मात् प्रभवतीति सतो ह्रस्वनामान्युत्तराण्येकादश ह्रस्वो ह्रसतेर्महन्नामान्युत्तराणि पञ्चविंशतिर्महान् कस्मान् मानेनान्याञ्जहातीति शाकपूणिर्मंहनीयो भवतीति वा तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासाद् गृहनामान्युत्तराणि द्वाविंशतिर्गृहाः कस्माद् गृह्णन्तीति सतां परिचरणकर्म्माण उत्तरे धातवो दश सुखनामान्युत्तराणि विंशतिः सुखं कस्मात् सुहितं खेभ्यः खं पुनः खनते रूपनामान्युत्तराणि षोड़श † रूपं रोचतेः प्रशस्यनामान्युत्तराणि दश प्रज्ञानामान्युत्तराण्येकादश सत्यनामान्युत्तराणि षट् सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवन्तीति वा‡ अष्टा उत्तराणि पदानि पश्यतिकर्माण उत्तरे धातवश्चायतिप्रभृतीनि च नामान्यामिश्राणि नवोत्तराणि पदानि सर्वपदसमाम्नानायाथात उपमा यदतत्तत्सदृश मिति गार्ग्यस्तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं

---

* "बहुः" क, ख ।

† "षोडश" क ।

‡ क ख-ग-पुस्तकेष्विह प्रथमखण्डः समाप्तः ।

वा प्रख्यातं वोपमिमीतेऽथापि कनीयसा ज्यायांसम्॥ १ (१३)॥

"बहुनामान्युत्तराणि द्वादश" *। ईश्वराणा मेव बहुत्वं भवतीत्यतः † ईश्वरनामभ्यः 'उत्तराणि' 'बहुनामानि'। कियन्ति? द्वे च दश च 'द्वादश' (१२)। कतमानि पुनस्तानि? "उरु, तुवि, पुरु"—इत्येव मादीनि ‡। उरु विस्तारे; यद्धि बहु भवति, तद् विस्तीर्णं भवति। तुवि वृद्धौ; यद्धि बहु भवति, तद् वृद्धं भवतीति। पूरित मिव हि बहुना सर्वं भवतीति पुरु। इत्येव मादि युक्तं योज्यम्॥ आह;—"बहु कस्मात्"? उच्यते—"प्रभवति" हि एतत् बहुभ्यो दीयमानम्॥

बहुनामसम्बन्धेनैव "ह्रस्वनामानि उत्तराणि" §। कियन्ति? "एकादश" (११)। कतमानि पुनस्तानि? "कुवित् ‖, रिहम् ¶, ह्रस्वः"—इत्येव मादीनि **। कुत्सित मिव हि तद् विज्ञायते

---

* १ भा० १९४ पृ० ३ पं० १ख०।

† 'ईश्वरस्य हि बहुपालकत्व मस्तीत्यतः'—इति वक्तुं युक्तम्।

‡ १ भा० १९४—१९९ पृ०।

§ १ भा० १९९ पृ० ३ पं० १ ख०।

‖ कुविदिति पद मिदं इतिहता भ्रमाद् गृहीतम्, तस्य बहुनामसु दृष्टत्वात् १ भा० १९९ पृ० (१२)। किञ्च "इति वा इति"—इति-सूक्तीय-त्रयोदश-मन्त्रेष्वेव "कुवित् सोमस्यापा मिति" (ऋ० सं० ८, ९, १९-२०व०)"—इति पादस्य व्याख्यानावसरे 'कुविद्' इत्यस्य 'बहुवारम्'—इत्येवार्थः कृतः सायणेन; एव मन्यत्रापि।

¶ इत्याद्यस्ति पाठभेदः १ भा० १९९ पृ० १७ पं० द्रष्टव्यः।

** १ भा० १९९—१९९ पृ०।

अल्पत्वादिति कुवित्। लीढ मेव हि तदल्पत्वाद् भवतीति रिहम्। "ह्रस्वः" कस्मात्? उच्यते,—"ह्रसतेः"; ह्रसितो हि भवति सः, महतः सकाशात्॥

ह्रस्वसम्बन्धेनैव "महन्नामान्युत्तराणि पञ्चविंशतिः" *। ह्रस्वापेक्षयैव हि महत्त्वं भवति। कियन्ति पुनस्तानि? "पञ्चविंशतिः" (२५)। कतमानि पुनस्तानि? "महत्, ब्रध्नः, ऋष्वः"—इत्येवमादीनि †। आह;—"महान् कस्मात्"? उच्यते,—"मानेन" "अन्यान्" ह्रस्वान् "जहाति" "इति" "शाकपूणिः" आचार्यो मन्यते। अथ "वा" "मंहनीयः" पूजनीयो "भवतीति" महान्। हरत्वात् हरणत्वा द्वा ब्रध्नः। ऋष्वः रेषणवान्। इत्यादि योज्यम्॥ "तत्र" तस्मिन् महन्नामके गणे "ववक्षिथ[१४], विवक्षसे[१५]"—इत्येते आख्याते। ते पुनरुभे वक्षेर्वा वहतेर्वा धातोः "साभ्यासात्"‡॥

य एव महान्तस्त एव गृहिणो भवन्तीति महन्नामभ्यः "उत्तराणि गृहनामानि" §। कियन्ति पुनस्तानि? "द्वाविंशतिः" (२२)। कतमानि पुनस्तानि? "गयः, कृदरः, हर्म्यम्"—इत्येवमादीनि ‖। गम्यत इति गयः। कृत-दरः कृदरः। हर्म्यं हरणम्। इत्येवमादीनि॥ आह;—"गृहाः कस्मात्"? उच्यते,—ते हि यावदेव किञ्चिद्वा ह्रियते, तत् सर्व मेव "गृह्णन्ति" दुःपूरत्वात्॥

---

* १ भा० २९९ पृ० ३ पं० ३ स०।

† १ भा० २९९—३०९ पृ०।

‡ १ भा० ३०२ पृ० (१४), (१५)।

§ १ भा० ३०९ पृ० १ पं० ४ स०।

‖ १ भा० ३०७—३११ पृ०।

गृहेष्वेवावस्थिताः परिचर्यन्ते परिचरन्तेवेति गृहनामभ्यः "उत्तरे परिचरणकर्माणः धातवः" समाम्नाताः *। कियन्तः पुनस्ते? "दश" (१०)। कतमे पुनस्ते? "इरज्यति, विधेम, सपर्यति"—इत्येव मादयः †॥

परिचर्यमाणाना मेव हि सुखं भवतीति परिचरणकर्मभ्यः "उत्तराणि सुखनामानि"‡। कियन्ति पुनस्तानि? "विंशतिः" (२०)। कतमानि पुनस्तानि? "शिम्बाता, शतरा, शातपन्ता"—इत्येव मादीनि §। शिम्बाता, सुखानुसम्बन्धाद्धि हृदयशाना मिव शरीरं शीतीभवति। शतरा, शीतलतर मिव हि जलादपि सुखम्। शातपन्ता, शान्तताप मेव हि सुखम्। एव मादि। आह;—"सुखं कस्मात्"? उच्यते,—"सु हितम्" सुष्ठु हित मेतत् "खेभ्यः" इन्द्रियेभ्यः। "खं पुनः" इन्द्रियम्, "खनतेः" धातोः ‖। अवदीर्ण मेव हि तस्य कर्णायतनं भवति॥

"रूपनामान्युत्तराणि षोड़श" ¶। य एव हि सुखिनस्त एव हि प्रायो रूपवन्तो भवन्तीति सुखनामभ्यः 'उत्तराणि' 'रूपनामानि'। कियन्ति पुनस्तानि? 'षोड़श' (१६)। कतमानि पुनस्तानि? "निर्णिक्, वव्रिः"—इत्येव मादीनि **। निर्णिक्त मिव हि तद् भवति

---

* १ भा० ३१२ पृ० ३ अ० ५ ख०।

† १ भा० ३१२—३१४ पृ०।

‡ १ भा ३१४ पृ० ३ अ० ६ ख०।

§ १ भा० ३१४—३१८ पृ०।

‖ १ भा० ११२ पृ० (२)।

¶ १ भा० ३१८ पृ० ३ अ० ७ ख०।

** १ भा० ३१९—३२१ पृ०।

तैजसत्वात्। विद्दणोत्याश्रय मिति वह्निः। इत्येव मादि। "रूपं रोचते:" दीप्यमान मिव हि तत् प्रकाशं भवति*॥

"प्रशस्यनामान्युत्तराणि† दश"। य एव हि रूपवन्तस्त एव प्रशस्या भवन्तीति रूपनामभ्यः 'उत्तराणि' 'प्रशस्यनामानि'। कियन्ति पुनस्तानि? 'दश' (१०)। कतमानि पुनस्तानि? "अस्रेमाः, अनेद्यः, अनिन्द्य‡"—इत्येव मादीनि§। अस्रेमाः, 'स्रिवु गतिशोषणयोः (दि॰प॰)'; न स्रिव्यति गच्छत्यकीर्त्ति मित्यस्रेमाः, अपाप इत्यर्थः; क्षमारहितो वा। अनेद्यः, अनिन्दार्हः ‖। इत्येव मादि योज्यम्॥

"प्रज्ञानामान्युत्तराण्येकादश" ¶। य एव हि प्रज्ञावन्तस्त एव हि प्रशस्या भवन्ति, य एव हि प्रशस्यास्त एव हि प्रज्ञावन्तो भवन्तीति प्रशस्यनामभ्यः 'उत्तराणि' 'प्रज्ञानामानि'। कियन्ति पुनस्तानि? 'एकादश'। एकश्च दश च एकादश (११)। कतमानि पुनस्तानि? "केतः, केतुः, चेतः"—इत्येव मादीनि**। 'कित ज्ञाने (भ्वा॰ प॰)', तस्य केतः††। केतुरपि तस्यैव॥

"सत्यनामान्युत्तराणि षट्" ‡‡। य एव हि प्रज्ञावन्तः, त एव

---

* ११० पृ० २१ पं० किञ्च ११९ पृ० ११ पं०।

† १ भा० ३११ पृ० ३ ख० ८ ख०।

‡ नैतद्व्याख्यातं पूर्वत्र, व्याख्यातञ्च 'अनेमाः'—इति। एवञ्च निघण्टु-व्याख्याकालं कादि पुस्तकपाठोऽवलम्बितः, इह तु मादि-पुस्तकपाठ इति।

§ १ भा० ३२१—३२४ पृ०।

‖ इत्यास्ति लेखकप्रमादः?

¶ १ भा० ३२४ पृ० ३ ख० ९ ख०।

** १ भा० ३२५—३२९ पृ०।

†† पूर्वत्र तु अन्यथैव व्याख्यातम् ३२५ पृ० (१) द्रष्टव्यम्।

‡‡ १ भा० ३२९ पृ० ३ ख १० ख०।

हि सत्यवादिनो भवन्तीति प्रज्ञानामभ्यः 'उत्तराणि' 'सत्यनामानि'। कियन्ति पुनस्तानि? 'षट्' (६)। कतमानि पुनस्तानि? "बट्, श्रत्, सत्रा"—इत्येव मादीनि *। बद्ध मिव सम्बद्धं भूतेनार्थेन भवतीति बट्। श्रवणार्ह मेतद् भवतीति श्रत्। एव मादि। आह;—"सत्यं कस्मात्"? उच्यते,—"सत्सु तायते" सत्स्वेव हि तत्तायते विस्तीर्यते; न हि सतां समीपे शक्य मनृतं वक्तुम्। अथ "वा" "सत्प्रभवं भवति" य एव हि सन्तस्त एव हि सत्यं वदन्ति॥

"अष्टौ" यानि "उत्तराणि पदानि" चिक्यदित्येव मादीनि, ते "पश्यतिकर्माणः" पश्यत्यर्थाः "धातवः"† । "चायति-प्रभृतीनि च"‡ तान्येव "नामानि" भवन्ति। तानि पुनरेतानि "आमिश्राणि" संसृष्टानीत्यर्थः। तेषां प्रकरणोपपदाभ्यां विशेषावधारणं भवति। तत्र,—किञ्चिन्नाम, किञ्चिदाख्यातम्,—इत्येके मन्यन्ते। अन्ये पुनः किम्? "चिक्यत्(१)", "विचर्षणिः(६)", "विश्वचर्षणिः(७)"—इत्येतानि नामानि, यान्यन्यानि परिशिष्टानि ते धातवः; तानि पुनरेतानि पूर्वाचार्यप्रामाण्यात् आमिश्राणि पद्यन्ते इत्येवं मन्यन्ते॥

"नव" यानि "उत्तराणि पदानि" "इकं, सुकं, नुकम्"—इत्येव मादीनि§, आहत मित्येव मन्तानि, "सर्वपदसमाम्नानाय"‖। कथं नाम सर्वं चतुर्विधं पदप्रकार मेतस्मिन् समाम्नाये समाम्नातं

---

* १ भा० ३२६—३२७ पृ०।

† १ भा ३२७ पृ० ३ अ० ११ ख०।

‡ "चिक्यदित्यादीनि चायत्यर्थनिगमानि"—इति स्कन्दस्वामी।

§ गादिपुस्तकसम्मतोऽयं पाठः।

‖ १भा० ३२९ पृ० ३अ० ११ख०।

स्यादित्येव मर्थ मेष्वेव चि नवसु समाम्नातेषु उभये निपातोपसर्गाः, दर्शिता भवन्ति ॥

"अथात उपमाः"। 'अथ' इदानीम्, 'अतः' अनन्तरम्, 'उपमाः' भवन्ति। तद्यथा,—"इद मिव, इदं यथा, अग्निर्नये, चतुरश्चिद् ददमानात्, ब्राह्मणा व्रतचारिणः, वृक्षस्य नु ते पुरुहूतवयाः, जार आ भगम्, मेषो भूतोऽभि यन्नयः, तद्रूपः, तद्वर्णः, तद्वत्, तथा"—एताः उपमाः* ॥

सामान्यलक्षण मासां ब्रवीति,—"यदतत्तत्सदृश मिति गार्ग्यः"। 'यत्' किञ्चित् अर्थजातम् 'अतत्' भवति, 'तत्' सरूपञ्च; यथा—अनग्निः खद्योतः, अग्नि-सरूपश्च सोऽग्निनोपमीयते—अग्निरिव खद्योत इति, एवम् अतत्सरूपेण गुणेन गुणसामान्यात् उपमीयते;—इत्येवं 'गार्ग्यः' आचार्यो मन्यते। "तदासां कर्म" स आसा मुपमानाना मर्थः, यदप्रसिद्धतरगुणस्य कस्य चित् प्रसिद्धतरगुणेनान्येन गुणप्रकाशनम्। क्वचित् पुनरात्मनाप्युपमानं भवत्येव।—"वायुरात्मोपमे गतिः", "तथा करोति सैन्यानि यथा कुर्याद् धनञ्जयः" इति। "ज्यायसा वा गुणेन, प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वोपमिमीते"। 'ज्यायसा' उत्कृष्टेन 'गुणेन' यो यस्मिन् द्रव्ये उत्कृष्टो गुणः तेन, 'कनीयांसम्' अनुत्कृष्टं गुणम् 'उपमीयते'। तद्यथा,— सिंहो माणवकः। सिंहे शौर्य मुत्कृष्टम्, माणवक मेतेनोपमिमीते; सिंह इव माणवको विक्रान्त इति। 'प्रख्याततमेन वा'

---

* १भा० ३३० पृ० ३ख० १३ खं०। किञ्च १मा० ३८०—३८१ पृ०।

'अप्रख्यातम्' 'उपमीयते'। प्रख्यातश्चन्द्रमा, अप्रख्यातो माणवकः, तं तेनोपमिमीते,—चन्द्र इव कान्तो माणवक इति। "अथापि" क्वचित् "कनीयसा" गुणेन "ज्यायांसम्" अपि सन्तम् उपमिमीते। तदेतच्छन्दस्येव द्रष्टव्यम्* ॥ १ ॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम्। तनूत्यक्तनूत्यक्ता वनर्गू वनगामिनावग्निमन्थनौ बाहू तस्कराभ्या मुपमिमीते तस्करस्तत्करोति† यत् पापक मिति नैरुक्तास्तनोतेर्वा स्यात् सन्ततकर्मा भवत्यहोरात्रकर्मा वा रशनाभिर्दशभिरभ्यधीता मभ्यधातां‡ ज्यायांस्तत्र गुणोऽभिप्रेतः ॥ २ (१४) ॥

आह;—कि मुदाहरणम्? उच्यते;—"तनूत्यजेव०—०रज्ञैः"§। त्रितस्येय मार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'तनूत्यजा' "तनूत्यक्ता", चौर्याभिप्रायेण हर्त्तव्यं वा सर्त्तव्यं वेति कृताध्यवसायौ तस्करौ "वनर्गू वनगामिनौ" मार्गमोषकौ प्रसृतौ, ताभ्या मुपमीयते। तौ यथा उपमार्थत्वेन सुपुष्टौ भवतः, न तथा ग्रामतस्करौ। तौ यथा कं चिदध्वगं बध्नीयातां रज्वा। एवम् एतौ अस्मदाह

* उभयविध मेवेति भावः। तत्र प्रथम मुदाहरणं तनूत्यजेति (२१२ पृ० ५ पं०), द्वितीयं कुचस्विद्दोषेति (२१५ पृ० १पं०।

† "तस्करस्तत्करो भवति" ङ, च।

‡ "रभ्यधीता मभ्यधीता मित्यभ्यधातां" ङ, च।

§ "०धीताम्। इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः॥" ऋ० सं० ७, ५, २१, ९।

'रशनाभिः' अङ्गुलीभिः 'दशभिः' दशसङ्ख्यायोगिनीभिः 'अभ्यधीतां' प्रतिनिबध्नीताम्। अभिनिबध्य च अग्निमन्थनयोगेन अधरारण्युत्तरारणीभूतं त्वां तस्कराविव कञ्चिदध्वगं गाढं बध्वा मुष्णन्त माकर्षतः। किमर्थं पुनरेव मर्थ्यतेऽस्माभिः? हे 'अग्ने!' 'इयं' यस्मात् 'नव्यसी' नवतरा, अन्यैः स्तोतृभिः अदृष्टपूर्वा, युष्मद्गुणैः संस्कृत्य विवक्षिता, 'ते' तव 'मनीषा' स्तुतिः प्रधानसंयुक्ता। स त्व मेतज्ज्ञात्वा एव मर्थ्यमानोऽस्माभिः 'युक्ष्व' योजय आत्मान मरणी प्रति। अरणिभ्यां 'शुचयद्भिः' दीप्यमानैः स्वैः 'अङ्गैः' ज्वालाख्यैः। कथम्पुनर्योजय? 'रथं न' यथा कश्चित् कुतश्चित् आजिगमिषुः शीघ्रं रथं योजयेत्, एव मेवावतरणाय त्व माभ्या मरणीभ्यां योजयमानो यज्ञे विघ्नं मा कार्षीरित्यभिप्रायः। "तनूत्यक् तनूत्यजौ" इत्यर्थः। "वनर्गू वनगामिनौ", तत्र हि तयोश्चौर्यं सिध्यति*। एव मस्या मृचि "अग्निमन्थनौ""बाहू"प्रशस्तौ "तस्कराभ्याम्" अप्रशस्ताभ्याम् "उपमिमीते" मन्त्रदृक्॥

"तस्करः" "तत्" एव "करोति", "यत्" एव "पापकम्" भवति "इति नैरुक्ता मन्यन्ते"। वैयाकरणानां पुनरन्यथापि स्यात्†। स हि "सन्ततकर्मा भवति"; रात्रौ ग्रामे मुष्णाति, दिवा अरण्ये, एवम् "अहोरात्रकर्मा वा" एतदेतत् सन्ततकर्मत्वम्। "रशनाभिर्दशभिरभ्यधीताम्" इत्येव "तत्र" बाह्वोः "ज्यायान्" "गुणोऽभिप्रेतः", तयोः प्रशस्तत्वात्; अप्रशस्तत्वाच्च तस्करयोः कनीयान्॥ २॥

---

* १आ॰ २१२ पृ॰ (८) द्रष्टव्यम्।

† "तद्बृहतो करपत्योश्चौरदेवतयोः सुट् तलोपश्च" वा॰ प्राति॰ ६, ४२।

कुह॑ स्विद्दो॒षा कुह॒ वस्तो॑र॒श्विना॒ कुहा॑भिपि॒त्वं क॑रतः॒ कुहो॑षतुः। को वां॑ शयु॒त्रा वि॒धवे॑व दे॒वरं॒ मर्यं॒ न योषा॑ कृणुते स॒धस्थ॒ आ। क्व स्विद्रात्रौ भवथः क्व दिवा क्वाभिप्राप्तिं* कुरुथः क्व वसथः को वां शयने विधवेव देवरं (देवरः कस्माद् द्वितीयो वर उच्यते†) विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्म्मशिरा अपि वा धव इति मनुष्यनाम तद्वियोगाद्विधवा देवरो दीव्यतिकर्म्मा मर्य्यो मनुष्यो मरणधर्म्मा योषा यौतेराकुरुते सहस्थाने‡ ऽथ निपाताः पुरस्तादेव व्याख्याता यथेति कर्म्मो॑पमा। यथा॒ वातो॒ यथा॒ वनं॒ यथा॑ समु॒द्र एज॑ति। भ्राज॑न्तो अ॒ग्नयो॑ यथा। आत्मा यक्ष्म॑स्य नश्यति पु॒रा जी॑व॒गृभो॑ यथा। आत्माततेर्वाप्तेर्वापि§ वाप्त इव स्याद् यावद्व्याप्तिभूत॒ इति। अ॒ग्नि॒र्न ये भ्राज॑सा रु॒क्मव॑क्षसः। अग्निरिव ये (मरुतो भ्राजमाना रोचिष्णूरस्काः||) भ्राजस्वन्तो रुक्मवक्षसः॥ ३॥ (१५)॥

---

* "क्वाभिप्राप्तं" क, ख, ग।

† बन्धनीचिह्नान्तर्गतानीमानि पदानि न सन्ति क ख ग-पुस्तकेषु।

‡ "सधस्थाने" क, ख, ग।

§ "ध्मातेर्व्वापि" क, ख, ग।

|| बन्धनीचिह्नान्तर्गतानीमान्यपि पदानि न सन्ति क-ख-ग-पुस्तकेषु।

द्वितीय मुदाहरण मेतस्मिन्नेवार्थे "अथापि कनीयसा ज्यायांसम् (३०७पृ०१पं०)" इति;—"कुह स्विद् दोषा"* इति। कक्षीवतो दुहिता घोषा नाम, तस्या इय मार्षम्। आश्विनी। जगती। प्रातरनुवाकाश्विनयोः शस्यते। हे अश्विनौ! 'कुह स्वित् दोषा' "क" नु युवां "रात्रौ" "भवथः"? 'कुह वस्तोः' "क" वा "दिवा" भवथः युवाम्? येन नापि रात्रौ अस्माकं दर्शन मुपगच्छथः, नापि दिवा। स्विदिति परिदेवनायाम्, ईर्ष्यायां वा। 'कुह' "क" च 'अभिपित्वम्' "अभिप्राप्तिं" स्नानभोजनाद्यर्थं "कुरुथः"? 'कुह' "क" वा 'उषतुः' "वसथः"? सर्वथा न विज्ञायते वा मागमनप्रवृत्तिः। किञ्च; 'को वां शयुत्रा' कतमो युवां यजमानः शयुत्रा "शयने"? किं 'विधवा इव देवरम्' यथा विधवा मृतभर्तृका काचित् स्त्री शयने रहस्यतितरां यत्नवती देवर मुपचरति; स हि परकीयत्वात् नार्या दुराराध्यतरो भवति, यत्नेनोपचर्यते; न तथा निजो भर्त्ता। तस्मात् तेनोपमिमीते अश्विनौ। तथा 'मर्यं' मनुष्यं देवरम्। सैव मृतभर्तृका 'योषाः' 'आ' 'कृणुते' आभिमुख्येन कुरुते। को वाम् एवम् आभिमुख्येन 'सधस्थे' "सहस्थाने" समाने सहयोगिना चात्मना कृत्वा परिचचार? येनेह नोपगतवन्तौ स्थोऽस्मद्दर्शन मिति। एव मस्या मृचि देवरेण कनीयसा ज्यायांसावश्विनावुपमीयेते, विधवया च यजमानः॥

अथैकपदनिरुक्तम्।—"विधवा विधातृका भवति"। धाता च

* ऋ० सं० ७, ८, १८, १।
† मनुः ९ अ० ६९, ७० श्लो०।

तस्या विगत इति। "विधवनाद्वा" सा हि भर्तृमरणेन विधूता कम्पितेव भवति। "विधावनाद्वा" सा हि भर्तुरभावादनुरुध्यमाना तत्र तत्र विधावत्येव। "इति चर्मशिराः" आचार्यो मन्यते। "अपि वा धव इति मनुष्यनाम*, तद्वियोगाद् विधवा। "देवरः"-इत्येष शब्दो "दीव्यतिकर्मा" दीव्यत्यर्थः; स हि भर्तुर्भ्राता, नित्य मेव तया भ्रातृभार्यया देवनार्थं म्रियत इति देवर इत्युच्यते। "मर्यः मनुष्यः" स हि "मरणधर्मा"। "योषा यौतेः" मिश्रणार्थस्य; सा हि मिश्रयत्यात्मानं पुरुषेण साकम्। "आ कुरुते सधस्थाने" आभिमुख्येन आत्मना कुरुते परिचरणाय॥

"अथ निपाताः" समाम्नाताः। यथा—"अग्निर्नये" इत्येव मादयः, ते चत्वारोऽवसरप्राप्ताः। ते च पुनः "पुरस्तादेव व्याख्याताः" सामान्यतः†, विशेषत इदानी मुदाहरणतो व्याख्यायन्ते। तत्र "यथा इति" एषा "कर्मोपमा"। कि मुदाहरणम्? "यथा वातो यथा वनं यथा समुद्र एजति"—इति‡। सप्तवध्रिरात्रेयोऽपश्यत्। एषा अनुष्टुप्। गर्भानुमन्त्रणे विनियुक्ता। यथा वात-वन-समुद्राः एजन्ते कम्पन्ते, एवं 'त्वं' हे 'दशमास्य' दशमामसम्भूत! गर्भ! एतस्मात् मातुरुदरात् अदुःखयन् एनाम् एजन् चलन् 'अवेहि' अर्वाङ् एहि, 'सह' 'जरायुणा' उल्वेण प्रजायस्व; मा स्थाः त्व मेतस्मिन्नुदरे इत्यभिप्रायः॥

---

* १भा० १०८४ (२)।

† अथ निपाता इत्यादिभिश्च उपेक्षितव्या इत्यन्तैरष्टभिः वाक्यैः (पृ० ४४—८४०)।

‡ "०एजति। एवा त्वं दशमास्य सहावेहि जरायुणा॥" ऋ० सं० ४, ४, १०, ४।

अपर मुदाहरणम्;—"अदृश्र मस्य केतवः"—इति*। प्रस्कण्व-स्यार्षम्। गायत्री। सौरी सा। अनयातिराश्रो गृह्यते पृष्ठस्य षष्ठेऽहनि। 'अदृश्रम्', 'अस्य' 'केतवः' रश्मय; 'वि' विविधाः दृश्यन्तेऽस्य भगवतः सूर्यस्य प्रज्ञानहेतत्वाः; ते हि तमोऽपहत्य सर्वप्राणिनां प्रज्ञान मभिव्यञ्जयन्तीति त एव केतव इत्युच्यन्ते लक्षणया। अथवा प्रका-शहेतत्वात्ता इति साक्षादेव केतुशब्दस्तेषु स्यात्। केतुरिति विज्ञान-मुच्यते†, विज्ञानस्य पुनः प्रकाशहेतत्वास्तैत इति केतव इत्युच्यन्ते। अथवा केतव इव सर्वतो दिक्ष्व मुच्छ्रिता आदित्यमण्डले; ध्वजो हि केतुरुच्यते। के पुनस्ते? इति, 'रश्मयः'। किं कुर्वन्ति य एव मुच्छ्रिताः? इति, उच्यते;—'जनान् अनु' तिष्ठन्ति गच्छन्ति तमां-स्यपहत्य मन्यांश्चोपकारान् कर्तुं मोषधिपाकादीन्। कथं पुनरनु-तिष्ठन्ति? 'भ्राजन्तः' दीप्यमानाः। कथम्? 'अग्नयो यथा' येन प्रकारेण अग्नयो भ्राजन्ते, तथा भ्राजन्तोऽनुतिष्ठन्ति॥

अपर मुदाहरणम्;—"यदिमा वाजयन्नह"-इति‡। आथर्वणो भिषक्, तेनेदं मोषधिसूक्तं दृष्टा। अनुष्टुप्। एतेन पुनरुपतप्तो दीक्षितो एकविंशतिभिर्दर्भपिञ्जूलीभिश्चाभिरद्भिरभिषिच्यते। उप-तापशान्त्यर्थं मनेनैव सूक्तेनाग्निचयनार्थं क्षेत्रं ग्राम्यारण्याभिरोषधि-भिरुप्यते। 'यद्' यदा, अहम् 'इमाः' 'ओषधीः' 'हस्ते' 'आदधे' आधाय च सन्निकर्षे ऽपि तिष्ठामि रोगिणः एताः ओषधीः 'वाज-

---

* "अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु। भ्राजन्तो अग्नयो यथा॥" ऋ० सं० १, ४, ७, ३।

† १भा० ३१२ पृ० ९ पं० (२)।

‡ "यदिमा वाजयन्नह मोषधीर्हस्त आदधे। आत्मा०—"ऋ० सं० ८,५,१०,१।

यन्' पूजयन् स्तुवन्नित्यर्थः । अथ तदैव तदनन्तर मेव 'पुरा' एव तासा मोषधीनां प्रयोगात् अस्मान् सुनीतम् ओषधिवीर्यम्, असद्यं मन्यामः 'आत्मा' 'यक्ष्मस्य' यक्ष्मणो 'नश्यति' रोगस्यापुनरागमनाय । कथं पुनर्नश्यति? 'जीवगृभः यथा' यथा जीवग्राहस्य; पुरैव हननात्; अहतस्यैव जीवो नश्येत् विपदो दैवात्, एव मात्मा रोगस्यापि पुरैवौषधिप्रयोगात् नश्यतात्यभिप्रायः ॥

निगमप्रसक्त मुच्यते ;—"आत्मा अततेर्वा" सर्वं मेव हि तेनाततं भवति सर्वगत्वात् । "आप्तेर्वा" सर्वं मेव हि तेन व्याप्तं भवति सर्वगतत्वादेव । "अपि वाप्त इव" सङ्घाते ह्यसौ कार्यकारणस्थो "यावद् व्याप्तिभूत इति' अपि चैव मन्यथा "स्यात्" आप्तो व्याप्त इव स्यात्। किञ्च सर्वगतत्वेऽपि सति यावन्मात्र मेव तस्य कार्यकारणसङ्घातेन व्याप्यते, तावन्मात्रभूत एवासौ लक्ष्यते, तावन्मात्रे हि प्रदेशे तस्य चैतन्यशक्तिरभिव्यज्यते; तप्तायसि दर्भमुष्टिप्रक्षेपात् अग्न्यभिव्यक्तिवदिति। सूक्ष्मेण हि स्थूलं व्याप्यते, न स्थूलेन सूक्ष्मम्; स्थूलञ्च कार्यकारणम्, सूक्ष्म आत्मा ; तस्मादिवशब्दः ॥

"इदं यथा[२]", "अग्निर्न ये[३]", "चतुरश्चिद् ददमानात्[४]" —इत्येषः समाम्नायानुक्रमः* । अग्निर्नय इत्यस्य निघण्टुतन्त्रस्य "दुर्मदासो न सुरायाम्"—इत्यनेनैवा गतार्थतेति मन्यमानाः केचिदत्र निगमं नाधीयते, अपरे पुनः समाम्नायानुक्रमोऽय मिति मन्य-

* १भा० ३३० पृ० ३प० १२ख० ।

† पुरस्तात् ४४ पृ० ७पं० किञ्च ४९ पृ० १पं० ।

माना एव मेवं निगम मधीयते। "अग्निर्न ये भ्राजसा रुक्मवक्षसः"*। भार्गवस्य स्यूमरश्मेरिय मार्षम्। मारुती। जगती। अग्निरिव ये भ्राजिष्णुतया रोचनाः; यथा केन चित् प्रकर्षेण 'रुक्मवक्षसः' रोचिष्णूरस्काः; मरुतः। किञ्च; 'वातासो न स्वयुजः सद्य ऊतयः' वाता इव स्वयुजः। स्वेन स्वेनानुरूपेणानुयाय्यात्मा योक्तारो योजयितारो ये ते 'स्वयुजः'। किं तेषाम्? 'सद्य ऊतयः' शीघ्रगतय इत्यर्थः। किञ्च; 'प्रज्ञातारो न ज्येष्ठाः सुनीतयः' यथा के चित् प्रकर्षेण ज्ञातारः 'सुनीतयः' स्युः, प्रशस्तया नीत्यान्विताः; एव मेतेऽपि मरुतः। बलप्रधाना हि ते इत्यतः प्रज्ञावद्भिरुपगीयन्ते। 'सुशर्माणो न सोमा ऋतं यते'। सुखाः बन्धव इव सन्तु 'सोमाः' सोम्याः 'ऋतं यते' ऋतं यज्ञं कर्तु मिच्छते यजमानाय। ये एवङ्गुणयुक्ता मरुतो भवन्तीति, तान् वयम् अभिप्रेतार्थसिद्धये स्तुम इति वाक्यशेषः ॥ २ ॥

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः। न दुरुक्ताय स्पृहयेत्। चतुरोऽक्षान् धारयत इति† तद्यथा कितवाद् बिभीयादेव मेव दुरुक्ताद् बिभीयान्न दुरुक्ताय स्पृहयेत् कदा चिदा इत्याकार उपसर्गः पुरस्तादेव व्याख्यातो ऽथाप्युपमार्थे दृश्यते। जार आ भगम्। जार इव भग मादित्योऽथ जार उच्यते रात्रेर्जर-

---

* "अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्य ऊतयः। प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते॥" ऋ० सं० ८, २, ११, १।

† "चतुरश्चिद्धारयत इति" क, ख, ग। "चतुरोऽक्षान् धारयत इति" च।

यिता स एव भासां तथापि निगमो भवति। स्वसुर्जारः शृणोतु न इत्युषस मस्य स्वसार माह साहचर्याद्रसहरणाद्वापि त्वयं मनुष्यजार एवाभिप्रेतः स्यात् स्त्रीभगस्तथा स्याद् भजतेर्मेष इति भूतोपमा। मेषो भूतोऽभियन्नयः। मेषो मिषतेस्तथा पशुः पश्यतेरग्निरिति रूपोपमा। हिरण्यरूपः स हिरण्यसन्दृगपान्नपात्सेदु हिरण्यवर्णः। हिरण्यवर्णस्येवास्य रूपं था इति च। तं प्रत्नथा पूर्वथा* विश्वथेमथा। प्रत्न इव पूर्व्व† इव विश्व इवेम इवेत्यय मेततरोऽमुष्मादसावस्ततरोऽस्मादमुथा यथासाविति व्याख्यातं वदिति सिद्धोपमा। ब्राह्मणवद्वृषलवत्। ब्राह्मणा इव वृषला इवेति (वृषलो वृषशीलो भवति वृषाशीलो वा‡) ॥ ४ (१६)॥

चिदित्यय मपरो निपात उपमार्थीयो भवति; पुरस्तादप्यय-मुक्तो "दधिचिदित्युपमार्थे"‖, इदानीं समाम्नायविशेषव्याख्यानावसरप्राप्तस्य छान्दस मुदाहरण मस्य प्रदर्श्यते। कतमत् पुनस्तत्?

---

*,† "पर्व्वथा" इति, "पूर्व्वे"—इति च क।

‡ बन्धनीचिह्नान्तर्गतं निर्वचनं न दृश्यते क-ख-ग-पुस्तकेषु।

‖ ४९ पृ० १९ पं० किञ्च ५० पृ० ७ पं०।

इति, उच्यते;—"चतुर०—०स्पृहयेत्" *। मित्रावरुणार्यम्णाद्वचे घोरपुत्र एतां गायत्री मपश्यत्। चतुरोऽक्षान् धारयमाणात् "कितवात्" योऽन्यः कितवो "बिभीयात्" किमपि यतिष्यन्ते तदन्यदा किञ्चिद् येन मा मयं जेष्यतीति। निहितेषु न तथा भयं भवति यथा कितवस्य प्राङ् निधानात्। "एवं" सर्वदा "एव" "दुरुक्ताद्" "बिभीयात्" उद्विजेदित्यर्थः। तथा तथा वर्त्तेत यथा यथा दुरुक्तं न शृणुयात्, न श्रूयते। दुरुक्ते हि वरुणो देवता, तस्मात् "न दुरुक्ताय स्पृहयेत्" "कदाचिद्" अपि किन्तु सूक्त मेव हि शृणुयात्; तत्र हि मित्रो देवता अर्यमा च॥

"ब्राह्मणा व्रतचारिणः"—इत्येतदुपरिष्टाद् व्याख्यास्यते—"संवत्सरं शशयाना (ऋ० सं० ५,७,३,१)"—इत्येतस्मिन् मन्त्रे, चतुर्दशेऽध्याये † ॥

"इन्द्रस्य नु ते पुरुहूतवयाः"—इत्येतत् पुरस्ताद् व्याख्यातम् ‡॥

"आ इत्याकार उपसर्गः" स पुनरेष "पुरस्तादेव व्याख्यातः"—"आ इत्यर्वागर्थे" इति §; "अथापि" अय माकारः कदाचित् "उपमार्थे" अपि "दृश्यते"। तद्यथा,—"जार आ भगम्" इति। किमुक्तं भवति? "जार इव भगम्"—इति। आह;—कोऽय मत्र जार उच्यते? "आदित्योऽत्र" "जारः" इति "उच्यते" अस्मिन् मन्त्रे। स हि "रात्रेर्जरयिता" तदुदये हि रात्रिर्जीर्यते विपरण-

---

* ऋ० सं० १, २, २३, ४।

† दै० का० ८, १, ९। द्रष्टव्यश्च पुरस्तादपि १भा० ३८० पृ० (५)।

‡ १अ० १पा० ३ख० ( ५०—५१ पृ० )।

§ १अ० १पा० ५ख० ( ४१—४२ पृ० )।

मतीत्यर्थः। “स एव भासाम्” चन्द्रादीनां या भासः ता अपि स एव उद्यन् जरयति॥

“उदी॑रय०—० वेप॑ते म॒ती”*। अङ्गिरःपुत्रो हविर्द्धाने एतया जगत्या अग्नि मस्तौत्। पितृमेधे विनियुक्ता। हे भगवन्नग्ने! सर्वगतं सन्त मग्निषस्थ मात्मानं विशेषात्मलाभाय ‘उदीरय’ उद्गमयैव। अरणी पितरौ प्रति, अथवा द्यावापृथिव्यौ पितरौ स्याताम्†, अहोरात्रे वा; ते प्रति विशेषात्मलाभायोज्ज्वलय त्व मात्मानम्। कथं च पुनरुदीरय? ‘जार आ भगम्’ जार इव भगम्। जार आदित्यो यथा भगं भजनीयं भौम मान्तरिक्षं च रसं खं वा ज्योतिरूर्द्ध मीरयति, एवं त्व मात्मानं पितरौ प्रत्युदीरय। कस्मात् पुनरेव मादरवान् ब्रवीमि? यस्मादेव यजमानः ‘इयक्षति’ यष्टु मिच्छति देवान्, ‘हर्य्यतः’ हवींषि प्रेप्सतः; न च त्वदृते शक्ये-ज्येयम्; त्व मेव हि प्रतिविशिष्टं यज्ञसाधनं सर्वं मन्यच्च चैवङ्गुणभूतम्। किञ्च; अयं यजमानः ‘हृत्तः’ हृदयेन ‘इष्यति’ इच्छत्यात्मनोऽभिलषितान् कामान्; न च देवाननिष्ट्वा शक्यास्ते प्राप्तु मिति अतो ब्रवीमि,—देवयागाय यजमानकामप्राप्तये च उदीरय त्व मात्मान मिति। किञ्च; अय मपि ‘वह्निः’ यज्ञवोढा होता ‘स्वपस्यते’ यजमानाय‡ अभीष्टकामोपपिपादयिषया देवतितर्पयिषया

---

* “उदी॑रय पि॒तरा॑ जा॒र आ भग॒ मिय॑क्षति हर्य॒तो हृ॒त्त इ॑ष्यति। विव॑क्ति वह्निः॑ स्वप॒स्यते॑ म॒खस्त॑वि॒ष्यते॒ असु॑रो॒ वेप॑ते म॒ती॥” ऋ० ४०० ०, ९, १०, २।

† “द्यौर्मे॑ पि॒ता * * * मा॒ता पृ॑थि॒वी * * *॥” ऋ० सं० २, ७, १०, २।

‡ “स्वप॑सः * * * सुकर्मा॑णः”—इति नै० ८, १, २।

च ह्यग्नये जगदनुग्रहाय च ऋत्विग्भिः कर्म क्रियमाण मिच्छति 'विवक्ति' च अतो ब्रवीमि,—आत्मान मभ्युदीरय पितरौ प्रति विशेषात्मलाभाय। किञ्च; 'मखः'* 'तविष्यते' परिसमाप्तिं यास्यति† उपक्रमादारभ्यापवर्गात्; अतो ब्रवीमि,—उदीरय त्व मात्मान मिति। किञ्च; अय मप्यध्वर्युः 'असुरः' असुमान् प्रज्ञावान् अतिकुशलः अस्मिन् यज्ञकर्मणि 'वेपते मती' मत्या वेपते प्रोत्कम्पमानहृदय आस्ते सादरः प्रह्वीभूतः, अपि नामाय मुदीरयेदात्मानं ततोऽह मेनद्यज्ञकर्म तनुया मिति; अतो ब्रवीमि,—उदीरय त्व मात्मान मिति। अपि वा असुरो ब्रह्मा‡; स हि त्रयीविद्योपजनित-प्रज्ञानः। अपि चोद्गाता असुरः; स हि प्राणेनासुना तद्वान्, उद्गातृत्वस्य प्राणवृत्त्यधीनत्वाद् विशेषणम्। अपि वा यज्ञाधिदैवतैवाश्वादिश्यतेऽसुर इत्यनेन तस्या आनन्तर्यात्। अपि वा सर्व एवैते यजमानादयोऽश्वादिश्येरन्, सर्वेषां प्रकृतत्वात्। 'असुरः' असुराः 'वेपते' वेपन्त इति; सर्व एते यजमानादयोऽसुमन्तः§ मतिभिर्वेपन्तो प्रोत्कम्पमानहृदया आसते; युष्मदात्मोदीरणप्रतीक्षाः। अपि नाम अय मग्निरुदीरयेदात्मानं ततो नोऽभिप्रेतार्थसाफल्यं स्यादिति; अतो ब्रवीमि,—उदीरय त्व मात्मान मरण्यादीनां पितृणा मन्यतमौ पितरौ प्रति। अपि चैतावेव पितरौ दम्पती पत्नी यज-

---

* १भा० २४९ पृ० (११)।

† "तविष्यते, तविषिर्वृद्ध्यर्थः, अन्तर्णीतसनर्थश्च द्रष्टव्यः; गुगुविषति। स्तोतव्यतः स्तुतीर्वर्धयितु मिच्छतीत्यर्थः।"—इति सायणः।

‡ 'असुरः, प्राणवान् प्रज्ञावान् वा; ब्रह्मेति शेषः।'—इति सायणः।

§ "असुरिति प्राणनाम"—इत्यादि पुरस्तात् द्रष्टव्यम् (१०८ पृ०)।

मानौ अन्याधेयेन सवजननसम्बन्धेन पितरः। हे भगवन्! अग्ने! तावेतौ यज्ञविपरिणामकाले एतस्मिन् प्रत्युपस्थिते देवयानेन वा पितृयानेन वा मार्गेण उदीरय उद्गमय यथाप्रार्थितफलप्राप्तये। समान मन्यदृक्छेषं पूर्वेणार्थेन ॥

यथा आदित्यो जारशब्देनोच्यते "तथा अपि" अयं "निगमो भवति" (अथान्येऽपि बहवः इत्यपिशब्दः);—"मातुर्दिधिषु०—०सखा मम"*। एषा गायत्री। भरद्वाजस्यार्षम्। "एहि वां विमुचो नपादाघृणे: (ऋ०सं० ६,५,६,१)"—इत्येतस्मिन् पौष्णे सूक्ते। 'मातुः दिधिषुम्' माता रात्रिरादित्यस्य; स हि भगवान् रात्र्या जघने प्रातरुदेति कुमार इव स्त्रियाः प्रसवकाले, तेन ज्ञायते रात्रेरेवासौ जायत इति; अतो रात्रिर्माता†, तस्याः स एवं धारयिता रोद्धा, तम्. 'मातुर्दिधिषु' धारयितार महम् 'अब्रवम्' उक्तवानस्मि यन्मेऽभिप्रेतम्। स एव चादित्यो 'मम' 'सखा' समानख्यानः‡ यथैवाह मेतस्मिन् यज्ञे जगदनुग्राहके कर्मणि अभिप्रवृत्तः, एव मसावपि प्रकाश-पाक-रसादान-वर्षादिलक्षणे कर्मणि जगदनुग्राहके अभिप्रवृत्तः; इत्येतस्मादावयोः समानख्यानत्वम्। यत एव मम समानख्यानः, अतो मध्यमस्य च 'इन्द्रस्य' 'भ्राता' उदकभागहर्त्ता अथ वा मध्यमस्यैवोदकेन भर्तव्यः§; तेन ह्यसौ दीप्यते। स पुनः

---

* "मातुर्दिधिषु मब्रवं स्वसुर्जारः शृणोतु नः।
भ्रातेन्द्रस्य सखा मम॥" ऋ० सं० ४, ८, २१, ५।

† "मातुर्निर्मात्र्या रात्रेः"—इति सायणः।

‡ "सखायः * * * समानख्यानाः"—इति दै० ७, ९, ७।

§ "भ्राता, भरतेर्हरतिकर्मणो हरते भागं भर्तव्यो भवतीति वा" नैग०का०४,४,५।

किं करोतु ? यच्च पूर्वमह मश्नवं तच्च साधयतु ; साम्प्रतञ्च यद् ब्रूमः, तच्च 'शृणोतु' श्रुत्वा च तदपि साधयत्वित्यभिप्रायः। 'स्वसुर्जारः' इति। अस्मिन् मन्त्रे स्वसृशब्देन मन्त्रदृक् "उषसम्" "आह"। केन पुनः सामान्येनेति? उच्यते,—"साहचर्यात् रसहरणाद्वा"। भ्राता स्वस्रा साकं बाल्ये नित्य मेव चरति, तथा चोषसा साक मादित्य इत्येतत् सामान्यम्। आदित्यो हि पूषा, "अथ यद्रश्मि-पोषं पुष्यति, तत् पूषा भवति"—इति हि वक्ष्यति *। तस्मात् पूष्णः एतस्मिन् मन्त्रे जारत्व मेतत् आदित्यस्य दर्शितम्। रसहरणाद्वा उषाः स्वसादित्यस्य। भ्रातृ-स्वस्रोः सम्भोजनाभिप्रायसामान्यम्। "अपि त्वयं मनुष्यजार एवाभिप्रेतः स्यात्" अथादित्योऽपि मनुष्यजारः। अय मेवास्मिन् मन्त्रे "उदीरय पितरा जार आ भगम् (ऋ० सं० ७, ६, १०, १)"—इत्यभिप्रेतो मन्त्रदृशः; नैरुक्तानां वा स्यात्। "तथा" पुनः सति "स्त्रीभगः" एव "स्यात्"। भगः "भजतेः" सेवनार्थस्य ; स हि सेव्यते मैथुनार्थिभिः पुरुषैः। जारो मनुष्यः, स हि परकीयां स्त्रियं भोगेन सार्वाङ्गिकेण निर्दयो भूत्वा जरयति विपरिणामयति, म्लानरूपां करोति, न तथा निजो भर्त्ता। तं च दृष्टान्तदर्शनेनैवोदीरय ;—यथैव स्त्रियाः भग उपस्थः, पुरुषशिश्नसंयोगे आर्द्रीभवति, एव मरण्योर्मन्थादिहस्तानस्मान् युष्मन्निममन्थिषून् दृष्ट्वोदीरय त्वा मात्मानं चे भगवन्नग्ने! इत्येवं योज्यं जारशब्दे मनुष्यविषये सति † ॥

---

* उत्तरषट्के, दै० का० ११, १, ५।

† परस्ताच्च द्रष्टव्यम् (५, ४, ४.—१०, १, ४.)।

"मेष इति भूतोपमा" मेष इत्येषा भूतशब्देनोपमा। "मेषो भूतो३ऽभि यन्नयः (ऋ०सं० ५,७,२४,५)"—इत्येष निगमः *। निगमप्रसक्त उच्यते,—"मिषो मिषतेः" दर्शनार्थस्य। पर्यायप्रसक्त मुच्यते,—"तथा पशुः पश्यतेः" इति; पश्यति ह्यसौ। "इत्याधी०—०यन्नयः" †। काण्वस्यैव मेध्यातिथेरिय मार्षम्। ऐन्द्री। गायत्री। हे 'अद्रिवः' अद्रिवन्! वज्रिन्! 'इत्या' अमुना प्रकारेण 'मेषो भूतः'। इत्थ मनेन शब्देन अमुनेत्येतच्छब्दपर्यायवाचिना अभिगमन-प्रकार मेतस्मादेव मन्त्रदृग्दर्शनाद् विज्ञाय अभिनयेन मन्त्रदृग्-वर्त्तमानः काण्वो मेधातिथिर्दर्शयति;—हे अद्रिवन्! एव मन्यक-ल्पान्तरीण मेव 'मेध्यातिथिं' 'धीवन्तं' कर्मवन्तं वा 'अभियन्' आहूतो याज्ञे कर्मणि अभिमुख्येनाभ्युद्यतैर्महद्भिर्दायैः 'यन्' गच्छन्, आह्वानसमनन्तर मेव अविलम्बमानः 'मेषो भूतः' मेष इव किञ्चि-दप्युत्तर मब्रुवन् तं गौरवावगत मित्या अनेन प्रकारेण अयस्त्वम् आप्तवानसि। न च तदस्माक मप्रत्यक्षम्। एतस्मादेव मन्त्रदर्शनाद-खिलं तद् ‡ विजानीमो वयं यतोऽतो ब्रूमः। अपवृत्ते तस्मिन् काण्वे मेध्यातिथौ सहान्यमन्वन्तरीणैरधिकारिभि रिदानी मस्य मनोरन्तरे मेधातिथिप्रापकेन कर्मणा मेधातिथिपदम्, तदहं प्राप्तवान्। सोऽहं ब्रुवे;—याः ताः काण्व-मेधातिथिद्वारेण स्तुतयः नित्याः प्रादुर्भवन्ति। एतासां प्रत्नत्व मपि वर्त्तते। स त्व मेताः

---

* १भा० ३८१ पृ० (८)।

† "इत्था धीव॑न्त मद्रिवः काण्वं॒ मेध्या॑तिथिम्।
मे॒षो भू॒तो॒३ऽभि यन्नयः॑॥" ऋ० सं० ५, ७, २४, ५।

‡ "मेधातिथिं ह काण्वायनिं मेषो भूत्वोदजहार" सा० वे० षड्विं० ब्रा० १,१।

शुश्रूषुः, हवींषि वास्मत्प्रदत्तानि प्रतिजिघृक्षुः, पूर्वकाण्व-मेधातिथि-वदस्मानप्यभ्येहि ; किमर्थं वा नाभ्येषीत्यभिप्रायः ॥

"अग्निरिति" एषा "रूपोपमा" * । "हिरण्यरूपः ० — ० त्यन्नमस्मै" † । गृत्समदस्येय मार्षम् । त्रिष्टुप् । अपान्नपाद्देवता । कुम्भेष्टकोपाधानेऽग्निचयने विनियुक्ता । 'हिरण्यरूपः' हिरण्यसमान-रूपः । अपि च, 'सः' 'अपान्नपात्' मध्यस्थानो वैद्युतोऽग्निरादित्यस्य पुत्रोऽपान्नपात् ‡, प्रावृट्काले घर्मार्त्तानां प्रजाना मन्नार्थिनीनां च 'हिरण्यसन्दृक्' हिरण्य मिव सन्दृश्यमानः मनःप्रीतिजनकः । अपि च, स एव 'हिरण्यवर्णः' हिरण्य मिव वरणीयः § प्रार्थनीयो भूतानाम् । य एवङ्गुणयुक्तोऽपान्नपात्, स किं करोतु ? इति,—'हिरण्ययात्' तेजोमयात् 'योनेः' आदित्यात् विनिर्गत्य 'परि नि षद्य' सर्वतो निषद्य मध्यस्थाने अभ्रजालेनान्तरिक्षलोकं व्याप्य ('हिरण्यदाः'—इत्येकं पदम् विसर्जनीयान्तम्) 'हिरण्यदाः' हिरण्य-दाता । सोऽपान्नपात् परिषद्य 'ददति' ददतु 'अन्नम्' अन्नहेतु-दकम् 'अस्मै' यजमानाय इति । "समुद्रादूर्मिर्मधुमाँ उदारत्॥"— इत्यादित्य मुक्तं मन्यन्ते; इत्येतस्माद् दर्शनादपां पुत्र आदित्यः । "आ दूतो अग्नि मभरद् विवस्वतः ¶"—इत्यतस्यादित्यस्यापि वैद्युतो ऽग्निः पुत्रः, इत्येव मसावपान्नपात् = अपां नप्ता ॥

---

* १आ० ३८१ पृ० (९) ।

† "० हिरण्यवर्णः । हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्न मस्मै ॥" ऋ० सं० २, ७, १३, ५ ।

‡ १आ० ४०८ पृ० (११) ।

§ १आ० ३८१ पृ० (१०) ।

|| ऋ० सं० ३, ८, १०, १ ।

¶ ऋ० सं० ४, ५, १०, ४ ।

'था'—इत्ययं चोपमाशब्दः *। आह;— किमुदाहरणम्? उच्यते;—"तं प्रत्नथा पूर्वथा" इति †। अवत्सारः पञ्चदशर्चं सूक्तमपश्यद् वैश्वदेवम्; तस्मिन् वैश्वदेवे सूक्ते प्रथमामेवैतां जगतीमपश्यत्। वैश्वदेवेषु च सूक्तेषु एकदेवता अपि मन्त्रा भवन्त्येव। वाजपेये सप्तदशे शस्त्रे विनियुक्तोऽयम् ‡। चरकाध्वर्यवः पुनरनया मन्थिनं गृह्णन्ति। तेषां पुनः श्रुतिः,—"प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिनौ, असावादित्यः शुक्रः, चन्द्रमा मन्थीत्येवं चन्द्रदैवतोऽयं मन्त्रः। अपि वा "तस्मै सूर्याय हविराजुहोत"—इति हवनमन्त्रे सूर्यश्रवणात् सूर्यदैवतोऽयम्। शौनकस्तु दाशतये समाम्नाये मन्त्रदेवता अनुक्रममाणः "को नु वां मित्रावरुणौ (ऋ० स० ५,३,९ सू०)"—इत्यत आरभ्य वैश्वदेवान्येकादशसूक्तान्यवोचत्; "तं प्रत्नथा (ऋ० सं० ५,३,१२ सू०)"—इत्येतच्चतुर्थं सूक्तम्, तेन तन्मत्या वैश्वदेव एष मन्त्रः स्यात्। वाजसनेयिनां पुनरनया शुक्रो गृह्यते, स च सा प्रथमा संस्कृतिरित्यनेनैन्द्रेण हूयते; तेन तेषामप्ययमैन्द्र एव §। चारके पुनराध्वर्यवे श्रुतिः शुक्रामन्थिनोः, तस्मादेतावन्यदेवतौ गृह्येते। अथेन्द्राय हूयते इति तेन ज्ञायते। यद्यपि हवनमन्त्र ऐन्द्रो मन्थिनः, तथापि ग्रहणमन्त्रो नैन्द्र इति, स

---

* १भा० ३८१पृ० (११)।

† "तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम्। प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे॥" ऋ० सं० ४, २, १९, १।

‡ मुम्बाइ-प्रकाशिते १भा० ४१२ पृ० १७—२२ पंक्तयो द्रष्टव्याः।

§ "शुक्रं संस्थेन वा तं प्रत्नथेति'—इति का० सू० ४, १, १९।

एव सर्वथाप्येवं दुरवधारदेवतो मन्त्रः, अनिरुक्तदेवतालिङ्गत्वात्*। शण्डामर्कयोस्त्वसुरपुरोधसोः† सम्मोहनार्थ मनेनानिरुक्तदेवतालिङ्गेन मन्त्रेणान्यतरः शुक्रामन्थिनोर्गृह्यते। "शण्डा-मर्कौ वा असुराणां पुरोहिता वास्ताम्"—इत्युपक्रम्य "तावेतौ शुक्रामन्थिना वा वृणोथाम्"—इत्युक्त्वा "तावपनुद्यायेन्द्रायां जुहुयुः"—इत्युक्तम्। तस्मात्तावनेनानिरुक्तदेवतालिङ्गेन मन्त्रेण सम्मोह्यते। सौम्यो वा स्यादयम्; सोमो ह्युच्यते मन्थिपात्रेण शुक्रपात्रेण गृह्यमाणः, गृहीतो वा सन्नद्यमानस्तत्प्रशंसनाभिप्रायेण। हे भगवन्! सोम! त मिन्द्रं वा वैश्वदेवं गणं वा 'ज्येष्ठराजं' ज्येष्ठदीप्तिम्। अथ वा ज्येष्ठः श्रेष्ठः सर्वेषां देवाना मिन्द्रः, स यस्य राजा, सोऽयं ज्येष्ठराट् वैश्वदेवगणः, तं ज्येष्ठराजम्। बर्हिष्याहृतो यज्वभिः यः सीदति, स बर्हिषत्, तं 'बर्हिषदम्'। स्वरिव यो दृश्यते, सः स्वर्दृक्, तं स्वर्दृशम्' सूर्यसमानदर्शन मित्यभिप्रायः। 'आशुं' शीघ्रम्। 'जयन्तं' जेतव्यानसुरादीन्। त मेवङ्गुणसंयुक्तम् इन्द्रं, वैश्वदेवं सगणं हे सोम! 'यासु' क्रियासु 'अनुवर्द्धसे' पुनः पुनः संस्क्रियसे। स त्वं क्रियासु तासु तथावस्थितस्त्वं 'गिरा' स्तुत्या सहितः त्वं 'प्रतीचीनं' यज्ञाभिमुखम् इन्द्रं वैश्वदेवं वा गणम् अवस्थाप्य स्ववीर्येण तर्पयित्वा अस्मै यजमानाय 'वृजनं' धनं 'दोहसे' धोक्षि प्रक्षारयसि। कथं पुनः

* "ऐन्द्रौ शुक्रामन्थिनौ, यदैन्द्रं शंसति तेन शुक्रामन्थिनावुक्थवन्तौ"—इति ऐ॰ ब्रा॰ ९, १।

† य॰ वा॰ सं॰ ७, ११-१२ मन्त्रौ सव्याख्यानौ द्रष्टव्यौ। ऋक्संहितायां चैकच (१, ७, १२, ९) 'शण्डिकानाम्—इति; शण्डामर्कावसुरपुरोहितौ; शण्डपंक्तीनाम्'—इति च तत्र सायणः।

धोचि इन्द्रं वैश्वदेवं वा गणम्? 'प्रत्नथा' * चिरन्तना इव। ये महर्षयो भृग्वादयः, तेषां यथा दुग्धवानसि, तथा अस्माक मपि धोचि। अपि च 'विश्वथा' ऋषिपुत्रकाणा मृषीणां च सर्वेषां यथा दुग्धवानसि, तथास्माक मपि धोचि। अपि च 'इमथा' यथा वर्त्त-मानकालीनानां यजमानानां धोचि, तथैवास्माक मपीति। एव मेष यथाभिमतदेवतं योज्यः॥

इमथेत्येतस्मात् प्रसक्त मुच्यते,—"अयम्" इत्यस्य शब्दस्य का व्युत्पत्तिरिति? उच्यते,—"एततरः" हि आगततर आसन्नतरः "अमुष्मात्" दूरस्थात् भवति, सोऽय मित्युच्यते। "असावित्यस्य का व्युत्पत्तिरिति? उच्यते,— "असौ अस्ततरः" अस्मात् क्षिप्ततर इव विप्रकृष्टत्वाद् भवति। आह;— कुतः क्षिप्ततरः? उच्यते,—"अस्मात्" एततरात्। असावित्येतस्मात् प्रसक्त मुच्यते,—"अमुथा, यथा असौ इति" असावित्यनेन शब्देनोक्तो भवति, स एवार्थः अमुथेत्यनेना-प्युक्तो भवति॥

"वदिति" एषा "सिद्धोपमा" † सिद्धैवैषोपमा लोके। आह;— कथं कृत्वा? उच्यते,—"ब्राह्मणवत्, वृषलवत्"। ब्राह्मणव-दधीते, वृषलवच्चाक्रोशतीति॥ ४॥

प्रियमेधवदत्रिवज्जातवेदो विरूपवत्। अङ्गिरस्वन्म-हिव्रत प्रस्कण्वस्य श्रुधी हवम्। प्रियमेधः प्रिया

---

* "प्रत्नपूर्वविश्वेमात् थाल् छन्दसि"—इति पा० ५, ३, १११।

† १भा० ३८१ पृ० (११)।

अस्य मेधा यथैतेषा मृषीणा मेवं प्रस्कण्वस्य शृणु ह्वानं प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्र मर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहेऽङ्गारेष्वङ्गिरा अङ्गारा अङ्कना (अञ्चना*) अत्रैव तृतीय मृच्छतेत्यूचुस्तस्मादत्रिर्न त्रय इति विखननाद्वैखानसो भरणाद्भारद्वाजो विरूपो नानारूपो महिव्रतो महाव्रत इति॥ ५ (१७)॥

॥ इति तृतीयाध्यायस्य तृतीयः पादः॥ ३, ३.

छन्दस मुदाहरणं ब्रवीति;—"प्रियमेधवत्"—इति †। एषा प्रस्कण्वस्यार्षम्। अनुष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे 'जातवेदः!' 'महिव्रत' महाव्रत! महाकर्मन्! महद्धास्य भगवतो जातवेदसः कर्म, हविर्वहणादिलक्षणम्, तेनैवामन्त्र्यते महिव्रत! इति। यथेतेषा मृषीणां प्रियमेधादीनां श्रुतवानसि पूर्वं माह्वानम्, शृणोषि वा, एवं ममापि 'प्रस्कण्वस्य' शृणु आह्वानम्। इत्याशीः॥ एष समस्तार्थः॥

अथैकपदनिरुक्तम्।—"प्रियमेधः, प्रिया अस्य मेधाः" यस्याः इत्यर्थः‡। यद्दु मिति वाक्यशेषः। "प्रस्कण्वः, कण्वस्य पुत्रः" अपदस्य तद्धितार्थत्वं निराह, कण्वस्यापत्य मित्यर्थः। "यथा" अगत

---

* नास्त्येतत् पदं क-ख-ग-पुस्तकेषु।

† ऋ॰ सं॰ १, ३, ३१, ३।

‡ आ॰ २४७ पृ॰ (४)।

मग्नं "प्राग्रम्" इत्युच्यते, गत-शब्दलोपं कृत्वा; एव मिहापि "कण्व-प्रभवः" इति वक्तव्ये भव-शब्दलोपं कृत्वा व्यत्ययेन च प्रस्क एव इत्युक्तम्। "भृगुः, भृज्यमानो न देहे" प्रजापतिना किल शुक्र मात्मीय मादाय अग्नौ हुतम्, ततः "अर्चिषि" ज्वालायां "भृगुः" नाम महर्षिः "सम्भव", व्यपगतेऽर्चिषि यो ऽङ्गारेषु सम्भूव सोऽङ्गिरा नाम अभवत् *। विग्रहप्रसक्त मुच्यते,—"अङ्गारा अङ्कनाः" ते हि यत्र निधीयन्ते तदङ्कितम् भवति। तस्मिन्नुत्पन्ने द्वितीये "अत्रैव तृतीय मृच्छत"—"इत्यूचुः" ये पूर्वोत्पन्नाः ते। "तस्मात्" अत्रैव तृतीय इत्येतस्मादनुव्याहारात् "अत्रिः" अभवत्। अथवैव मन्यथा स्यात्,— अत्रिः प्रतिषेधार्थोऽकारः। कथम्? "न त्रयः" एवात्र, किन्तर्हि? खन्यता मेतदग्निस्थानं चतुर्थोऽप्यत्र भविष्यतीत्येव मनुव्याहारादत्रिरभवत्। व्युदूह्याग्निं तस्मिन्नग्निस्थाने य उत्पन्नः स "विखननाद् वैखानसः" एव नाम्ना अभूत्; "बभूवार्चिःषु अङ्गारेषु तत्रैव तृतीयं त्रिखननाद् वैखानसः" इति। अनयैवानुपूर्व्येणैतानि निर्वचनान्युपपादयितुं शक्यन्ते, तस्मान्मन्त्रपाठविपर्यासेनैतानि निरुक्तानि। "विरूपो नानारूपः" इति स्पष्टमेव। व्रत मिति कर्मनाम। "महिव्रतो महाव्रतः" "इति" अर्थः ॥ ५ ॥

॥ इति निरुक्तवृत्तौ अष्टमाध्यायस्य ( तृतीयाध्यायस्य )
तृतीयः पादः ॥ ३, ३ .

---

* "तस्य यद्रेतसः प्रथम मुददीप्यत, तदसावादित्योऽभवद्; यद् द्वितीय मासीत्, तद् भृगुरभवत् तं वरुणो न्यगृह्णीत, तस्मात् स भृगुर्वारुणिः; अथ यत् तृतीय मदीदेदिव त आदित्या अभवन्; येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्"—इत्यादि ऐ० ब्रा० ३, ३, ९।

॥ चतुर्थः पादः ॥

अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते सिंहो व्याघ्र इति पूजायां श्वा काक इति कुत्सायां काक इति शब्दानुकृतिस्तदिदं शकुनिषु बहुलं न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः काकोऽपकालयितव्यो भवति तित्तिरिस्तरणात्तिलमात्रचित्र इति वा कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा कमनीयं शब्दं पिञ्जयतीति वा श्वाशुयायी शवतेर्वा स्याद्गतिकर्मणः श्वसितेर्वा सिंहः सहनाद्धिंसेर्वा (स्याद्*) विपरीतस्य सम्पूर्वस्य वा हन्तेः संहाय हन्तीति वा व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा ॥ १ (१८) ॥

"अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते"† । उपमाधिकारो वर्त्तते। "यदतत् तत्सदृशमिति‡"–एतदुपक्रान्तम् । तत्र शब्दवत्यश्चोपमा भवन्ति, लुप्तोपमाशब्दाश्च । तत्र "अग्निर्न ये" इत्येवमादिभिः § शब्दैरुपमितिक्रियानामर्थानां समानरूपैरर्थस्य मानं क्रियत इत्येतदनुक्रान्तम् । अथ इदानीं येषु पदेषु लुप्यन्ते उपमाशब्दा इवादयः, तान्यवसरप्राप्तानि व्याख्यास्यामः, तानि पुनरिमानि अर्थोपमानीत्येवमाचक्षते आचार्याः, निरूढ़ा क्रियते सञ्ज्ञेत्यभिप्रायः। तानि च पुन-

* नास्त्येतत्पदं क-ख ग-पुस्तकेषु ।

† १भा० ३८१ पृ० ११—१४ पं० ।

‡ पुरस्तात् ३०९ पृ० १९ पं० ।

§ पुरस्तात् ३१५ पृ० १२ पं० ।

रसमाम्नातान्येव निघण्टु-समाम्नाये, तेषु वक्तुरभिप्रायगता एत एवो-पमाशब्दा अर्थत उपमीयन्त इत्यर्थोपमा इत्युच्यन्ते। तान्येतानि भाष्यस्य विस्तरविषयत्वात् समाम्नातान्यपि सन्ति अवसरप्राप्तानि प्रदर्श्यन्ते। तद्यथा ;—"सिंहो व्याघ्र इति पूजायाम्"। यो हि पूज्यो भवति स उच्यते 'सिंहो देवदत्तः' इति*। अत्र न सिंह एव देवदत्तः, किन्तर्हि? सिंहगुणस्तत्र कश्चिदस्ति शौर्यादिः, अतस्तदभि-धानेनोपमार्थं लुप्तोपमाशब्दाना मिवादीना मन्यतम मनुच्चारयन्नेव ब्रवीति 'सिंहो देवदत्तः' इति। यत्तदनुच्चारण मुपमा-शब्दस्य स एव लोप इत्युच्यते॥

"श्वा काक इति कुत्सायाम्"। यो हि लौल्यादि-दोषसमन्वयेन कुत्सनीयो भवति, स एव मुच्यते,— 'श्वा अयम्' इति। अत्रापि श्वेवाय मिति इवशब्दस्य लोपो द्रष्टव्यः। धार्ष्ट्यादि-दोषसमुच्चयेन† यः कुत्स्यते, सः 'काकोऽयम्' इत्युच्यते। काकादिशब्दान् उदाहरण-प्रसक्तान् निर्ब्रवीति,—"काक इति शब्दानुकृतिः"। अनुकरण मनु कृतिः, शब्दस्यानुकृतिः; यादृश मेवासौ शब्दं करोति तथैवानुकृत्या तस्य नामापि भवति शब्दस्यानुकृतिः। स हि काकु इति वाश्यते, तस्मात् स काक इत्युच्यते। "तदिदम्" एवं शब्दानुकृतिहेतुकं नाम "शकुनिषु" एव तान्येषु सत्वविशेषेषु "बहुलं" प्रायेणेत्यर्थः। "न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः" शकुनिष्वपि न शब्दानुकृति-हेतुकं नाम विद्यते, इत्यौपमन्यव आचार्यो मन्यते। किं कारणम्?

---

* तथाचामरः—"सिंह-शार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः"—इति ३,१,५९।
† "धाष्ट्यादि-दोषसमुच्चयेन"—इति ख।

व्यभिचारित्वात्। श्यामा, दर्वी, पुच्छस्नवः, हंसः, इत्येवमादिषु शब्दानुकरणहेतुको नामधेयप्रतिलम्भो नास्ति। शकुनिपक्षेऽपि शब्दानुकारो न विद्यते। बहवोऽप्येवं प्रकारा अन्यक्रियार्थैर्नामभिरन्विताः शकुनयः। तच, यदुक्तं "तदिदं शकुनिषु बहुलम्" इति। एतदयुक्तम्। आह;—कथन्तर्हि काकस्यान्यक्रियाहेतुको नामधेयप्रतिलम्भ इति? उच्यते;—स हि "काकः अपकालयितव्यो भवति उपघातभयात्; स हि यद्यत् स्पृशति तत्तदुपहन्तीति अपकाश्यते तस्मात् काक इत्युच्यते। शकुनित्वसामान्यप्रसक्तमुच्यते;—"तित्तिरिस्तरणात्"। 'तॄ प्लवने (भू० प०)'। उत्प्लुत्यासौ गच्छति। "तिलमात्रचित्र इति वा"। अथ वा तिलमात्रचित्रः स भवतीति तित्तिरिः। "कपिञ्जलः कपिरिव जीर्णः" यादृशो हि कपिः मर्कटः, जीर्णः सवर्णतो भवति, तादृशोऽसावपि कपिञ्जलः इत्युच्यते। अथ "वा" "कपिरिव जवते" कपिञ्जलः "ईषत्पिङ्गलः" इत्यर्थः। अथ "वा" "कमनीयं" प्रार्थनीयं मङ्गल्यं मधुरं वा "शब्दं" "पिञ्जयति" अभिव्यनक्तीति कपिञ्जलः। "एवमादीनि शकुनिनामधेयानि" एवमादिना प्रकारेण अशब्दानुकृतिपूर्वकत्वे सति निर्वक्तव्यानि। "श्वाशुयायी"। शु इति क्षिप्रनाम *। क्षिप्रमसौ शीघ्रत्वादेतीति श्वा। "शवतेर्वा गतिकर्मणः †"; स हि नित्यमेव गच्छति। "श्वसितेर्वा" वधकर्मणः ‡। "सिंहः सहनात्" अभि

* १भा० २९१ पृ० (१५)।
† १भा० १४१ पृ० (१०)।
‡ १भा० १८० पृ० (९)।

भवति ह्यसौ अन्यान् प्राणिविशेषान्। "सम्पूर्वस्य वा हन्तेः" उपसर्गस्वेलेन। "संहाय हन्तीति वा" वैयाकरणानां मेषा व्युत्पत्तिः। "व्याघ्रो व्याघ्राणात्" विविध मसौ जिघ्रतीति व्याघ्रः। तस्य हि घ्राणेन्द्रियं पटु भवतीति स हि घ्रन् आघ्राय हन्ति ; घ्राणेन्द्रिये हि तस्य विशिष्टं ज्ञानम्। "व्यादाय हन्तीति वा"; स किल व्यादाय वक्त्रं विवृतं कृत्वा ततो हन्ति। अथ वा "व्यादाय हन्तीति" यः किल प्रथमे यष्टे प्रक्षिप्तः, तेन हन्तुं भवति मृगोऽन्यो वा कश्चित्, स मषावमर्षाद् विहाय्य तस्मिन्नेव प्रदेशे प्रथमग्रहस्थाने आनीय ततो हन्ति। सिंहो व्याघ्रः श्वा काक इत्येवं मनुष्याणांवानीनान्येतानि पदानि निरुक्तानि, अथ मपि निर्वचनप्रकारोऽस्तीति प्रदर्शनार्थम्। सिंहव्याघ्रशब्दयोस्तु अनुलोम मेव निर्वचन मनुलोमव्याख्योपप्रदर्शनार्थम्; एवं हि उभे अपि प्राप्ती दर्शिते भवति॥ १॥

अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशन्मेधाविनामान्युत्तराणि चतुर्विंशतिर्मेधावी कस्मान्मेधया तद्वान् भवति मेधा मतौ धीयते स्तोतृनामान्युत्तराणि त्रयोदश * यज्ञनामान्युत्तराणि पञ्चदश यज्ञः कस्मात् प्रख्यातं यजतिकर्मेति नैरुक्ता याच्ञो भवतीति † वा

---

* इत उत्तरं "स्तोमा स्तवनात्"—इत्यधिकं दृश्यते ग-च-पुस्तकयोः परं तद् इतिनिबद्धम् ; तत्र प्रत्यक्षेत्याद्युक्तेः ( ३४०पृ० १पं० )।

† "याञ्चा भवति इति" क। "याच्ञो भवतीति" च।

यजुरुन्नो भवतीति * वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वर्त्विङ्नामान्युत्तराण्यष्टाद्दत्विक् कस्मादीरण ऋग्यष्टा भवतीति शाकपूणिर्ऋतुयाजी भवतीति वा याच्ञाकर्माण† उत्तरे धातवः सप्तदश दानकर्माण उत्तरे धातवो दशाध्येषणाकर्माण‡ उत्तरे धातवश्चत्वारः स्वपितिसस्तीति द्वौ स्वपितिकर्माणौ कूपनामान्युत्तराणि चतुर्दश कूपः कस्मात् कु पानं भवति कुप्यतेर्वा स्तेननामान्युत्तराणि चतुर्दशैव स्तेनः कस्मात्संस्त्यान मस्मिन् पापक मिति नैरुक्ता निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् (निर्णीतं कस्मान्निर्णिक्तं भवति §) दूरनामान्युत्तराणि पञ्च दूरं कस्माद् द्रुतं भवति दुरयं वा पुराणनामान्युत्तराणि षट् पुराणं कस्मात्पुरा नवं|| भवति नवनामान्युत्तराणि षडेव¶ नवं कस्मादानीतं भवति ॥ २ (१९) ॥

"अर्चतिकर्माण उत्तरे धातवस्त्रिचत्वारिंशत्" **। 'अर्चतिकर्माणः' अर्हत्यर्थाः, पूजयत्यर्थाः पूजाया मवश्यं भवितुं युज्यते उप-

---

* "यजुष्मो भवति इति" क। "यजुर्ना भवतीति" ङ।

† "याच्ञाकर्माण" क, ख। "याच्ञकर्माण" ध।

‡ "दशाध्येषणकर्माण" घ।

§ बन्धनीचिह्नान्तर्गतानीमानि पदानि न दृश्यन्ते क-ख-ग-पुस्तकेषु।

|| "पुराणनं" क। "पुराणलं" ग।

¶ "षळेव" क, ख, ग।

** १भा० ११० पृ० १प० १४ख०।

मेति उपमाशब्देभ्योऽनन्तरम् अर्चतिकर्माणः समाम्नाताः। कियन्तः पुनस्ते? 'चतुश्चत्वारिंशत्' (४४)। कतमे पुनस्ते? "अर्चति, गायति" —इत्येवमादयः*। य एतेऽर्चतिकर्माणः, एतैर्हि मेधाविन एवार्चति, एत एव हि स्तोतुं शक्नुवन्ति; नेतरे अमेधसः॥

तस्मात् "मेधाविनामान्युत्तराणि चतुर्विंशतिः"†। अर्चतिकर्मभ्यः 'उत्तराणि' 'मेधाविनामानि'। कियन्ति पुनस्तानि? 'चतुर्विंशतिः' (२४)। कतमानि पुनस्तानि? "विप्रः, धीरः, विपः" —इत्येवमादीनि‡। विविधामर्थानस्य प्राप्तुं प्रातीति विप्रः। धीः प्रज्ञा, तद्वान् धीरः; रो मत्वर्थे। विस्पष्टं सदसि कथयतीति विपः। इत्येवमादि। आह;—"मेधावी कस्मात्"? उच्यते;— स हि "मेधया तद्वान् भवति"। आह;—"मेधाः"। कस्मात्? सा हि "मतौ धीयते"। मतिर्बुद्धिः, तस्यां या पुरुषशक्तिरभिव्यज्यते, सा मेधा इत्युच्यते§॥

य एव मेधाविनः, त एव स्तोतुं शक्नुवन्तीति मेधाविनामभ्यः "उत्तराणि" "स्तोतृनामानि"‖, कियन्ति पुनस्तानि? "त्रयोदश"। कतमानि पुनस्तानि? "रेभः, जरिता, कारुः"—इत्येवमादीनि¶। रेभो रेभतेः स्तुत्यर्थस्य**। जरिता जरतेः स्तुत्यर्थस्यैव††। कारुः कर्त्ता

---

* १भा० ३३१—३३७ पृ०।
† १भा० ३३८ पृ० ३ष० १५श०।
‡ १भा० ३३८—३४४ पृ०। तत्र पुनर्नैवं पाठक्रमः।
§ शाकपूणिमतेनैतदुक्तम्।
‖ १भा० ३४४ पृ० ३ष० १९श०।
¶ १भा० ३४४—३४९ पृ०।
**, †† १भा० ३३१ पृ० (१),(७)।

स्तोमानाम्। इत्येवमादि योज्यम्। प्रत्यक्षरश्मित्वादस्य शब्दस्य नोक्तं स्तोता कस्मादिति * ॥

यज्ञेष्वेव हि अतिशयेन देवतानां स्तुतयः प्रयुज्यन्त इति स्तोतृनामभ्यः "अनन्तराणि" "यज्ञनामानि †"। कियन्ति पुनस्तानि? "पञ्चदश" (१५)। कतमानि पुनस्तानि? "यज्ञः, वेनः, अध्वरः, मेधः"—इत्येवमादीनि ‡। आह;—"यज्ञः कस्मात्"? उच्यते;—यदेतत् "प्रख्यातं यजति कर्म" लोकवेदयोः। एतदेव भावसाधनेन शब्देनोच्यते यजनं यज्ञ इति। अथ "वा" "याच्ञो भवतीति" यज्ञः; याच्यते ह्यत्र, यतो वै देवाना मन्नं मभूतम् समभावयन्निति ह विज्ञायते; तस्माद् याचनाद् यज्ञः। अथ "वा" "यजुर्भिः" अयम् "उन्नः" संक्लिन्न इव "भवति", बहुलादुच्च यजुषाम्। "बहु कृष्णाजिन इत्यौपमन्यवः" यद् यदुच्च कृष्यते प्रतिविशिष्टं साधनं किञ्चित्, तत् तत् कृष्णाजिन मिति यज्ञः; सोमे तावदजिनद्वयम्, यजमानेऽप्यजिनद्वयम्, अवहन्यमानेषु हि हविःषु अजिनं चर्मोपार्जितं चर्मपात्रेष्वप्यजिनम्; एवं बहुकृष्णाजिनः। अथ "वा" "यजूंष्येनम्" उपक्रमादारभ्यान्तं "नयन्तीति" यज्ञः §। वनतिः कान्त्यर्थः; कान्यन्ते हि यज्ञाद् होमपश्वादिस्वर्गादयः तस्मात् स वेनः यज्ञ इत्युच्यते ‖। मनेर्दं हास्यतीति एवं यज्ञभिः अस्मात् फलं प्रार्थ्यत इति मेधः ¶। इत्येवमादि ॥

---

* ग-घ-पुस्तकयोस्त्वत्रैव "स्तोता कवनात्" इति।

† १आ० २४९ पृ० २ख० १०ख०।

‡ १आ० २४०—२५० पृ०। अस्ति च तत्र पाठव्यतिक्रमः।

§, ‖, ¶ १आ० २४० पृ० (१), (२), (४)।

यज्ञसम्बन्धेनैव "ऋत्विङ्नामानि उत्तराणि अष्टौ"* । ऋत्विजां नामानि ऋत्विङ्नामानि । कियन्ति पुनस्तानि? 'अष्टौ'(८)। कतमानि पुनस्तानि? "भरताः, कुरवः"—इत्येवमादीनि †। भ्रियन्ते दक्षिणाभिरिति भरताः। कुर्वन्ति कर्माणीति कुरवः। इत्येवमादि। आह;—"ऋत्विक् कस्मात्"? उच्यते,—"ईरणः" ईरयिता हि संस्तुतीनां भवतीति ऋत्विक्। "ऋग्यष्टा भवतीति शाकपूणिः" ऋग्भिर्यो यागकारी भवतीति ऋत्विक्। "ऋतुयाजी भवतीति वा" स हि काले देवता यजतीति वा। ऋतौ याजयतीति वा; स हि काले एव याजयते, नाकाले॥

ऋत्विक्सम्बन्धेनैव "याच्ञाकर्माण उत्तरे धातवः सप्तदश" (१७) ‡। कतमे पुनस्ते? इति। "ईमहे, यामि, मन्महे"—इत्येवमादयः §॥

याच्ञासम्बन्धेनैव "दानकर्माण उत्तरे धातवो दश" (१०) ‖। कतमे पुनस्ते? इति। "दाति, दाशति, दासति"—इत्येवमादयः ¶॥

दानसम्बन्धेनैव "अध्येषणाकर्माण उत्तरे धातवश्चत्वारः (४) **। कतमे पुनस्ते? इति। "परिस्रव, पवस्व"—इत्येवमादयः ††। सत्कृत्य दातृभिर्दातुं प्रतिग्रहीतॄणां प्रार्थना, अध्येषणेत्युच्यते॥

---

* १भा० २५०पृ० ३ख० १८ ख०।
† १भा० २५०—२५१ पृ०।
‡ १भा० २५१ पृ० ३ख० १९ ख०।
§ १भा० २५१—२५५ पृ०।
‖ १भा० २५५ पृ० ३ख० २०ख०।
¶ १भा० २५५—२५६ पृ०।
** १भा० २५६ पृ० ३ख० २१ ख०।
†† १भा० २५७ पृ० (१), (२), (३), (४)।

याच्यमानो हि सर्वोऽपि स्वपितीति अध्येषणाकर्मभ्य उत्तरौ "स्वपितिकर्माणौ" *। कतमौ पुनस्तौ? "स्वपिति, सस्ति"—"इति" †। स्वशब्देनैवोच्चार्य्य द्विपदस्य मवधारणार्थम्,–एतौ एव "द्वौ ‡"; निगमे न पुनस्तृतीयोऽस्तीति; अल्पत्वाद्वा द्वि-ग्रहणम्॥

"कूपनामान्युत्तराणि चतुर्द्दश" कूप मेव हि आश्रित्य मरौ सुप्यते, सुप्तः कूप इव पतितो भवतीति वा, स्वपितिकर्मभ्या मनन्तराणि कूपनामान्युच्यन्ते। कियन्ति पुनस्तानि? 'चतुर्द्दश' (१४)। कतमानि पुनस्तानि? "वव्रः, कातुः, खातः"—इत्येवमादीनि §। व्रियते ह्यसावुदकार्थं मिति वव्रः। क मुदक मचेति कातुः। इत्येवमादि। आह;—"कूपः कस्मात्"? उच्यते,—"कु पानं भवति" यत्र ह्यसौ भवति, तत्र कुत्सितं पानं भवति; साधनापेक्षत्वात्। "कुप्यतेर्वा" यत्सम्बाधादुदकार्थिनः कुप्यन्ति॥

"स्तेननामान्युत्तराणि चतुर्द्दशैव" ‖। कूप माश्रित्य मुष्णन्ति स्तेना इत्यतः कूपनामभ्यः 'उत्तराणि' 'स्तेननामानि'। कियन्ति पुनस्तानि? 'चतुर्द्दशैव' (१४)। कतमानि पुनस्तानि? "तृपुः, रिपुः"—इत्येवमादीनि ¶। परेभ्यो धनान्याहृत्यातिशयेनासावात्मानं भृत्यांश्च तर्पयतीति त्रिपुः। लिम्पत्यसावात्मानं पापेनेति रिपुः।

---

* १आ० २५० पृ० ३च० ११ ख०।

† १आ० २५० पृ० १२पं०—१४पं०।

‡ १आ० २५८ पृ० ३च० ११ ख०।

§ आ० २५८—२६१ पृ०। अस्ति च तत्र पाठव्यतिक्रमः।

‖ १आ० २६१ पृ० ३च० १४ ख०।

¶ १आ० २६१—२६५ पृ०। अस्ति च तत्रापि पाठव्यतिक्रमः।

इत्येवमादि। आह;— "स्तेनः कस्मात्"? उच्यते,—"संस्त्यानम्" संहतम् "अस्मिन्" "पापकम्" कर्म भवति "इति" एवं "नैरुक्ताः" मन्यन्ते। वैयाकरणाना मन्यथापि स्यादित्यभिप्रायः *॥

"निर्णीतान्तर्हितनामधेयान्युत्तराणि षट्" †। निर्णीतस्य च अन्तर्हितस्य नामधेयानि 'निर्णीतान्तर्हितनामधेयानि'। 'उत्तराणि' प्रकृतेभ्यः स्तेननामभ्यः; स्तेना एव ह्यन्तर्हिता भवन्तीत्येष सम्बन्धः स्तेननाम्ना मन्तर्हितनाम्नां च। कियन्ति पुनस्तानि? 'षट्' (६)। कतमानि पुनस्तानि? "निण्यम्, सस्नः, सनुतः"—इत्येवमादीनि ‡। निर्णीत मिव निण्यम् §। सुप्त मिव सस्नः। सन्तत मिव सनुतः। इत्येवमादीनि॥

"दूरनामान्युत्तराणि पञ्च" (५) ||। अन्तर्हितं यद् भवति, दूरवत्तद् भवतीत्येष सम्बन्धः। कतमानि पुनस्तानि? "आके, पराके, पराचैः"—इत्येवमादीनि ¶। आ कियतो देशात् एतद् वर्त्तते इति विज्ञातव्य मेतद् भवतीत्याके। पराके पराक्रान्ते। पराङ्मुख मञ्चितं पराचैरित्येवमादि। यथैव श्रुतानि छन्दसि, तथैवैतानि समाम्नातानि। आह;—"दूरं कस्मात्"? "द्रुतं" हि तद् "भवति" अध्वनो महत्त्वात्। "दुरयं वा" दुःखं हि तद् गम्यते प्राप्यत इत्यर्थः॥

---

* तथाहि,—"स्तेन चौर्ये (चु० प०,"—इत्यस्मात् पचाद्यचि रूपम्।

† १भा० ३९५ पृ० ३ख० १५ खं०।

‡ १भा० ३९४—३९९ पृ०।

§ पुरस्तात् ११० पृ० ९पं०।

|| १भा० ३९९ पृ० ३ख० १९ खं०।

¶ १भा० ३९० पृ० (१)—(५)।

दूरसम्बन्धेनैव "पुराणनामान्युत्तराणि षट्" (६) *। समानं हि कालाध्वनो र्महत्त्वं दूरपुराणयोः। कतमानि पुनस्तानि? "प्रत्नम्, प्रदिवः, प्रवयाः"—इत्येवमादीनि †। प्राक्तनं प्रत्नम्। प्राग् द्युनिमदासीदिति प्रदिवः। प्रकृष्टवयाः प्रवयाः। इत्येवमादि। आह;—"पुराणं कस्मात्"? उच्यते,— तद्धि "पुरा नवं भवति", न वर्त्तमानकाले॥

"नवनामान्युत्तराणि षडेव" (६) ‡। पुराणसम्बन्धेनैव। कतमानि पुनस्तानि? "नवम्, नूत्नं, नूतनम्"—इत्येवमादीनि §। आह;—"नवं कस्मात्"? उच्यते,—तद्धि सद्य एव कुतश्चित् "आनीतं भवति"॥ २॥

द्विश उत्तराणि नामानि प्रपित्वेऽभीक इत्यासन्नस्य प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते। आपित्वे नः प्रपित्वे तूय मा गहि। अभीके चिदु लोककृदित्यपि निगमौ भवतः। दभ्र मर्भक मित्यल्पस्य॥। दभ्रं दभ्नोतेः सुदम्भं भवत्यर्भक मवहृतं भवति। उपोप मे परा मृश मा मे दभ्राणि मन्यथाः। नमो महद्भ्यो नमो अर्भकेभ्य इत्यपि

* १भा० १९७ पृ० १प० १७ प०।
† १भा० १९८—१९९ पृ०।
‡ १भा० १९९ पृ० १प० १८ प०।
§ १भा० १९९—२०० पृ०।
|| "मित्यप्यल्पस्य" ङ, च।

निगमौ भवतः। तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति सतः संसृतं भवति। तिरश्चिदर्यया परि-वर्त्तिर्यात मदाभ्या। पात्रेव भिन्दन्त्सत एति रक्षस इत्यपि निगमौ भवतः। त्वो नेम इत्यर्द्धस्य त्वोऽपततो नेमोऽपनीतोऽर्द्धं* हरतेर्विपरीताद्धारयतेर्वा स्यादुद्धृतं भवत्यृध्नोतेर्वा स्यादृद्धतमो विभागः। पीयति त्वो अनु त्वो गृणाति। नेमे देवा नेमेऽसुरा इत्यपि निगमौ भवतः। ऋक्षाः स्तृभि†रिति नक्षत्राणां नक्षत्राणि नक्षतेर्गति-कर्मणो नेमानि क्षत्राणीति‡ च ब्राह्मणम् ऋक्षा उदी-र्णानीव ख्यायन्ते स्तृभि§स्तीर्णानीव ख्यायन्ते। अमी य ऋक्षा निहितास उच्चा। पश्यन्तो द्यामिव स्तृभि-रित्यपि निगमौ भवतः॥। वम्रीभिरुपजिह्विका इति सीमिकानां वम्र्यो वमनात् सीमिका स्यमनादुपजि-ह्विका उपजिघ्र्यः¶। यदत्त्युपजिह्विका यद्वम्रो अति-सर्पतीत्यपि निगमो भवत्यूर्दरं** कृदर मित्यावपन-

---

* "पनीतोऽर्द्धो" क, ष; परं श्रुतिपाठविरुद्धः।

† "स्त्रिभि" क, ङ।

‡ "नेमा नक्षत्राणीति" क, ष, ग। "नेमानि न क्षत्राणीति" ङ।

§ "स्त्रिभि" क, ङ ष।

|| क-ष-ग-पुस्तकेष्वित्येव तृतीयखण्डसमाप्तिः।

¶ इतोऽनन्तरं "वम्रीभिः पुत्र मग्रुवो अदानम्"—इत्यधिकः पाठः ङ-ष-पुस्तकयोः।

** "भवति। ऊर्दरं" ग, "निगमो भवतः। ऊर्दरं" ङ, ष।

स्योदरं मुदीर्णं भवत्यूर्ज्जं दीर्णं वा। त मूदरं न पृणता यवेनेत्यपि निगमो भवति। त मूदरं मिव पूरयति यवेन उदरं उतनदरं भवति। समिद्धो अञ्जन् उदरं मतीना मित्यपि निगमो भवति॥ ३ (२०)॥

"द्विश उत्तराणि नामानि" *। द्वे द्वे द्विश उत्तराणीति। "प्रपित्वे, अभीके"—इत्येव मादीनि †। व्याख्यातानि पृथिवीनामभ्य आरभ्य एकैकार्थस्य बहूनि नामधेयानि ‡, इदानी मेकैकस्य द्वे द्वे नामनी वाचके समाम्नायेते;—प्रपित्वे, अभीके इत्येवमादीनि; आद्यावापृथिवीनामभ्यो यावत् § ॥

अधुनैव मुक्त्वा सामान्यतो विशेषेण एकैकं व्युत्पाद्य उदाहरणै-रेव दर्शयति। तद्यथा,—"प्रपित्वे, अभीके"—"इति" एते नामनी "आसन्नस्य" भवतः ‖। इत्येवमादि। "प्रपित्वे प्राप्ते" इत्यर्थः। "अभीके अभ्यक्ते" आभिमुख्येनाश्चिते अभ्यागते। इदानी मुदा-हरणे ब्रवीति;—"आपित्वे नः", "अभीके चित्"—"इति निगमौ (ऋ० सं० ५,७,३०,२.—८,७,२१,१.) भवतः"॥

"यथा गौरो०—० सचा पिब" ¶। ऐन्द्रेषा। बृहती। देवा-

---

* १भा० ३७० पृ० ३ष० १९ ख० ।

† १भा० ३७० पृ० १८ पं० । किञ्च ३८२—३८८ पृ० ।

‡ पुरस्तात् १७५ पृ०—३४४ पृ० १० पं० यावत् ।

§ इत आरभ्य एतदध्यायान्त मिति भावः ।

‖ १भा० ३८२ पृ० (१), (२) ।

¶ "यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् । आपित्वे नः प्रपित्वे तूय मा गहि कण्वेषु सु सचा पिब ॥" ऋ० सं० ५, ७, ३०, २ ।

तिथेः काण्वस्यार्षम्। महाव्रते बृहतीसहस्रे शस्यते। हे 'इन्द्र!' 'यथा' येन प्रकारेण 'गौरः' गौरमृगः, 'अवेरिणम्' अपगतार्णम् अपगतोदकं मरुदेशं गत्वा 'तृष्यन्' तृषा-बाध्यमानः 'अपाकृतम्' अपानीयम्, (पानयोग्यं यत्र नास्ति, स्वल्पोदकत्वात्, तच्च कृतम्; उदकेन वा कृतम् जलाशयस्थानम्) तडाग मन्यद् वा शीघ्रम् 'एति', एवं त्व मप्येतस्मिन् 'आपित्वे' आपानकाले 'प्रपित्वे' प्राप्ते 'तूयं' क्षिप्रम् 'आ गहि' आगच्छ। आगत्य च य एष सोमः 'कण्वेषु' वर्त्तते, त मेभिरेव ऋत्विग्भिः 'सचा' साकं 'सु' सुष्ठु सह स्थित्वा 'पिब' इति॥ ॥ "प्रो ष्वस्मै०—० धन्वसु" *। सुदासः पैज-वनस्येय मार्षम्। अतिच्छन्दाः। सर्वपृष्ठायां मैत्रावरुणीयके देवता-व्यत्यये यागे शाक्वरस्यैन्द्रस्य परोर्यांज्यैषा; रैवतस्य पुरोऽनुवाक्या; शाक्वरे पुनरिय मेव षोडशिशस्त्रे शस्यते। हे स्तोतारः! 'प्रो' प्रकर्षेण 'सु' प्रशस्ताभिः स्तुतिभिः 'अस्मै' 'इन्द्राय' तुभ्यर्थं 'पुरो-रथम्' अग्रतो रथम् एतत् 'शूषम्' बलम् 'अर्चत' स्तुत। कस्य पुनरर्थ मभिसन्धायार्चत? इति। 'अभीके चित् उ लोककृत्'। 'अभीके' अभ्यागते एतस्मिन् 'सङ्गे' सङ्ग्रामकाले प्राप्तेऽप्येषु 'समत्सु' सम्भक्षयितृषु उद्यतायुधेषु शत्रुषु 'लोककृत्' स्थानकृत्। एषु 'वृत्रहा' शत्रुहन्ता इन्द्रो भविष्यतीति एत मर्थ मभिसन्धाय प्रार्चत अस्मै यूय मिन्द्राय पुरोरथं शूष मिति। एव मन्यान् स्तोतॄन् सम्बोध्य

---

* "प्रो ष्वस्मै पुरोरथ मिन्द्राय शूष मर्चत। अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहास्माकं बोधि चोदिता नभन्ता मन्यकेषां ज्याका अधि धन्वसु॥" ऋ० सं० ८, ७, ११, १।

आत्मनापि प्रवृत्ते वक्तुम्;—हे भगवन्निन्द्र! 'अस्माकं' 'बोधि' बुध्यस्व एताः स्तुतीः, मा परेषाम्; बुध्वा चैताः 'चोदिता' अनुज्ञाता जनस्य भव। 'अन्यकेषाम्' अन्येषां 'ज्याकाः' ज्याः 'अधि धन्वसु' धनुःष्वधिरोपिताः 'नभन्ताम्' हिंसन्ताम्; अवततज्याधनुषो हत-सर्वायमा एते अस्मद्द्विषो युष्मदनुग्रहाद् भवन्त्वित्यभिप्रायः ॥

"दभ्रम्, अर्भकम्"—"इति" एते "अल्पस्य" नामनी *। "दभ्रं दभ्नोतेः" वधार्थस्य। तद्धि "सुदभ्नं भवति" सुच्छेदं भवति; अल्पत्वात्। "अर्भक मवहृतं भवति" ह्रस्व मित्यर्थः। "उपोप मे परा मृश", "नमो महद्भ्यो नमो"—"इत्यपि निगमौ (ऋ० सं० १, १,११,७.—१,२,२४,३.) भवतः" ॥

"उपोप०—०मिवाविका"† । भावयव्यस्येय मार्षम्। अनुष्टुप्। भावयव्य मेव सा भर्त्तारं तेनानुपेयमाना ब्रवीति। हे राजन्! 'उप'गम्य 'उप'श्लिष्य च 'मे' मम 'परा मृश' यः प्रदेशः पुरुषेण स्त्रियाः परामृष्टव्यः। किञ्च; 'मा मे दभ्राणि मन्यथाः' अल्पकानि लोमानि मा मन्यथाः। जानेऽह मेतत्, यथा अलोमिकाया उप-गमः प्रतिषिद्धः स्मृतौ;—"नाजातलोम्न्योपहासमिच्छेत्" इति ‡। यतस्ते वेदयामि 'सर्वाह मस्मि रोमशा'; सर्वेष्वेवावयवेषु ममो-त्पन्नानि रोमाणि (येषु स्त्रीणा मुत्पद्यन्ते?)। कथञ्च पुनरह मस्मि रोमशा? 'गन्धारीणा मिवाविका' गन्धारदेशजाताना मविकानां

---

* १म० ३८२ पृ० (३), (४)।

† "उपोप मे परा मृश मा मे दभ्राणि मन्यथाः। सर्वाह मस्मि रोमशा गन्धारी-णा मिवाविका॥" ऋ० सं० १, १, ११, ७।

‡ तथाहि मनुः ३, ८;—"नालोमिकां नातिलोमाम्"—इत्यादि।

मध्ये या सुष्ठु रोमशा भवेत्, तथाह मस्मि रोमशा; निःशङ्को मा मुपगच्छेत्यभिप्रायः॥ ॥ "नमो महद्भ्यो ०—० वृक्षि देवाः" * । त्रिष्टुप् । शुनःशेपस्यार्षम् । होतृजपे विनियुक्ता । 'नमो महद्भ्यः' नमो महत्परिमाणेभ्यो देवेभ्यः । 'नमो अर्भकेभ्यः' अल्पपरिमाणेभ्यः । 'नमो युवभ्यः' यौवनवद्भ्यः । 'नम आशिनेभ्यः' व्यापिभ्यः । 'यजाम' 'देवान्' एतस्मिन्नुपस्थिते यागकाले । 'यदि' 'शक्नवाम' । अल्पश्रुतविज्ञाना वयम् अतएव ब्रूमो यदि शक्नवामेति । वय मीदृशाः सन्तो युष्मान् ब्रूमहे ;—हे 'ज्यायसः' ज्यायांसः ! देवाः ! युष्माक मेव 'शंस' शंसितारं सन्त मल्पे वा महति वा कस्मिंश्चिद् दुःशसे 'मा वृक्षि' मा अस्मान् छिन्धि यज्ञफलात्; को हि नाम नापराध्यति ? इत्यभिप्रायः ॥

"तिरः, सतः"—"इति" एते "प्राप्तस्य" नामनी भवतः † । अप्राप्तस्यैवैते अधीयते, तथापि योज्यम् । "तिरः तीर्णं" हि तद् "भवति" दूर मध्वानम् । "सतः संसृतं भवति" एकीभूय सृतं भवति । "तिरश्चिदर्य्या", "पार्थिव भिन्दन्सतः"—"इत्यपि निगमौ (ऋ० सं० ४,४,१६,२.—५,७,८,१.) भवतः" ॥

"अश्विनावेह०—० श्रुतं हवम्" ‡ । पङ्क्तिराश्विनी । अवस्यो-

---

* 'नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान् यदि शक्नवाम मा ज्यायसः शंस मा वृक्षि देवाः ॥" ऋ० सं० १, २. १४, १ ।

† १भा० ३८१ पृ० (५),(९) ।

‡ "अश्विनावेह गच्छतं नासत्या मा वि वेनतम् । तिरश्चिदर्य्या परि वर्ति र्यातं मदाभ्या माध्वी मम श्रुतं हवम् ॥" ऋ० सं० ४, ४, १९, १ ।

रात्रेयस्यार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। हे 'अश्विनौ!' 'नासत्या!' वां 'गच्छतम्' युवाम् 'इह' अस्मिन् यज्ञे सोमं पातुम्। किञ्च; 'मा वि वेनतम्' मा विगतकामौ भूतम्; युवां माह्वयमानौ मया। किञ्च; 'तिरश्चिदर्य्यया' तिरोऽपि अप्राप्ते एव स्थाने यद्यवस्थितौ स्थः, तथापि 'अर्य्यया' ईश्वरयापि रथगत्या देवगत्या शीघ्रया 'आ यातम्' (द्विवचनं वा सावग्रहत्वात् पदस्य)। किञ्च; 'परि वर्त्तिः यातम्' यद्यपि क्वचिदनिवृत्तौ स्थः, तथापि परिवर्त्तनं कृत्वा आयातम्। हे 'अदाभ्या' अहिंस्यौ! अनुपहिंसितौ! अथवा अदाभ्यया अनुपहिंसितया गत्या आयातम्। हे 'माध्वी!' मधु-सोम-मिश्रं पेयं ययोस्तौ। 'मम' 'श्रुतं' शृणुतम् 'हवम्' आह्वानम्। श्रुत्वा अविलम्बमानौ शीघ्र मायात मित्यभिप्रायः॥ ॥

"इन्द्रो यातूना०—०रक्षसः"*। वसिष्ठस्यार्षम्। जगती। 'इन्द्रः' 'यातूनां' यातुधानानाम् 'अभवत्' 'पराशरः' परा शातयिता। कीदृशानां पुनर्यातूना मभवत् पराशातयिता? इति। उच्यते,— 'हविर्मथीनाम्' हवींषि ये मथ्नन्ति, तेषाम्। 'अभ्याविवासताम्' अभ्युद्वासयतां, यज्ञोत्सादकाना मित्यर्थः। अथवा परिचर्य्यायां स्यात्; ये त मिन्द्रं परिचरन्ति यातवः, तेषा मेव परा शातयितेति। सोऽय मेवंलक्षण इन्द्रः, सोऽस्माभिराराधितः परिचर्य्यया 'अभि एति' अभ्येतु; अस्मान् प्रति। 'शक्रः' शक्तः, सर्वयातूनां यातने। 'परशुः' परशुहस्तो 'यथा' कश्चित् वनच्छित् अभ्येयात्; यथा, 'पात्रा'

---

* इन्द्रो यातूना मभवत् पराशरो हविर्मथीना मभ्या३विवासताम्। अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्सत एति रक्षसः॥" ऋ० सं० ५, ७, ९, १।

पात्राणि कौलालानि लकुटेनाप्रतिकथ्यमानो 'भिन्दन्' कश्चिद्-भ्येयात्; एव मभ्येति 'रक्षसः' रक्षांसि भिन्दन्। 'सतः' प्रदेशात्, दूरादित्यर्थः ॥

"त्वः, नेमः"—"इति" एते नामनी "अर्द्धस्य" *। "त्वः अपततः" अपेत्य ततः। "नेमः अपनीतः" अप भज्य नीतः, पृथक् कृत इत्यर्थः। "अर्द्धं हरतेर्विपरीताद्धारयतेर्वा स्यात्"; "उद्धृतं" हि तद् "भवति"। "ऋध्नोतेर्वा स्यात्"; "ऋद्धतमः" अभि-सम्पन्नतमः "विभागः" भवति। "पीयति त्वो अनु त्वो गृणाति" —"नेमे देवा नेमेऽसुराः"—"इत्यपि निगमौ (ऋ०सं०२,२, १६,२.—य०मै०ब्रा०) भवतः" ॥

"बोधा मे०—०अग्ने"—इति †। त्रिष्टुप्। दीर्घतमस आर्षम्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने!' 'यविष्ठ' युवतम! 'बोध' बुध्यस्व 'मे' मम 'अस्य' 'वचसः' 'मंहिष्ठस्य' दातृतमस्य, पूजयितृतमस्य वा, महत्तमस्य वा 'प्रभृतस्य' प्रकृष्टैर्भगवद्गुणैः सम्भृतस्य। हे 'स्वधावः' अन्नवन्! ये गुणा अस्य वचसः, तान् बोध। किञ्च; इद मपरं शृणु,—उभयेषां प्राजापत्यानां देवासुराणां द्विधा विभक्तानां "पीयति त्वः" हिनस्ति एक मर्द्ध मसुराख्यम्, "अनु त्वः" अनु गृणात्येक मर्द्धं देवाख्य मनु ष्टौतीत्यर्थः। तत्रैवं सत्युभयथा विप्रतिपन्नेषु प्राजापत्येषु 'वन्दारुः'

* १भा० ३८३ पृ० (७), (८)।

† "बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने॥" ऋ० सं० २, २, १९, २।

वन्दनशीलः अहं, दैवं पक्ष माश्रितः, हित्वा आसुरं, तवैतां 'तन्वं' तनूं ज्वलन-दहन-प्रकाशीकरणसमर्थां नित्यकाल मेव प्रातर्मध्यन्दिने, सायं च 'वन्दे' स्तौमीत्यर्थः॥ ॥"नेमे देवा नेमेऽसुराः"—इति ब्राह्मणवाक्य मेवेदं वाजपेये मैत्रायणीयानाम्। अर्द्धतो देवा अर्द्धतोऽसुरा आसन्नित्यर्थः॥

"ऋक्षाः, स्तृभिः"—"इति" एते "नक्षत्राणाम्"नामनी*। नक्षत्रशब्दं पर्यायाभिधानप्रसङ्गं निर्ब्रवीति;—"नक्षत्राणि नक्षतेर्गतिकर्मणः" गत्यर्थे वर्त्तमानस्य; तानि हि नित्य मेवागच्छन्ति। "नेमानि क्षत्राणीति च ब्राह्मणम्"। नेमानि, क्षत्राणि धनानि। क्षत्र मिति धननाम†। किन्तर्हि? धनस्वरूपाण्येतानि; सूर्यरश्म्यनुवेधात् दीप्यमानानि सन्ति हिरण्मयानीव भ्राजन्ते इति तु ब्राह्मणम्; तु-शब्दार्थे च शब्दः। "ऋक्षाः" "उदीर्णानीव" उदीरितानीव, केन चिदूर्द्धं गमितानीव "ख्यायन्ते" दृश्यन्त इत्यर्थः। "स्तृभिः स्तीर्णानीव" "ख्यायन्ते" दृश्यन्ते। "अमी य ऋक्षाः"—"पश्यन्तो द्या मिव स्तृभिः"—"इत्यपि निगमौ (ऋ॰सं॰ १,२,१४,५.—३,५,६,३.) भवतः"॥

"अमी य ऋक्षा॰—॰ नक्त मेति"‡। शुनःशेपस्यार्षम्। त्रिष्टुप्। वारुणी। वरुणस्यार्यां स्तुत्य उच्यते। 'अमी ये ऋक्षाः' अमूनि यानि नक्षत्राणि 'निहितासः' निहितानि 'उच्चा' उच्चै

* १भा॰ ३-३ पृ॰ (९). (१०)।

† १भा॰ ३१४ पृ॰ (९)।

‡ "अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्त मेति॥" ऋ॰ सं॰ १, २, १४, ५।

रित्यर्थः। किञ्च; तानि ‘नक्तं ददृश्रे’ रात्रावेवैतानि दृश्यन्ते। ‘कुह चिद् दिवेयुः’ न विज्ञायन्ते हि क्व चिद् दिवैतानि गच्छन्ति? कि मेतत् स्यात्? ‘अदब्धानि’ अनुपहिंसितानि ‘वरुणस्य’ आदित्यस्य एतानि ‘व्रतानि’ कर्माणि आश्चर्यभूतानि स्युः। कि मन्यद् भविष्यति? स हि भगवानादित्यः, तानि कुतश्चिदानयन्निवास्तं गच्छति, पुनश्चैतानि अपनयन्निवोदेति? तदेवं दर्शनं वा तेषां सूर्यकृत मेव। यदपि चेतद् ‘विचाकशत्’ दीप्यमानः ‘चन्द्रमा’ ‘नक्तम् एति’, तदप्यस्यैव भगवतः सूर्यस्य कर्म; अय मेव हि चन्द्रमसि दीप्ति मादधान इवास्तं याति, पुनश्चाक्षिपन्निव चन्द्रमसो दीप्ति मुदेति। योऽय मेवंस्वभावो वरुणः, तं वय मभिप्रेतार्थसिद्धये स्तुमः, स इदं नामास्माकं करोत्विति॥  ॥ “ऋतावानं ०—० दमेदमे” *। गोतमपुत्रस्य वामदेवस्यार्षम्। अनुष्टुप्। आग्नेयी। ‘ऋतावानं’ यज्ञवन्तं ‘विचेतसं’ विभूतप्रज्ञानं ‘विश्वेषां’ सर्वेषाम् ‘अध्वराणाम्’ यज्ञानां ‘हस्कर्त्तारं’ स्पर्द्धाकर्त्तारम्, उपज्वलिते हि तस्मिन् भ्रातृयज्ञैः स्पर्द्धन्त इव यज्ञाः, त मेवङ्गुणविशिष्टम् अग्निं ‘पश्यन्तः’ वय मनेकधा विहृतं ‘दमेदमे’ यज्ञगृहेयज्ञगृहे तासु-तासु क्रियासु व्यापृतं स्तुमः। किञ्च; योऽनेकधा दीप्यमानो ‘द्याम् इव स्तृभिः’ नक्षत्रैः पृथिवीं चित्ररूपां, वेदीं वा करोति, स नोऽभिष्टुतोऽभिप्रेतानर्थान् साधयत्वित्यभिप्रायः॥

“वक्षीभिः, उपजिह्विका”—“इति” एते “सीमिकानाम्”

---

* “ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः। विश्वेषामध्वराणां हस्कर्तारं दमेदमे॥” ऋ० सं० ३, ५, ६, २।

नामनी भवतः * । या एताः पिपीलिका इत्युच्यन्ते लोके, ता इमाः सीमिकाः। "वम्र्यो वमनात्"; ता हि वमन्त्युदकं येन मृदार्द्रीभवति। "सीमिकाः स्यमनात्"; स्यमन्ति हि ता नित्य मेव गच्छन्ति इत्यभिप्रायः। "उपजिह्निकाः उपजिघ्रः" उपजिघ्रन्ति हि ताः; पटु ह्यासां घ्राणेन्द्रियं भवति। द्वयोरपि नाम्नोरेक एव † "निगमः"— "यदत्त्युपजिह्निका (ऋ० सं० ६,७,१२,६)"—"इति" "भवति"॥

"यदत्त्युपजिह्निका० — ० ते घृतम्" ‡। भार्गवस्य प्रयोगस्येय मार्षम्। उक्थेऽग्नौ समिदनया हूयते। 'यत्' 'अत्ति' भक्षयति 'उपजिह्निका' अन्तरनुप्रविश्य, 'यत्' च 'अतिसर्पति' आर्द्रया मृदा परिवेष्टयन्, 'वम्रः' वह्निर्न शक्नोत्यत्तुं खदिरसारादि; 'सर्वं' तदुभयजातीय मपि 'ते' तव हे भगवन्! अग्ने! 'घृतम्' अस्तु; 'ता' तत् घृतीभूतं, त्वं 'जुषस्व' संसेवस्व हे 'यविष्ठ्य' युवतम! § ॥

"ऊर्द्दरम्, कृदरम्"—"इति" एते "आवपनस्य" नामनी भवतः ‖। उप्यते यस्मिन् यवादि धान्यं कुसूलेऽन्यत्र वा वेणवादौ कस्मिंश्चित्, तदुर्द्दर मिति कृदर मिति च; यदावपन माहुः; प्राकृतेन लौकिकास्तदावपन मित्युच्यते ¶। "ऊर्द्दरम्" "उद्दीर्णम्" ऊर्द्धं हि तद् दीर्णं "भवति"। अथ "वा" "ऊर्जे" तदर्थाय

* १भा० १८४ पृ० (११), (१२)।

† ज-च-पुस्तकयोस्तु "सृबीभिः पुत्र मृगुवो चदानम् (ऋ०सं०२,९,२,४)"—इति प्रथमस्य, "यदत्त्युपजिह्निका"— इत्यादि द्वितीयस्येति द्वावेव निगमौ दृश्येते।

‡ "यदत्त्युपजिह्निका यद्वम्रो अतिसर्पति। सर्वं तदस्तु ते घृतम्॥"

§ 'ता जुषस्व यविष्ठ्य'—इत्येतच्चरणं पूर्वतोऽनुवर्त्त्यैव व्याख्यातम्।

‖ १भा० १८४ पृ० १३), (१४)। "ऊर्दरम्"-इति च-पुस्तकमात्रसम्मतः पाठः।

¶ 'आवपनं' धान्यादिस्थापनस्थानम्; तच्च काष्ठनिर्मितं 'कुसूलम्', वेणुनिर्मितं 'वैणवं' चेत्यादि विविधं भवति।

"दीर्णं" भवति*। ऊर्गित्यन्ननाम, तदुतये हि तच्छुषिरीभूतं भवति। "न मूर्द्दरं न पृणता"-"समिद्धो अञ्जन्"—इति निगमौ (ऋ० सं० २,६,१४,५.—य० वा० सं० २९,१) भवतः॥

"अध्वर्यवो०—०वो अस्तु"†। गृत्समदस्येयमार्षम्। त्रिष्टुप्। ऐन्द्री। हे 'अध्वर्यवः'! 'यः' इन्द्रः 'दिव्यस्य' द्युलोकाश्रयस्य, 'वस्वः' वसुनः, धनस्य, 'यः' च 'पार्थिवस्य' अन्तरिक्षलोकाश्रयस्य (पृथिवीत्यन्तरिक्षनामसु पठितम्), यश्च 'क्षम्यस्य' भूम्याश्रयस्य, 'राजा' अधिपतिः, 'तम्' एवङ्गुणयुक्तम् 'इन्द्रम्' 'ऊर्द्दरं न' ऊर्द्दरमिव 'पृणत' पूरयत 'यवेन'। यथा कश्चिन्मनुष्यः ऊर्द्दरं पूरयेत्, तथा यूयमिन्द्रं 'सोमेभिः' सोमैः पूरयत। 'तद् अपः वः अस्तु' तद् वः कर्मास्तु, सर्वं मन्यन्मु[?]क्तेत्यभिप्रायः॥ ॥ "समिद्धो अञ्जन्०——०मधस्थम्"‡। आप्रीसूक्तम् आध्वर्यवेऽश्वमेधे। तत्रेयं प्रथमा आप्री। हे 'अग्ने!' भगवन्! 'समिद्धः' सन्दीप्तः, त्वम् 'अञ्जन्' गमयन्नात्मानं प्रति। 'कृदरम्' आवपनं 'मतीनां', देवानां हि सर्वेषां 'घृतम्' आवपनं मतीनाम्; ते हि तत्र सर्वा मतीः प्रक्षिपन्ति ममेदं स्यादिति। तदेवङ्गुणयुक्तं घृतं 'मधुमत्' मधुस्वादयुक्तम् 'पिन्वमानः' पिबन्नित्यर्थः। अथवा देवान् प्रति 'वहन्'

---

* "उद्दीर्णम्"—इति च-पुस्तकमात्रसम्मतः पाठः। "उद्दीर्णम्"—"उद्दीर्णम्",—इति द्वावेव पाठौ इतिहासत्यम्मतौ; 'उत्पूर्वात् दृ विदारणे इत्यस्मात्, ईर गताविन्यस्माद्वा'—इत्याद्युक्तेः (१भा० १८४पृ० १२पं०)।

† "अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा। तमूर्द्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु॥" ऋ० सं० २, ६, १४, ५।

‡ "समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः। वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम्॥" य० वा० सं० २९, १।

'वाजी' आत्मना वेजनवान् बलवान्; परेभ्यो वा भयदाता। हे 'जातवेदः!' वहन्नेन माश्वमेधिकं वाजिन मुच्यसे;—अस्माभिः 'प्रियम्' एनं 'वाजिनं' 'देवानां' 'सधस्थं' समानस्थानम् 'आ' आभिमुख्येन, शीघ्रतरं 'वक्षि' वह प्रापयेत्यर्थः ॥ २ ॥

रम्भः पिनाकमिति दण्डस्य। रम्भ आरभन्त एनम्। आ त्वा रम्भं न जिव्रयो ररम्भेत्यपि निगमो भवति। आरभामहे* त्वा जीर्णा इव दण्डं पिनाकं प्रतिपिनष्ट्ये-नेन। कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति†। मेना ग्ना इति स्त्रीणां स्त्रिय स्त्यायतेर-पत्रपणकर्मणो मेना मानयन्त्येना ग्ना गच्छन्त्येनाः‡। अमेनांश्चिज्जनिवतश्चकर्थ। ग्नास्त्वाकृन्तन्नपसोऽतन्वते-त्यपि§ निगमौ भवतः। शेपो वैतस इति पुंस्प्रजननस्य। शेपः शपते स्पृशतिकर्मणो वैतसो वितस्तं भवति। यस्यां मुशन्तः प्र हराम शेपम्। त्रिः स्म माह्नः श्नथयो वैतसेनेत्यपि निगमौ भवतः। अयैनेत्युपदेशस्य॥। अया ते अग्ने समिधा विधेमेति स्त्रियाः। एना वो अग्नि मिति नपुंसकस्य। एना पत्या तन्वं १ सं सृजस्वेति

* "भवत्यारभामहे" ख, ङ,च।

† अत्रैव चतुर्थखण्डसमाप्तिः क-ख-ग-पुस्तकेषु।

‡ "ग्ना आगच्छन्त्येनाः"—इति क, ख, ग।

§ "तन्वतेनेत्यपि" क, ख, ग।

॥ "अयैने इत्युपदेशस्य" च।

पुंसः। सिषक्तु* सचत इति सेवमानस्य। स नः सिषक्तु यस्तुरः। स नः सेवतां यस्तुरः। सचस्वा नः स्वस्तये। सेवस्व नः स्वस्तये। स्वस्तीत्यविनाशिनामास्ति†रभिपूजितः सु अस्तीति ‡ भ्यसते रेजत इति भयवेपनयोः। यस्य शुष्माद्रोदसी अभ्यसेताम्। रेजते अग्ने पृथिवी मखेभ्य इत्यपि निगमौ भवतः। द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिस्तयोरेषा भवति ॥ ४ (२१) ॥

"रम्भः, पिनाकम्"—"इति" एते "दण्डस्य" नामनी §। "रम्भ आरभन्त एनम्" अस्खलनार्थम्। "आ त्वा रम्भं न"—"क्रिविवाणाः पिनाकहस्तः"—इति निगमौ (ऋ॰सं॰ ६,२,४५, ५.—य॰वा॰सं॰ ३, ६१.) ॥

"आ त्वा रम्भं॰—॰सधस्थ आ" ‖। काण्वस्य त्रिशोकस्यार्षम्। ऐन्द्री। गायत्री। अतिरात्रे महाव्रते च शस्यते। हे भगवन्निन्द्र! "आ रभामहे" वयं "त्वा" त्वां 'रम्भं न' "दण्ड मिव" 'जिव्रयः' "जीर्णाः" इत्यर्थः। यथा वृद्धाः के चित् दण्ड मारभेरन्नवष्टम्भार्थ मेव मारभामहे त्वाम्। हे भगवन्! 'शवसस्पते' बलस्य पते! त्वं न आश्रय इत्यभिप्रायः। किञ्च; 'उश्मसि त्वा' कामयामहे त्वां नित्य मेव 'सधस्थे' समाने एव कस्मिन् स्थाने यज्ञायतनेऽव-

* "सिषक्ति" क, ख, ग।

† "स्वस्तीत्यविनाशनामास्ति" क, ख, ग।

‡ "स्वस्तीति" घ।

§ १अा॰ ३न्॰ ३० (१५), (१९)।

‖ "आ त्वा रम्भं न जिव्रयो ररम्भा शवसस्पते। उश्मसि त्वा सधस्थ आ॥"

स्थितं त्वा माभिमुख्येन प्रष्टुं स्तोतुं वेत्यभिप्रायः॥ ॥ "पिनाकं" "प्रति पिनष्ट्येनेन" हन्तीत्यर्थः। "एष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि। अवततधन्वा पिनाकहस्तः कृत्तिवासाः" *। 'एष ते रुद्र भागस्तेन'—इति; त्रैयम्बकाः पुरोडाशा अनेन मन्त्रेण हूयन्ते आसज्यन्ते। हे भगवन्! 'रुद्र!' 'एषः' 'ते' तव 'भागः' 'तेन' अवसेन पथ्यदनेन 'परः' परस्तात् 'मूजवतः' पर्वतात् 'अतीहि' अतिगच्छ, मा अत्रैव स्थाः। कथम्पुनरतीहि? 'पिनाकहस्तः' भूत्वा, 'कृत्तिवासाः' चर्मवासाः, 'अवततधन्वा' चैत्र मतीहि॥

"मेनाः, ग्नाः"—"इति" एते "स्त्रीणां" नामनी †। पर्यायाभिधानप्रसङ्ग मुच्यते;—"स्त्रियः स्त्यायतेरपत्रपणकर्मणः लज्जार्थस्य; लज्जन्त्यपि हि ताः। "मेनाः", "मानयन्त्येनाः" पुरुषाः। "ग्नाः", "गच्छन्ति" हि "एनाः" मैथुनेन धर्मेण। "अमेनांश्चित्"—"ग्नास्त्वा कृन्तन्"—"इति" "निगमौ (ऋ० सं० ४,१,२८,१.— शा० वे० कौ० ग्रा० ता० ब्रा० १,१,८) भवतः"॥

"आ प्र द्रव०—०चकर्थ" ‡। अवस्योरात्रेयस्यार्षम्। त्रिष्टुप्। ऐन्द्री। हे 'हरिवः!' 'आ' आभिमुख्येनास्मान् 'प्र' प्रकर्षेण 'द्रव'।

---

* यजुर्वेदीयशाखाविशेषे एव मेव पाठः। माध्यन्दिनानां त्वेवं पाठः,—"एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि। अवततधन्वा पिनाकावसः कृत्तिवासा अहिंसन्नः शिवोऽतीहि॥" (य० वा० सं० ३, ६१) मूलपाठस्त्वन्यथैव (२५९ पृ० ८ पं०)। यथैव च पुनः व्याख्यानकालेऽन्यथा पाठक्रमोऽवलम्बिष्यते (२५८ पृ० ७—८ पं)।

† १भा० २८५ पृ० (१०), (१८)।

‡ "आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व। नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ॥" ऋ० सं० ४, १, १९, १।

किञ्च; 'मा वि वेनः' मा विगतकामो भूरस्मत्तः । हे 'पिशङ्गराते' शोभनदान ! 'अभि सचस्व' 'नः' । किञ्च; 'नहि' * 'अन्यत्' देवतान्तरं 'त्वत्' त्वत्तः प्रतिविशिष्टम् 'अस्ति', यत् प्रतिपद्येमहि । हे भगवन्! 'इन्द्र!' 'वस्वो' वसुमन्! † किं कारणम्? 'अमेनांश्चित्' अस्त्रीकानपि स्तोतॄन् 'जनिवतः' एव स्त्रीम, अत एव 'चकर्थ' करोषीत्यर्थः । यस्मात् त्व मेवङ्गुणविशिष्टः, तस्मात् त्व मेव स्तुम इत्यभिप्रायः ॥　　॥ "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णामि०—० ‡ शास्त्वा कृन्तन्नपसोऽतन्वत वयित्र्योऽवयन् वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्व मशीय वयोदात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे०—० § क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्र माविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते॥" वासःप्रतिग्रहणमन्त्रेऽनुषङ्ग एषः, मैत्रायणीयके ॥, ताण्ड्यब्राह्मणे (ता०कौ०ब्रा० १,१,८) च, अन्यास्वपि शाखासु च ¶ । तद् वास उच्यते;—हे 'वासः !' 'सवितुः' आदित्यस्य 'प्रसवे' अभ्यनुज्ञातः अहं त्वां 'प्रतिगृह्णामि'। 'अश्विनोः' देवयोः बाहुभ्यां प्रतिगृह्णामि । नैताभ्या मेव 'बाहुभ्याम्'; अपि च 'पूष्णः' देवस्य 'हस्ताभ्याम्' प्रतिगृह्णामि । किञ्च; 'शास्त्वा कृन्तन्' स्त्रीभिस्त्वं कर्त्तितः, तन्तु-

---

* अत्र 'नहि'—इत्येक मेव पदं मन्यन्ते पदकाराः, न तु नेति हीति पदद्वयम् ।

†, 'वस्वो वसीयः श्रेयस्करम्'—इति सायणः ।

‡, § अत्रोभयत्रैव मूले, बहु पाठाधिक्यं वर्त्तते, तत्राप्यस्ति च कारणम्, तच्च तद्भाष्यदर्शनादेव बोद्धव्यम् ।

|| यजुर्वेदीयशाखाविशेषे ।

¶ माध्यन्दिनीश्रुतौ (य० वा० सं० ७, ४७—४८) ।

करणाभिप्रायेण। 'अपसः' अप्यकाः, अनुपजातपुत्राः, जननाया-समर्थाः, कुविन्दपुत्रकाः त्वाम् 'अतन्वत'। ते हि कुविन्दानां परिकर्म 'धियः' धीमत्यः, बुद्धिमत्यः, कुशलाः, वयित्र्यः त्वाम् 'अवयन्' कुविन्दस्त्रियः कृतवत्यः। तदेव मभिनिष्पन्नं त्वां 'मह्यं' 'बृहस्पतये' बार्हस्पत्य आत्मन्यवस्थिताय 'वरुणः' देवताविशेषो 'ददाति' उदकपूर्वकं त्वं दीयसे। सोऽहम् एवङ्गुणयुक्तः त्वां प्रति-गृह्य 'अमृतत्वम्' अमृतभावं यथाभिलषित मेव 'अशीय' अश्नु-याम्। त्वं प्रतिगृह्यमाणं वासः, तव प्रसादात् मैव मेतत् स्यात्,—अमृतभावान्मम मा खण्डनं कार्षीरित्यभिप्रायः। किञ्च; 'मयः' सुखं 'दात्रे' 'भूयाद्' भवतु। 'मयः' सुखं 'मह्यं' 'प्रतिग्रहीत्रे' च। किञ्च; 'कः' प्रजापतिरयं 'कस्मै' प्रजापतये एव 'अदात्' ददाति। योऽप्ययं ददाति सोऽप्ययं दाता, अय मपि प्रजापतिरेवे-त्यभिप्रायः। वक्ष्यति हि;—"क ईषते तुज्यते कः"—इति *। किञ्च; कामः कामायैव अदात् तद्ददाति। पुण्यं भविष्यतीत्यनेन कामेन दाता ददाति; आच्छादनं भविष्यति इति इतरः प्रति गृह्णाति। एवं कामो दाता, कामः प्रतिगृहीता। स एव काम उच्यते,—हे 'काम!' 'एतत् ते वासः' सकामो भव इति॥

"शेपः, वैतसः"—"इति" एते नामनी "पुंस्प्रजननस्य" †। "शेपः शपतेः" "स्पृशतिकर्मणः" स्पृशत्यर्थस्य‡; स्पृश्यते हि तेन स्त्री। "वैतसो वितस्तं भवति"। उपचीयं तद् भवति प्रागनु

* ऋ॰ सं॰ १, ९, ८, २।

† १आ॰ ३८५ पृ॰ (१९), (२०)।

‡ शपतिः स्पृशतिकर्मा धातुर्नैघण्टु एव, यथैवोक्तः।

स्मरणात् स्त्रियाः। “यस्या मुशन्तः”-“त्रिः स्म माह्नः”—“इति” “निगमौ (ऋ० सं० ८,४,२७,२.—८,५,१,५.) भवतः” ॥

“तां पूषञ्छिवतमा०—०शेपम्” *। सूर्याया आर्षम्। कन्या-प्रथमोपगमे विनियोगः। हे भगवन्! ‘पूषन्!’ ‘ईरयस्व’ तां योनिम्, ‘यस्यां’ योनौ ‘बीजं’ शुक्रम् ‘मनुष्याः वपन्ति’। स्वक्षत-योनिपोषे बीज मेतस्या मर्थवत् स्यात्; तदधीनो हि योनि-पोष इत्यभिप्रायः। ‘या’ इयम् ‘नः’ अस्माकम् ‘ऊरू’ ‘उशती’ कामयमाना स्त्री ‘विश्रयाते’ नानाप्रकार माश्रयते। तस्या या योनिः, ताम् ‘ईरयस्व’ ‘उद्गमय’ बीजग्रहणाय सुपुष्टां कुरुष्व। ‘यस्यां’ योनौ ‘उशन्तः’ पुत्रजन्मकामयमानाः ‘प्रहराम’ प्रक्षिपेम इमं ‘शेपम्’ ॥ ॥ “त्रिः स्म माह्नः०—०स्वदासीः”†। उर्वश्या आर्षम्। त्रिष्टुप्। सा पुरूरवसा मागास्तिष्ठेत्युक्ता सती अनयर्चा पुरूरवसं प्रत्यब्रवीत्। हे ‘पुरूरवः!’ ‘त्रिः स्म माह्नः’ त्रिरह्नो माम् ‘श्नथयः’ अताडयः त्वम् ‘वैतसेन’ शिश्नदण्डेन पूर्वम्। ‘उत स्म मे’ अपि च यावान् कश्चिदभिलाषो मम मनस्यासीत् तं सर्व मेव त्वम् ‘अव्यत्यै’‡ ‘पृणासि’ व्यतिपूरितवानेवासि। अतस्तवाहम् ‘अनु आयम्’ अनुगतवती। ‘केतम्’ चेतसा अनुकूला तवाह

---

* “तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या३ वपन्ति। या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्॥” ऋ० सं० ८, २, १०, २।

† “त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म मेऽव्यत्यै पृणासि। पुरूरवोऽनु ते केतमायं राजा मे वीर तन्व१स्तदासीः॥” ऋ० सं० ८, ५, १, ५।

‡ ‘अव्यत्यै। सपत्नीभिः सह पर्यायेण पतिमागच्छति, सा व्यती; न तादृशी अव्यती; तस्यै’—इति सायणः।

मभव मित्यर्थः। किञ्च; हे 'वीर!' तदा तथानुकूलायाः मत्याः 'राजा' ईश्वरः त्वम्, अस्याः 'तन्वः' मच्छरीरस्य 'तदा आसीः' तदानीं त्वम्; सम्प्रति न तथा वर्त्तसे, यथा पूर्वम्; अतस्त्वये-दानीं नाहं समेष्ये इत्यभिप्रायः *॥

"अया, एना"—"इति" एते नामनी "उपदेशस्य" †। स पुनरुपदेशः स्त्रीपुन्नपुंसकेषु भिन्नो भवति, अतस्त्रिष्वपि प्रदर्श्यते॥

तत्र, "अया ते अग्ने समिधा विधेम (ऋ॰सं॰ ३,४,२५,५)"—"इति ‡" "स्त्रियाः" उपदेशः। वामदेवस्यार्षम्। त्रिष्टुप्। राक्षोघ्ने कर्मणि विनियोगः। भगवन्! 'अग्ने!' 'अया' अनया 'समिधा' 'ते' तव 'विधेम' परिचर्यां कुर्मः। स त्व मेव मस्माभिः परिचर्यमाणः शृणु यत् कुरुष्व 'प्रतिगृभाय' प्रतिगृहाण इमं 'स्तोमं' स्तोत्रम्, अस्माभिः 'शस्यमानम्' उच्चार्यमाणम्। 'दह' एतान् 'अशसः' अशस्तान् अस्तोतॄन्, आत्मनो 'द्रुहः' च द्रोग्धॄन्, अस्माकम्। एतान् 'रक्षसः' राक्षमान् 'निदः' निन्दितॄंश्च। किञ्च; 'पाहि' रक्ष अस्मान्, हे 'मित्रमहः' मित्राणां पूजयितः! 'अवद्यात्' अवन्दनीयात् कर्मणः, पापादित्यर्थः॥ ॥"एना वो अग्निम् (ऋ॰सं॰ ५,२,२१,१)"—"इति" § "नपुंसकस्य" उपदेशः। वसि-

---

* 'पर मप्येवं मन्तव्यम्,—कि मिति कातरो भवसीत्युवाच'—इति सायणः।

† १भा॰ ३८९ पृ॰ (११), (१२)।

‡ "अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय। दहाशसो रक्षसः पाह्य१स्मान् द्रुहो निदो मित्रमहो अवद्यात्॥" ऋ॰ सं॰ ३, ४, २५, ५।

§ "एना वो अग्निं नमसोर्जो नपात मा हुवे। प्रियं चेतिष्ठ मरतिं स्वध्वरं विश्वस्य दूत ममृतम्॥" ऋ॰ सं॰ ५, २, २१, १।

छस्यार्षम्। बृहती। प्रातरनुवाकाश्विनयोः प्रयुज्यते। 'एना वः' अनेन युष्माकं 'नमसा' अन्नेन अभ्युद्यतेन 'ऊर्जोनपातम्' अपां पौत्रम्, अथवा अन्नानां पौत्रम्; आहुतिभ्यः आपः, अद्भ्य अग्निः; एनया प्रणालिकया अन्नस्य पौत्रोऽग्निः। तम् ऊर्जोनपातम् 'अग्निम्' 'आहुवे'। किंलक्षणम्; 'प्रियम्' इष्टम्, देवानाञ्च 'चेतिष्ठम्' अतिशयेन चेतनावन्तम्, 'अरतिम्' अलमतिं पर्याप्तमतिम्, 'स्वध्वरं' शोभनयज्ञम्, 'विश्वस्य' यजमानगणस्य, एव योऽधिकृतः कर्मणि, तस्य 'दूतम्' 'अमृतम्' अमरणधर्माणम्। हे ऋत्विग्यजमानाः! तं वः आशासमृद्धये अहं माह्वये। स चाहूतो देवान् प्रति दौत्यं करिष्यतीत्यभिप्रायः॥ ॥ "एना पत्या तन्वं१ सं सृजस्व (ऋ० सं० ८,३,२५,२)"—"इति" "पुंसः" उपदेशः। "इह प्रियं०—०वंदाथः"* । सूर्याया आर्षम्। जगती। वधूरनया गृहान् प्रवेश्यते, सोच्यते। हे वधु! 'इह' एव 'अस्मिन् गृहे' 'प्रजया' युक्तायाः सत्याः 'ते' तव यत् 'प्रियं' तत् 'समृध्यताम्'। किञ्च; अस्मिन् गृहे त्वं 'गार्हपत्याय जागृहि' गृहपतिभावाय अवहिता भवेत्यर्थः। किञ्च; 'एना पत्या' अनेन भर्त्रा सह 'तन्वं' तनुं 'संसृजस्व' मिश्रीकुरु। अथैवं सौमनस्ये वर्त्तमानौ 'जिव्री' जीर्णौ यावत् तावत् अवियुज्यमानौ परस्परेण 'विदथं' यज्ञम् 'आ' आभिमुख्येनावस्थितौ सन्तौ यज्ञसम्बन्धीनि वचांसि वदतम् इत्याशीः॥

"एना वो अग्निं नमसा", "एना पत्या"—इति समानेऽप्येना-

* "इह प्रियं प्रजया ते समृध्यताम् अस्मिन् गृहे गार्हपत्याय जागृहि। एना पत्या तन्वं१ सं सृजस्वाधा जिव्री विदथमा वदाथः॥" ऋ० सं० ८, ३, २५, २।

शब्दे स्वरान्ते एकस्मिन्नुपपदविशेषादेकस्य नपुंसकत्विषयत्व मेकस्य पुरुषविषयत्वम्। एकत्र नम इत्युपपदम्, एकत्र पतिशब्दः॥

"सिषक्तु, सचते"—"इति" एते नामनी "सेवमानस्य" *। "स नः सिषक्तु"-"सचस्वा नः"—इति "निगमौ (ऋ०सं०१,१,२४,२.—१,१,२,४.) भवतः"॥

"यो रेवान्०—०यस्तुरः" †। मेधातिथेरार्षम्। अग्न्युपस्थाने विनियुक्ता। "सोमानं स्वरणम् (ऋ०सं०१,१,३४,१)"—इत्यस्या ब्राह्मणस्पत्याया इय मनन्तरा; तेनेय मपि ब्राह्मणस्पत्यैव स्यात्। उक्तञ्चाकरकाणां ब्राह्मणस्पत्याभिरग्नि मुपतिष्ठेतेति। हे भगवन्! ब्रह्मणस्पते। 'यो' 'रेवान्' रयिमान्, धनवान्, 'अमीवहा' रोगहा, 'वसुवित्' च वसुनो धनस्य अपूर्वस्यापि लब्धा, यश्च 'पुष्टि-वर्द्धनः' धनपोषस्य वर्द्धयिता, 'सः' 'नः' अस्मान् 'सिषक्तु' "सेव-ताम्"। पुनः युष्मत्प्रसादात् 'यः' 'तुरः' तूर्णकारी पटुरित्यर्थः॥ ॥

"स नः पितेव०—०स्वस्तये"‡। मधुच्छन्दस आर्षम्। अग्न्युपस्थाने विनियोगः। हे भगवन्! 'अग्ने!' यं त्वां वयं परिचराम, 'सः' 'नः' अस्माकं 'सूनवे' पुत्राय 'सूपायनः' सूपगमनः सूपचारः 'भव', सूपचीर्णश्च 'सचस्व' 'नः' 'स्वस्तये' स्वस्त्ययनाय। निगमप्रसङ्ग मुच्यते,—"स्वस्तीति" एतत् "अविनाशिनाम" अविनाशिनः अर्थस्य

* १भा० ३८७ पृ० (२२), (२४)।

† "यो रेवान् यो अमीवहा वसुवित् पुष्टिवर्द्धनः। स नः सिषक्तु यस्तुरः॥" ऋ० सं० १, १, ३४, २।

‡ "स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये॥" ऋ० सं० १, १, २, ४।

नाम। अन्ये त्वधीयते,—"अविनाशनाम" इति। तेषाम् अविनाश-स्यैव नाम। तच्च सुक्तम्; अधुना व्युत्पत्तिं ब्रवीति,—"अस्तिः" अयम् "अभिपूजितः" सु-पूर्वः सन्नुच्यते "सु अस्ति"—"इति"॥

"भ्यसते, रेजते"—"इति" एते नामनी "भय-वेपनयोः" *। "यस्य शुष्माद्रोदसी"-"रेजते अग्ने पृथिवी"—"इति" "निगमौ (ऋ०मं० २,६,७,१.—५,१,८,४.) भवतः"॥

"यो जात एव०—०जनास इन्द्रः" †। उपरिष्टाद् व्याख्येयः ‡॥

॥ "प्र चित्र मर्कं०—०मखेभ्यः" §। भरद्वाजस्येय मार्षम्। त्रिष्टुप्। चातुर्मास्ये वैश्वदेवे पर्वणि याज्या। "अग्निमारुतीं पृश्नि मालभेत वृष्टिकामः"—इत्यस्य पशोः षडर्चे चेयम्। हे स्तोतारः! 'चित्रम् अर्कम्' चायनीयं स्तोमं 'गृणते' स्तुवते; स्तनयित्नुशब्देन कृत्स्नं जगत् उपशब्दयते। 'तुराय' त्वरमाणाय 'स्वतवसे' स्वात्म-बलावष्टम्भिने 'मारुताय' गणाय। कीदृशानां पुनर्मरुतां गणाय 'प्र भरध्वम्'? इति;—ये मरुतः 'सहसा' स्वेन बलेन 'सहांसि' परेषां बलानि 'सहन्ते' अभि भवन्ति, 'रेजते' बिभेति, कम्पते वा। केभ्यः मरुद्भ्यः? 'पृथिवीमखेभ्यः' मरुद्भ्य इत्यर्थः। य एवङ्गुण-युक्ता मरुतः, तेषां यो गणः, तस्मै प्रभरध्वम् चित्र मर्कम्। अग्नये

---

* १भा० ३८७ पृ० (२५), (२९)।

† "यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्मा-द्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः॥" ऋ० सं० २, ६, ७, १।

‡ दै० का० १०, १, १०।

§ "प्र चित्र मर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्। ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवीमखेभ्यः॥" ऋ० सं० ५, १, ८, ४।

मारुताय च गणायेति स्तोतृन् सम्बोध्य ततोऽग्निं ब्रवीति,—हे भगवन्नग्ने ! शृणु त्वं मयेत मर्क मेवञ्गुणयुक्तैर्मरुद्भिः सह ॥

"द्यावापृथिवीनामधेयानि" एभ्यः "उत्तराणि" द्वि-सम्बन्धेनैवोच्यन्ते *। कियन्ति पुनस्तानि? "चतुर्विंशतिः" (२४)। कतमानि पुनस्तानि? "स्वधे, पुरन्धी"—इत्येवमादीनि †। सर्वस्यास्य भूतग्रामस्य धारयित्र्यौ स्वधे। पुरन्धी, पुरु बहूनि धारयित्र्यौ। इत्येवमादि योज्यम् ॥

द्विवचनेन उक्तानि द्यावापृथिव्योर्नामानि; "तयोः" साहचर्याख्यायिका "एषा" ऋग् "भवति" (साहचर्ये हि सति द्विवचनयोग उपपन्नरूपो भवति नाम्नाम्);— ॥ ४ ॥

कत॒रा पूर्वा॑ कत॒राप॑रा॒योः क॒था जा॒ते क॑वयः॒ को वि वे॑द। विश्वं॒ त्मना॑ बिभृतो॒ यद्ध॒ नाम॒ वि व॑र्त्तेते॒ अह॑नी च॒क्रिये॑व ॥ कतरा पूर्वा कतरापरैनयोः कथं जाते कवयः क एने विजानाति सर्व मात्मना बिभृते यद्धैनयोः कर्म्म विवर्त्तेते चैनयोरहनी अहोरात्रे चक्रयुक्ते इवेति द्यावापृथिव्योर्म्महिमान माचष्ट आचष्टे ‡ ॥ ५ (२२) ॥

॥ इति तृतीयाध्यायस्य चतुर्थः पादः ॥ ३, ४.

---

* १भा० ३०१ पृ० २ अ० १० ख० ।
† १भा० ३०२—३०९ पृ० ।
‡ "महिमान माचष्टे" च। परस्तात् ३४१ पृष्ठायां " * " द्रष्टव्यम् ।

"कतरा पूर्वा कतरा"०—इति *। अगस्त्यस्यार्षम्। त्रिष्टुप्। पृष्ठ्याभिप्लवयोः षष्ठेऽहनि महाव्रते च तृतीये सवने वैश्वदेवे शस्त्रे शस्यते। स्वय मेव तावद् वितर्कयन्नुत्पन्नसंशयो मन्त्रदृग् ब्रवीति;—'कतरा' अनयोः द्यावापृथिव्योः 'पूर्वा'? 'कतरा' तु 'अपरा'? न हि पौर्वापर्य्य मनयोः स्फुटं लक्षयितुं शक्यते। 'कथा' केन प्रकारेण एते 'जाते' स्याताम्? किं पौर्वापर्येण, उत युगपद् भवेताम्? अपि तावत् हे 'कवयः!' 'कः वि वेद' कश्चिदपि विस्पष्टं जानाति? अहं त्वेतावच्छक्नुयादागमाद् वक्तुम्,—तस्मादुद्भूतस्य हिरण्मयस्याण्डस्यैते शकले इति †। एवं ह्याह ते;—"अण्डकपाले रजतं च सुवर्णं चाभवताम्; तद्यत् रजतं, सेयं पृथिवी; यत् सुवर्णं, सा द्यौः"—इति। तेन ज्ञायते युगपदेवैते स्याता मिति। किञ्च; 'विश्वं' सर्वं 'त्मना' आत्मनैव 'बिभृतः' धारयतः। 'यद्ध नाम' यदर्थं मनयोर्नाम नमनम्, यस्माद् भूतग्रामधारणार्थम् एतेन विपरिणामत्वेन, तत् सर्व मेते बिभृतः। किञ्च; 'विवर्त्तेते' 'च' विपर्ययेण वर्त्तेते च 'एनयोः' एव अन्तर्भूते अहनी "अहोरात्रे" 'चक्रियेव' "चक्रयुक्ते इव" चक्रयुगल मिव अवियोगेन संयुक्ते, सम्बद्धे इत्यर्थः॥

मन्त्रव्याख्यानेन गतार्थ मेतद्-भाष्य मिति॥

"द्यावापृथिव्योर्महिमान माचष्टे"—इति। एतदनेन मन्त्रेण द्यावापृथिव्योर्महिमानं माहाभाग्यं मन्त्रदृगाचष्टे॥ ५॥

---

* ऋ० सं० १, ५, १, १।

† मनुः,—१अ० १२, १३ श्लो०।

एव मेतन्नैघण्टुकं प्रकरणं समाप्तम्; अतःपर मैकपदिकं भवति *। यस्याय मादिः;—"एकार्थ मनेक शब्द मिति" † —इति॥

इति निरुक्तवृत्तौ अष्टमाध्यायस्य ‡ चतुर्थः पादः॥ ३,४.

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ अष्टमोऽध्यायः § (तृतीयोऽध्यायः) समाप्तः ॥ ३ ॥

(कर्मनामांनिपरिचयन्नन्दिग्रभायश्वासद्वग्निरभ्राते-वनजामयेमनुष्यनामानितदद्यदश्रावनिभ्योऽभीदन्वया-वयंयथासुपर्णाबहुनामानितनूत्यजेकुहस्विच्चतुरस्वित्प्रि-यमेधवदथलुप्तोपमान्यर्चतिद्विषोरम्भःकतरापूर्वा द्वाविं-शतिः ॥ ‖)

॥ इति निरुक्ते पूर्वषट्के तृतीयोऽध्यायः ॥ ३ ॥

---

( नैघण्टुकं काण्डं समाप्तम्। )

---

* १४९ पृ० १-२ पंक्तिर्द्रष्टव्या।
† नैघ० का० ४, १, १ (२१९ पृ०)।
‡, § १४९ पृ० "¶" द्रष्टव्यम्।
‖ १४९ पृ० "**" द्रष्टव्यम्।

## ॥ अथ चतुर्थोऽध्यायः ॥

तत्र,

### ॥ प्रथमपादः ॥

ॐ३म्। एकार्थ मनेकशब्द मित्येतदुक्त मथ यान्य-नेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामोऽनवगतसं-स्कारांश्च निगमांस्तदैकपदिक मित्याचक्षते जह्वा जघा-नेत्यर्थः ॥ १ ॥

"एकार्थ मनेकशब्द मित्येतदुक्तम्"। किमर्थ मिद मुच्यते? न हि यद्यद् वृत्तं तत्तद् वक्तव्यम्, इदं वृत्त मिदं वर्त्तिष्यत इति। यद्यद् वृत्तं तत्तदनुक्त मपि प्रतीयते, यच्च वक्ष्यमाण मिति। आह;—सङ्क्षेपतो निगमनाय यदुक्तं यदा वक्तव्यं प्रतिजानीथ, समासविस्तराभ्यां * हि सुख माधस्त्यं प्रकरण मवधारयिष्यामहे; गृहीतार्थं सङ्क्षेपाच्च विस्तरेणोत्तरग्रन्थ मुच्यमानं सुख मवभोत्स्यामहे। अपिचोक्त मन्यत्रापि,—

"विस्तीर्य हि त मज्ञान † मृषिः सङ्क्षेपतोऽब्रवीत्।
इत्थं हि ‡ विदुषां लोके समास-व्यासधारणम् ॥"

---

* "प्रतिजानीध्वसमासविस्तराभ्यां" क, ख।
† "विस्तीर्य हि महज्ज्ञान" ग।
‡ "इष्टं हि" ग।

शृणु ;—समासतो यदुक्तं यच्च वक्तव्यम् "एकार्थ मनेकशब्द मिति"—एतत् पुरस्तात् सूचितम् ; एतावन्तः समानकर्माणो धातवः, एतावन्त्यस्य सत्त्वस्य नामधेयानि,—इत्यनेन वाक्येन। यदेतद् "गौरिति पृथिव्या नामधेयम् *"—इत्यत आरभ्य नामाख्यातोपसर्गनिपातानां प्रपञ्चनस्य, तत्त्वभेदपर्याय-†-सङ्ग्रामन्दिग्धोदाहरणतन्निर्वचनव्याख्यानप्रविभागेनोक्तम् ‡। स एव § नैघण्टुकस्य प्रकरणस्य निगमव्याजेन सर्वथाऽप्यर्थः सङ्क्षेपत उक्तः, शास्त्रसम्बन्धस्यैव मनुस्मृतो भविष्यति। प्रकरणद्वयस्य चास्यैव मपुनरुक्तता प्रदर्शिता भविष्यतीत्यनेनाभिप्रायेण एकार्थं मनेकशब्द मित्युक्तम्। एकोऽर्थः पृथिव्यादिः, अनेकेषां गवादिशब्दानाम्, यत्र तत्त्वभूतः कथ्यते ; अनेके च गवादिशब्दाः पृथिव्यादेरेकस्यार्थस्य यत्राभिधायिनः कथ्यन्ते, तदिद मेकार्थं मनेकशब्दं प्रकरणम्। अत्रैकेनार्थेनानेके शब्दा लक्ष्यन्ते, अनेकैः शब्दै || रेकोऽर्थः। ततो लक्षितलक्षणया वृत्त्या प्रकरणं लक्ष्यते। अत्र यद्यपि ¶ गतिकर्मणां द्वाविंशतिशतसङ्ख्याना मविशिष्टं गमन मेकोऽर्थ उक्तः**, तथापि प्रसिद्ध्यनुरोधाय "कसति", "लोठते" ††, "स्रोतते"—इत्येवमादयः ‡‡ प्रतिनियतसत्त्वगमन-

---

* पुरस्तात् १०५ पृ० १ पं०।

† "तत्र भेदपर्याय" क, ख।

‡ १०९ पृ० ११ पं०—१७० पृ० ८ पं०।

§ "स एव" ग।

|| "अनेकैश्च शब्दै" ग।

¶ "अत्र पुनर्यद्यपि" ग।

** १८४ पृ० ८ पं० क्षिप्र १८९ पृ० ९ पं०।

†† "लोठते" क, ख।

‡‡ १भा० १४० पृ० (९), (४), (११) "स्रोतति"।

विषया एव द्रष्टव्याः । तद्यथा,—य एवोत्कटिक त्वरया वा गच्छति, स एव कसतीत्युच्यते ; नेतरो य ऊर्द्धो गच्छति । तथा च,—य एव* निम्नेन प्रदेशेन कश्चिदचेतनो लोष्टादिरन्यो † वा चेतनः पुरुषादिः अकामकारेण गच्छति, स एव लोटत इत्युच्यते ‡; नान्यः । तथा च,— यदेव द्रवद्रव्यं किञ्चित् स्रवति, तदेव स्रोतत इत्युच्यते ; नान्यत् । एवं गच्छतिकर्मणा मेकार्थत्वेऽपि सति प्रसिद्धे सामर्थ्याद् § गमनविशेषेषु यथार्थं विनिवेशो द्रष्टव्यः । देशान्तरप्राप्तिस्तु चलन-पूर्विका, सर्वेषां समानं कार्यम्; इत्यत एकार्थत्व मेषा मुक्तम् ‖ । सामान्यशब्दाश्च कचिद् विशेषवाचिनो भवन्ति, विशेषशब्दाश्च कचित् सामान्यवाचिनः ; तदप्युपेक्षितव्यम् ॥

एकार्थ मनेन समासतो नैघण्टुकं प्रकरण मनुसृतम् ; "अथ" इदानीं यद्व्याख्यातव्यं ¶, तत् समासतः प्रतिज्ञायते ।—"यानि अनेकार्थानि एकशब्दानि" पुरस्तात् समासतः सूचितानि, एतावता मर्थाना मिद मभिधान मित्येवम्; "तानि", "अतः" परम् "अनुक्रमिष्यामः" व्याख्ययेत्यभिसम्बन्धः । किंलक्षणा पुनरिह व्याख्या ? इति । तदुच्यते;—

"तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि ।
निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे ॥"

---

* "स एव" क, ख ।
† "लोष्ठादिरन्या" ग ।
‡ "लोठत इत्युच्यते" ग ।
§ "सति प्रसिद्धिसामर्थ्याद्" ग ।
‖ १भा० ११९—१५० पृ० १४ ख० ।
¶ "यद्याख्यातव्यं" क, ख ।

यान्येतानि दयत्यकूपारादीनि पदानि * अनेकैरर्थैरुपदयादानदहनहिंसादिभिरर्थवन्ति, यानि चैतान्यर्थजातान्युपदयादानदहनहिंसादीनि, एकशब्दवाच्यानि; तान्येव मितरेतरविशेषणविशेष्यभावलक्षणोपलक्षितानि, एकप्रकरणता मुपगतानि; एवम्प्रकारया ऐकपदिकप्रकरणव्याख्यया † 'अनुक्रमिष्यामः' वर्णयिष्यामः ‡। अज्ञातार्थस्याप्रतीयमानस्य पर्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या; शब्दस्यापि व्युत्पादनं व्याख्या। एव मेते द्वे व्याख्ये। तयोरर्थपरिज्ञान मेकस्याः कार्यम्; शब्दपरिज्ञान मेकस्याः। तदेतदुभय मप्येकैकस्मिन् नैगमे पदे यथासम्भवं व्याख्यास्यते § ॥

आह;— किं मनेकार्थान्येव केवलानि अस्मिन् प्रकरणे व्याख्यायन्ते? नेत्युच्यते;—"अनवगतसंस्कारांश्च निगमान्"। 'अनवगतसंस्कारान्' अविज्ञातसंस्कारानित्यर्थः। येषां प्रकृतिप्रत्ययादिसंस्कारो न साकल्येन ज्ञायते ‖, तांश्च निगमान् अत्रैव ¶ व्याख्यास्यामः। पूर्वाणि चानेकार्थानि अनवगतसंस्कारांश्चेति च-शब्दः ॥

तदेतदेवम्प्रकारं प्रकरणं यत्रैतदुभयं व्याख्यायते, "तद्" "ऐकपदिकम्" "इति" अनेन नाम्ना अन्येऽप्याचार्य्याः "आच-

---

* "दयते" १भा० २९९ पृ० (१९)। "अकूपारस्य" १भा० २९० पृ० (११)। आदिशब्दः प्रकारार्थः। तथा च "जरा"—प्रभृतीनि, "अपीच्यम्"—इत्यन्तानि (१भा० ३८८—४५८ पृ०) बोध्यम्।

† "एकपदिकं प्रकरणव्याख्यया" क, ख।

‡ "वर्णयिष्याम इत्यर्थः" ग।

§ १४९ पृ० ९ पं० "§" टीका च द्रष्टव्या।

‖ "ज्ञापितः" ग।

¶ "तत्रैव" क, ख।

च्यते" *; निरूढा ह्येव मस्मिन् प्रकरणे सञ्ज्ञेत्यभिप्रायः। पूर्वस्मिन् प्रकरणे गणशः पदानां विरचना मपेक्ष्यैतदैकपदिक मुच्यते; अत्र त्वेकैक † मेव पदं समाम्नातम्। तद्यथा,—"जहा, निधा"—इत्येवमादीनि ‡। यत्र पुनः क्वचिदनेकान्यपि समाम्नातानि; तद्यथा,—"देवो देवाच्या कृपा" §, "शोमो श्वाः" ||—इत्येवमादीनि, तत्रैव तत् प्रयोजनं वक्ष्यामः ¶ ॥

एवं प्रकरणार्थं सङ्क्षेपतः प्रतिज्ञाय क्रमेण वर्णवृत्तिलाघ प्रथमं यत् पदं **, तदुपादीयते;—"जहा(१)"—इति ††। आह;—किमेतदनवगतसंस्कार मुतानेकार्थम्? उच्यते;—स च जहेत्यनेनानुपपन्नसंस्कारेणोक्तो भवति। अत्र हन्तेर्जहातेश्च सन्देह इति भाष्यकारेणावधृतं "जघानेत्यर्थः"—इति। आह;—कुतः पुनर्विशेषावधारणं हन्तेरेवाच रूपम्, न पुनर्जहातेः? इति। उच्यते;—निगमात् ॥ १ ॥

को नु मर्या अमिथितः सखा सखाय मब्रवीत्। जहा को अस्मदीषते। मर्य्या इति मनुष्यनाम मर्यादाभि-

---

* "इत्याचचते" क, ख।
† "अत्र त्वेकैक' ग।
‡ १भा० ३८८ पृ० ४ ख० १, १, २ ख०।
§ १भा० ४१४पृ० ४ ख० ३ ख० (२९) किञ्च ४३५ पृ०(२९)। परव्याख ९,१,४।
|| १भा० ४०३ पृ० ४ ख० २ ख०(१२) किञ्च ४०७ पृ० (१२)। परव्याख ५,१,२।
¶ वयं वृत्तिकारा इति यावत्।
** "वर्णवृत्तिलाघ यत्पदं" क, ख।
†† १भा० ३८८ पृ० ४ ख० १ ख० (१)।

धानं वा स्यान्मर्यादा (मर्यैरादीयते मर्यादा *) मर्यादिनोर्विभागो मेथतिराक्रोशकर्मापापकं जघान क मह्यं जातु कोऽस्मद्भीतः पलायते निधा पाश्या भवति यन्निधीयते पाश्या पाशसमूहः पाशः पाशयतेर्विपाशनात् ॥ २ ॥

कतमः पुनरसौ निगमः? इत्याह;—"को नु मर्याः (ऋ॰सं॰ ६,३,४९,२)"—इति। त्रिशोकस्येयमार्षम्। गायत्री। महाव्रते महदुक्थे दशाशीतिषु शस्यते। अस्या ऋचि अवेत्यस्य शब्दस्य पूर्वापरपदाविरोध†-प्रकरणशब्दसामर्थ्यार्थोपपत्तिभिः संस्कारानवगमेऽपि सति हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न गच्छतेः। कथम्? इति, शृणु;—'मा' 'नः' 'एकस्मिन् आगसि' 'वधीः' हे 'शूर!'। 'मा' 'द्वयोः' आगसोः वधीः। 'उत' अपि च 'त्रिषु' अपि आगस्सु मा वधीः। 'भूरिषु' अपि अपराधेषु 'मा वधीः' इति ‡। एतस्मिन् प्रकरणे ब्रवीति "को नु मर्याः"—इति। हे 'मर्याः' मनुष्याः! युष्मानेव तावत् पृच्छामि,—'अमिथितः' अनाक्रुष्टः, परुषमपि वा किञ्चिदनुक्तः, अपि च 'सखा' समानख्यानः, 'सखायम्' एव समानख्यानमेव सन्तम् (यथा भवता मह्यं यज्ञे समानख्यानः, एवं सन्तम्) 'अब्रवीत्'। को न्वेव माह? 'अमिथितः' अनाक्रुष्टो ब्रूयाद्

---

* नैतन्निर्वचनं दृश्यते क-च-ग-पुस्तकेषु।

† "पूर्वोत्तरपदाविरोधः" क, च।

‡ "मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु। वधीर्मा शूर भूरिषु॥" ऋ॰ सं॰ ६,२,४८,४।

यः कश्चिद्,—यथा यूय मनाहताः सन्तो मां ब्रूत मा वधीरिति। "जहा को अस्मदीषते"। अपापकशब्दोऽत्र भाष्यकारेणाध्याहृतः प्राक् जहा-शब्दस्य अर्थोपद्योतनार्थम्;—,'अपापकं' सन्तं "क महं" "जघान" हतवान् "जातु" कदाचिदित्यर्थः। "अपापकं", "कम्", "अहम्", "जातु"—इति सर्वं मेतत् अध्याहृतं भाष्यकारेण, 'जहा'-शब्दस्य निराकाङ्क्षीकरणार्थं मधस्तादुपरिष्टाच्च *; एवं हि जहा-शब्दः परिसमाप्तार्थो भवति। न कदाचिदपि कश्चिदपापको मया हतपूर्वं इति, पापकारिणन्तु हन्मीत्यभिप्रायः। ते यूय मपापा एवाजस्रं भूयास्थ, न वो हनिष्यामि। यत् पुनरेतदुक्तं भवद्भिः 'भूरिश्चिदागस्तु मास्मान् वधीः(३७४पृ०१३पं०)',—इति; कथ मागस्कारी न हन्यते? स्या पुरोडाश मवलिह्यात्, न च कस्य चित् कस्मिंश्चिदपि स्वता स्यात्; सर्वं वा असमञ्जस मेव स्यात्, यदि पापकारिणो न हन्येरन्; अथ मनुष्यानपापानपि त्वं हंस्येवेति। अत्र ब्रूमः;—"कः" "अस्मत्" अस्मत्तः अपापकारी सन् "भीतः" 'ईषते' "पलायते" इत्यर्थः; न कश्चिदप्यपापकारी मत्तः उद्विजमानः पलायते; स हि शुद्धेन चेतसा अभिमुख एव मा मभ्येति; य एव तु पापकारी भवति, स एवात्मापराधशङ्कितया बुद्ध्या अस्मत्तो भीतः पलायते इत्यभिप्रायः। अत्रापि कोऽस्मदित्येतस्मात् पञ्चमीयोगात् ईषतेर्गमनमात्रसामान्यवाचिनः † सतो गमनविशेषे पलायनेऽवस्थानम्। यो हि यस्माद् बिभेति, स तस्मात् पलायते।

---

* 'भाष्यकारेण' भगवता यास्केनेत्यर्थः। ३७४पृ० १, २ पं० द्रष्टव्ये।

† १भा० १५० पृ० (७०)।

भीतशब्दस्याध्याहृतः? न ह्यभीतः कश्चित् पलायते॥ इत्येव सम-स्तार्थः॥

अथैकपदनिरुक्तम्।—"मर्या इति" मनुष्यनामसु पठितम् *, इहापि चैतत् "मनुष्यनाम" एव। तस्योक्ता व्युत्पत्तिः;—"मर्या मनुष्यो मरणधर्मा" इति †। अथ "वा" "मर्यादाभिधानम्" एव अच "स्यात्", न मनुष्यनाम। यदा मर्यादाभिधानमेतदभिप्रेतं भवति, तदैवमर्थवत्तास्य योजयितव्या;—"मर्यादा, मर्यैरादीयते" ‡। का नु एषा मर्यादा,— यतो धर्मज्ञाः सन्तो यूय मनाहता अनाक्रुष्टाश्च असदभियोगं सखायः सन्तो मम सख्युर्हन्त मा वधीः? इति; मैतन्न्याय्य मित्यभिप्रायः। "मर्यादा, मर्यादिनोर्विभागः"। संश्रिता § या भूमिरुपक्षीणा, सा मर्येत्युच्यते (विषयान्त इत्यर्थः); आदिरन्यस्य विषयस्योपक्रमस्योच्यते। संश्रितायाश्च ‖ भूमेरादेश्च विभागकारिणी या भूमिः, सा मर्यादेत्युच्यते। "मेथतिराक्रोशकर्मा"। यतश्च पत्न्योऽस्य मभिमेथतीति प्रसिद्ध मश्वमेधे मेथतेराक्रोशकर्मत्वम्। लोकेऽपि च ग्रालो ¶ मेथनक इत्युच्यते; स ह्यभीक्ष्ण माक्रुश्यते, आक्रोशति च सः॥

"अपापकम्"—इत्यस्य भाष्यपदस्यापरो व्याख्यामार्गः;—को ह्येवं ब्रूयादपापकं सन्तं मा वधी रिति? जघान क मर्द जातु पापक

* १आ० १८० पृ० (११)
† पुरस्तात् २१५ पृ० ८ पं०।
‡ क-ख-नाम-वृत्तिपुस्तकयोश्च नास्त्येतन्निर्वचनम्।
§ "स्तता" ग।
‖ "स्ततायाश्च" ग, रोथूपस्तूचीते च।
¶ "स्यालो" ग। स्यालमध्ये स्थितो भाष्यमहंनाय प्रोषितो मयादिचम्पनदृष्टः।

मपापकं वा? कोऽसम्भ्रीतः पलायते? न कश्चिदपि; भीम्योऽह मित्यभिप्रायः। बलकृतिसम्बन्धादिन्द्र * एवायम् † ॥

एव मेतस्मिन् मन्त्रे प्रकरणपूर्वोत्तरपदाविरोधशब्दसाहृप्यार्थोपपत्तिभिर्हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः; जहातौ ह्येतस्मिन् कल्प्यमाने प्रकरणं पूर्वोत्तराणि च पदानि विरुध्यन्ते शब्दसाहृप्येऽपि सति। तस्मान्नात्र जहातेरवकाशोऽस्ति, पारिशेष्यात् हन्तेरेतद्रूप मित्युपपन्नं भवति ॥

एव मेव सर्वेष्वेवानवगतसंस्कारेषु योज्यम् ॥

"निधा[१]"—इति ‡। एतत् पद मनवगतसंस्कारावसरप्राप्तं व्याख्यानीय मैकपदिकव्याख्याधर्मेण प्रकृतानुवृत्त्या च व्याख्यातव्य इति तदभिधानाभिधेयनिगमनिर्वचनानुक्रमप्रवृत्त्या ब्रूमः;—"निधा पाश्या भवति"- इति। पर्यायेण तत्त्ववचनम्। यो वालमयः स्नायुमयो वा पाशसमूहः, पक्षिग्रहणार्थः, स पाश्येत्युच्यते। अधुना द्वावप्येतौ शब्दौ निर्वक्ति, निधा-शब्दं पाश्या-शब्दञ्च।—"यत्" यस्मात् इयं "निधीयते" नीचैर्धार्यते पक्षिग्रहणार्थम्। तस्मात् निधि रिति प्राप्ना, निधानीति वा। सेय मेवं प्राप्ना सती निधेत्यनवगतसंस्कारेणोच्यते। पाश्या-शब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति प्रत्ययोत्पादनार्थम्;—"पाश्या पाशसमूहः" इति। पदान्निष्कृष्य तद्धितार्थो निरुक्तः; अधुना पदार्थं निर्ब्रवीति ;—"पाशः पाशयतेर्विपाशनात्"; तेन हि विविध मतिशयेन वा पाश्यते बध्यत इत्यर्थः॥ २ ॥

---

* "या च का च बलकृति रिन्द्रकर्मैव तत्"—इति दै॰ का॰ ७, १, १।

† ग-पुस्तके तु एतदनन्तरं "निगोकृल्यारलेय मार्षम्"—इत्यधिकम।

‡ १भा॰ ३८८ पृ॰ ९ पं॰।

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् । वयो वेर्बहुवचनं (सुपर्णाः*) सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमाना अपोर्णुह्याध्वस्तं चक्षुश्चक्षुः ख्यातेर्वा चष्टेर्वा पूर्धि पूरय देहीति वा मुञ्चास्मान् पाशैरिव बद्धान् पार्श्वतः श्रोणितः शितामतः पार्श्वं पर्शुमय† मङ्गं भवति पर्शुः‡ स्पृशतेः संस्पृष्टा पृष्ठदेशं पृष्ठं स्पृशतेः संस्पृष्ट मङ्गैरङ्ग मङ्गना§ दञ्चनाद्वा श्रोणिः श्रोणतेर्गतिचलाकर्मणः श्रोणिश्चलतीव गच्छतो दोः शिताम भवति दोर्द्रवतेर्योनिः शितामेति शाकपूणिर्विषितो भवति श्यामतो यकृत् इति तैटीकिः श्यामं श्यायतेर्यकृद् यथा कथा च कृत्यते|| शितिमांसतो मेदस्त इति गालवः शितिः श्यतेर्मांसं माननं वा मानसं वा मनोऽस्मिंत्सीदतीति वा मेदो मेद्यतेः ॥ ३ ॥

अधुना यस्मिन् मन्त्रे निधा-शब्दः पाशसमूहवाची, तमानीय ब्रवीति ; निधाशब्दनिगमार्थम् । कतमः पुनरसौ मन्त्रः ? इत्याह ; —"वयः सुपर्णा" इति ¶ । शाक्त्यस्य गौरिवीतेरियमार्षम् ।

* नास्त्येतत् पदम् क ख-ग-पुस्तकेषु ।

† "परशमय" क, ख, ग घ ।

‡ "परशु" क, ख ।

§ "मङ्क्ना" क, ख, ग ।

|| 'कृत्यते' क, घ ।

¶ ऋ० सं० ८, ३, ४, ६ ।

त्रिष्टुप्। अग्निष्टोमे मरुत्वतीयशस्त्रस्य परिधानीयैषा मित्रिष्टुंभीये सूक्ते। 'वयः' "आदित्यरश्मयः"। "वेतेः"* गत्यर्थस्य (अदा०प०) नामीभूतस्य "बहुवचनम्"; विः, वी, वयः इति। 'सुपर्णाः' "सुपतनाः" एत एव "उपसेदुः"। उपसीदन्ति व्युष्टायां रात्रावहन्यहनि। क मुपसेदुः? 'इन्द्रम्' आदित्यम्। 'प्रियमेधाः' प्रिययज्ञाः। त एव यज्ञसहचारित्वात्; उद्गतेषूदितेषु हि तेषु यज्ञास्तायन्ते। 'ऋषयः' त एव, अर्षणात्†; प्रकाशकत्वात्। 'नाधमानाः' त आदित्य मुपसेदुः‡। क मर्थं "याचमानाः"? इति। "अपोर्णुहि" अपावृणु जनाना मेतत् 'ध्वान्तम्' "आध्वस्तम्", आच्छादितं तमसा। 'चक्षुः' 'पूर्द्धि' "पूरय"; युष्मदननुगृहीत मफल मिवैतेषां जनाना मेतच्चक्षुः§, तत् पूर्द्धि, सफलं कुर्वित्यर्थः। अथवा 'पूर्द्धि' "देहि" इति। यदुक्तं स्यात् अस्तं हि गच्छता त्वया एतेषां जनाना माप्त मिव‖ यच्चक्षुः, तत् पुनरुत्यांस्त्व मेतेभ्यो¶ जनेभ्यो देहि। कथं च पुनर्देहि? 'मुमुग्धि अस्मान्' "मुञ्चास्मान्" 'निधया' "पाशैः" पाशसमूहेन पक्षिणः "इव" एतस्मिन् मण्डले "बद्धान्"। यावदेतत्तावदशेषं तमो नाशयित्वा एतेषां जनाना मेतच्चक्षुर्दद्याः, सफलं वा कुर्मः। एवं ह्येतत् त्वयैव दत्तं भविष्यतीत्यभिप्रायः। एत मर्थं याचमाना उपसेदुः॥

---

* मूलपाठस्तु "वेः" इत्येव।

† "अर्षणात्" ग।

‡ "नाधमानास्त मुपसेदुः" क।

§ "यच्चक्षुः" क, ख।

‖ "जनाना मिव" रोथ्-मु० पाठः।

¶ "तदुत्यंस्त मेतेभ्यो" क, ख। "तदुत्यन्नेतेभ्यो" रोथ्-मु० पाठः।

इति" एतत् पदं मन्दुनेति "एतेन" पदेन "व्याख्यातम्" ; यथैव हि मन्दू इत्येतत् द्विवचन मेकवचनं वा, एव मेतदपि ;—समानवर्च-साविन्द्रमरुद्गणाविति द्विवचन मथवा मन्दुना समानवर्चसा च मरुद्गणेन इत्येवं तृतीयैकवचनम्। अपि वा एवं मरुद्गण उच्यते ;—ल मिन्द्रेण सङ्गच्छमानो नित्य मेव मन्दू मस इति। समान मन्यत् ॥ ४ (१२) ॥

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः। हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्य मज्म मश्वाः ॥ ईर्मान्ताः समीरितान्ताः (सुसमीरितान्ताः *) पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा ऽपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठतीद मपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति संशूरणासः (दिव्यासो अत्याः †) शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः। हंसा इव श्रेणिशो ‡ यतन्ते। हंसा हन्तेर्घ्नन्त्यध्वानं (श्रेणिश इति §) श्रेणिः ॥ अयतेः

---

* क-च-पुस्तकयोरधिकः पाठ एषः।

† एषोऽपि पाठो क-च-पुस्तकयोरधिकः।

‡ "श्रेणिशो" क।

§ अय मपि पाठो न दृश्यते क-ख-ग-पुस्तकेषु।

|| "श्रेणिः" क, ख, ग।

समाश्रिता भवन्ति यदाक्षिषुर्यदापन् दिव्य मज्म मजनि * माजि मश्वा अस्त्यादित्यस्तुतिरश्वस्यादित्यादश्वो निस्तष्ट इति। सूरादश्वं वसवो निरतष्टेत्यपि निगमो भवति ॥ ५ (१३) ॥

"ईर्मान्तास:(१४)"—इति †। एतदनवगम्। "समीरितान्ता:", —"पृथ्वन्ता वा" इति यथासम्भवं शब्दसमाधी। "ईर्मान्तास:" —इति ‡ निगम:। दीर्घतमस आर्षम्। "युमेन दत्तम्"—इति § इयञ्च; द्वे अप्येते अश्वस्तोमीये सूक्ते; तेन चाश्व: स्तूयतेऽश्वमेधे; आदित्यस्य रथे येऽश्वा युक्तास्त उच्यन्ते ईर्मान्तास:; तेषां सप्तानां येऽश्वाश्चत्वार:, ते "समीरितान्ता:" विक्षिप्तान्ता:, प्रसृतान्ता:, प्रविरला इत्यर्थ:। "पृथ्वन्ता वा"; तेषा मेवाश्वानां पृथवोऽन्ता:, पृथूरस्का:, पृथुजघना वा इत्यर्थ:। "सिलिकमध्यमा:, संसृतमध्यमा:" संश्लिष्टमध्यमा इत्यर्थ:। तेषां हि सप्तानां ये मध्यमास्त्रय: इतरेतर मुत्पीड्य संश्लेषेणावस्थिता:। अथ वा पृथुजघनोरस्कानां सतां मध्यमा: शरीरप्रदेशा:, सप्ताना मपि संश्लिष्टा: संलग्नास्तनव:; निरुदरास्तेऽश्वा इत्यर्थ:। तथापि हि स्तुतिरुपपद्यत एव। "शीर्षमध्यमा वा" सिलिकमध्यमा वा। एव मपि हि शब्दे सारूप्य मस्ति; यो हि तेषां सप्तानां मध्यम:, स शिरोभूत: प्रधान इत्यर्थ:। "अपि वा" एव मन्यथा स्यात्। "शिर आदित्य:" एव "भवति" सर्व्वभूतप्राधा-

* 'मजिन' क, ख, ग।
† १आ० ३९१ पृ० १९ पं०।
‡ ऋ० सं० २, ३, १२, ५=१, ११, ७, १०।
§ ऋ० सं० २, ३, ११, २=१, ११, ७, २।

न्यात्। "मूर्द्धा, राजेति वा अह मेत मुपासे * इति ह विज्ञायते"। यस्मात्त्वामावनुप्रविश्य प्राणभावेन† सर्व्वभूतानि "शेते" आस्ते, तस्मात् सर्व्वभूताश्रयणात्‡ शिर आदित्यः। स चैतेषा मश्वानां "मध्ये तिष्ठ-ति"; शीर्षमध्यमास्त एते शीर्षमध्यमा इत्युक्ताः सन्तः शिलिक-मध्यमा इत्युच्यन्ते। "इद मपीतरच्छिर एतस्मादेव"—इति प्रास-ङ्गिकम्। "समाश्रितानि" हि "एतत्" उत्तमाङ्गम् "इन्द्रियाणि" चक्षुरादीनि "भवन्ति" इति शिर उपपत्तिः। 'संशूरणासः' सङ्गताः शूरेण भगवतादित्येन संशूरणाः। "शूरः शवतेर्गतिकर्म्मणः" § स हि परानभिमुखो गच्छत्येव, न पर्य्यावर्त्तते। 'दिव्यासः' ते हि "दिव्याः" दिविजाताः। 'अत्याः' "अतनाः"; ते हि अतन्त्येव, मुहूर्त्त मपि नावतिष्ठन्ते। य एवंलक्षणा अश्वास्ते किं कुर्व्वन्ति? इति। उच्यते; —'हंसा इव श्रेणिशो यतन्ते'; हंसा इव श्रेणीकृताः पङ्क्तीकृताः यतन्ते गच्छन्ति। "हंसा हन्तेः"; ते हि "घ्नन्त्यध्वानम्"। कदा पुनरेवं यतन्ते? "यदाक्षिषुः" 'यद्' "यदा" यस्मिन् काले 'आक्षिषुः' 'आपन्' आप्नुवन्ति। किम्? 'दिव्यम्' 'अज्मम्' "अजनि"। अज्यते ऽस्यां गम्यत इति अजनिः, वाहिका; स्वर्गपथ इत्यर्थः। यदा ते आप्नुवन्ति—उदयादारभ्य यावदस्त मिति, तदैवं यतन्ते। के पुनस्ते? इत्युच्यते,—'अश्वाः'। एव मेतानि ईर्मान्ताम इत्येवमादीनि अश्व-

* "अह मेव सुपासते" क, ख।

† "आदित्यः सर्वाणि भूतानि प्रणयति, तस्मादेनं प्राण इत्याचक्षते"—इति ऐ० आ० ५, ५, ६।

‡ "सर्व्वाश्रयात्" क, ख।

§ १भा० १ष० १४ ख० १४ पृ० (१०)।

त्रिविशेषणानि, अश्वशब्देन समानविभक्त्यन्तत्वात्*। आत्मैवैषां रथो भवत्यात्माश्वा इत्येवं प्रक्रमेण सूर्य्यदैवत एव मन्त्र उक्तः। स पुनरय मश्वस्तुतौ विनियुक्तस्तदसमञ्जस मिति मन्यमानो भाष्यकारः प्रतिसमाधित्सुराह ;—"अस्यादित्यस्तुतिरश्वस्य" इति ; अश्वोऽपि आदित्यात्मना स्तूयत इत्यर्थः। आह ;— कयोपपत्त्या ? इति। उच्यते, "आदित्यादश्वो निस्तष्ट इति"—अनयोपपत्त्या सूर्य्यात्मना अश्वः स्तूयते। आह ;— कुत एतत्सूरादश्वो निस्तष्ट ? इति। उच्यते ;—"सूरादश्वं वसवो निरतष्ट †—इत्यपि निगमो भवति"। "यमेन दत्तं त्रित एन मायुनक्"—इति‡। 'यमेन' 'एनम्' अस्माकं 'दत्तम्' अश्वम् 'त्रितः' त्रिस्थानो वायुः 'आयुनक्' युनक्ति। यथायं योक्तव्यः, तथ वायुना युक्तस्येन्द्रेणाधिष्ठितस्य 'अस्य' 'गन्धर्व्वः' गन्धर्व्वराजः 'रशना मगृभ्णात्'; नियमेन रज्जुं गृह्णाति। कुतः पुनरय मश्वः ? इत्युच्यते,—'सूरात्' सूर्य्यादेत मेवंलक्षणम् 'अश्वं' 'वसवः' 'निरतष्ट' निस्तष्टवन्तः। एव मेतस्मिन् मन्त्रे सूर्य्यप्रभवोऽश्व इति स्तूयते। "कारणाच कार्य्य मनन्यत्"—इत्युपपद्यते सौर्य्येण मन्त्रेणाश्वस्य स्तुतिरिति॥ ५ (१३)॥

**कायमानो वना त्वं यन्मातृरजगन्नपः। न तत्ते अग्ने प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभवः॥ कायमानश्चायमानः कामयमान इति वा वनानि त्वं यन्मातृरपो-**

---

* "समानविभक्तिमात्" क।

† "यमेन दत्तं त्रित एन मायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशना मगृभ्णात् सूरादश्वं वसवो निरतष्ट॥"—इति ऋ० सं० २, ३, ११, २।

‡ अस्यादिकं पूर्व मेवोक्तम् (४११ पृ० ४ पं०)।

ऽगम उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्त्तनं दूरे यत् सन्निह भवसि जायमानः। लोधं नयन्ति पशु मन्यमानाः। लुब्ध मृषिं नयन्ति पशुं मन्यमानाः। शीरं पावकशोचिषम्। पावकदीप्तिम्। अनुशायिन मिति वाशिन मिति वा ॥ ६ (१४) ॥

"कायमानः(१५)"—इति *। एतदनवगतम्। "चायमानः"—इत्यवगमः; "कामयमान इति वा"। "कायमानो वना त्वम्"—इति † निगमः। विश्वामित्रस्यैव मार्षम्। बृहती। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! अग्ने! 'कायमानः' "चायमानः" पश्यन्नित्यर्थः। अथ वा "कामयमानः"। किम्? स्वां योनिम्। कतमाम्? 'वना' "वनानि" दारूणि। दारुभ्योऽग्निर्जायते, तदेतत् प्रसिद्ध मेवोक्तम्‡; यदा चाग्निरनुगच्छति अरणी वात्रगच्छति§। 'मातॄः' वा सर्व्वभूतनिर्मात्रीः 'अपः'; सापि योनिरेवाग्नेः। "आपो वा अग्नेर्योनिः;—इति ह विज्ञायते"॥। अनयोर्योन्योरन्यतरां योनिं

---

* १भा० २९२ पृ० ४पं०।

† ऋ० सं० ३, १, ५. २।

‡ "अग्निं मन्थति सोमे राजन्यागते"—इति, "हस्ताभ्या मेनं मन्थति, शिशुं जात मिति; शिशुरिव वा एष प्रथमजातो यदग्निः"—इति च ऐ० ब्रा० १, ३, ४—५। "वनेषु जायुर्मर्त्तेषु (१, ५, ११, १)"—इत्यादयो मन्त्राश्च द्रष्टव्याः।

§ "चात्रसंगच्छतीति" ग।

॥ 'ऋतस्य योना गर्भे सु जातम् (ऋ० सं० १, ५, ९, २)", "अधित्यसुरेसंः (ऋ० सं० १, ५, ९, ५)", "चित्तिरपां दमे (ऋ० सं० १, ५, ११, ५)"—इत्यादिषु बहुच, एव मादीना मर्चां विधायकब्राह्मणश्रुतिषु च द्रष्टव्यम्। "स निलायत सोऽपः प्राविशत् तं देवा प्रैष मैच्छत्"—इत्यादि च तैत्तिरीयकम्।

'यद्' यदा 'अजगन्' "अगमः" "त्वम्"। कदा पुनरगमः? "उपशाम्यन्"—इत्यध्याहृतं भाष्यकारेण; अनुगच्छन्नित्यर्थः। तस्य तवैव मनुगच्छतः किम्? इति। उच्यते;—'न' 'तत्' 'ते' 'अग्ने'! 'प्रमृषे' 'निवर्त्तनम्'। "न प्रमृष्यते" न प्रमृज्यते निवर्त्तनं, वर्त्म; मार्गो न लुप्यत इत्यर्थः। कथं गम्यते न प्रमृज्यते मार्गः? इति। 'दूरे' ऽपि 'सन्' अदृश्योऽपि भूत्वा यस्मात् "इह" पुनः "भवसि" एव। कदा? "जायमानः", "यत्" यदा अब्भ्यो जायसे वैद्युतात्मना *; यदा वा अरणिभ्यां जायसे मथ्यमानः, तदा॥

"न सायकस्य चिकिते०—०अश्वान् नयन्ति" †। "लोधम्(११)"—इति ‡। एतदनवगतम्। "लुब्धम्"—इत्यवगमः। यस्मिन् निगमे एष शब्दः सा वसिष्ठद्वेषिणी § ऋक्। अहं च कापिष्ठलो वासिष्ठः? यतस्तान् निर्ब्रवीमीति‖॥

"शीरम्(१०) ¶—इति। एतदनवगतम्। अग्निरभिधेयः।

---

* "आदित् प्रत्नस्य रेतसः"—इति (सा० सं० छ० आ० १, १, १०.) द्रष्टव्यम्।

† "न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः। नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान् नयन्ति" ऋ० सं० ३, ३, २२, २।

‡ १भा० ३९२ पृ० ८ पं०।

§ "इन्द्रोतिभिः (ऋ० सं० ३, ३, २२, १) इत्याद्याश्चतस्रो वसिष्ठद्वेषिण्यः। पुरा खलु विश्वामित्रशिष्यः सुदा नाम राजर्षिरासीत्। स च केन चित् कारणेन वसिष्ठद्वेष्योऽभूत्। विश्वामित्रस्तु शिष्यस्य रक्षार्थं आभिर्ऋग्भिर्वसिष्ठमशपत्। इमा अभिशापरूपाः। ता ऋचो वसिष्ठा न शृण्वन्ति।'—इति ऋग्भाष्ये सायणः।

‖ "पुरा खलु तपसः क्षयो मा प्रापदिति शापाग्निदत्तं मौनिनं विश्वामित्रं वसिष्ठपुत्रा बद्धा नीतवन्तः। तान् प्रति विश्वामित्रो ब्रूते;—" इत्यादि ऋग्भाष्यं द्रष्टव्यम् (३, ३, २२, ३)।

¶ १भा० ३९२ पृ० ११ पं०।

"अनुशायिन मिति वा"—इति; अनुप्रविश्य सर्व्वभूतानि शेते इत्यनुशायी; त मनुशायिनम्। अश्नोति व्याप्नोति वा सर्व्वभूतानीति "आश्विनम्"। "शीरं पावकशोचिषम् ०—०. दीर्घश्रुत्तमः"—इति * निगमः। भार्गवस्य प्रयोगस्येय मार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। 'शीरम्' अनुशायिनं व्यापिनं वा अग्नि मस्तौमि। "पावकशोचिषम्" पावयित्री यस्य शोचिर्दीप्तिः, तं पावकशोचिषम्। किञ्च 'ज्येष्ठः' श्रेष्ठः, 'यः' प्रधानो 'दमेषु' यज्ञगृहेषु 'आदीदाय' आदीप्यते, परिचर्य्यमाणोऽग्निहोत्रिभिः। किञ्च 'दीर्घश्रुत्तमः' यः, दीर्घश्रोतव्यः यो दीर्घश्रुत्तमः। त मग्निं स्तौमि॥६ (१४)॥

**कनीनकेव विद्रधे नवे द्रुपदे अर्भके। बभ्रू यामेषु शोभेते॥ कनीनके कन्यके कन्या कमनीया भवति क्वेयं नेतव्येति वा (कमनेनानीयत इति वा †) कनतेर्वा स्यात्कान्तिकर्मणः कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति शाकपूणिर्विद्रधयो‡र्दारुपाद्दोदारु दृणातेर्वा द्रूणातेर्वा तस्मादेव द्रु नवे नवजाते अर्भके अवृद्धे ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते बभ्रो§ रश्वयोः॥ संस्तव इदश्च मे दादिदश्च मेऽदादि-**

---

* "शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा। दीदाय दीर्घश्रुत्तमः॥"—इति ऋ० सं० ६, ७, ११, १।

† ङ-च-पुस्तकयोरय मधिकः पाठः।

‡ "वृंहयो"—इति क, ख, ग; सायणसम्मतश्च पाठः

§ "बभ्रवो" ङ।

|| "रश्मयोः" च।

53

त्यृषिः प्रसङ्ख्यायाह। सुवास्त्वा अधि तुग्वनि। सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति। कुविन्नंसन्ते मरुतः पुनर्नः। पुनर्नो नमन्ते * मरुतो नसत इत्युपरिष्टाद् व्याख्यास्यामः। ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम्। ये ते मदा आहननवन्तो वञ्चनवन्त †स्तैरिन्द्रं चोदय दानाय मघम्॥ ७(१५)॥

"विद्रधे(१८), द्रुपदे(१९)"—इत्येते‡ पदे एकनिगमे। द्वे अप्यनवगते; पक्षेण चानेकार्थे। 'विद्रधे' विद्धे, 'द्रुपदे' द्रुममये पदे इत्यवगमः। दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते। कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते। द्वयोरपि पदयोरेक एव निगमः,—"कुनीनुकेव विद्रधे०—०शोभेते"—इति §। वामदेवस्यार्षम्। "कन्या कमनीया भवति" सर्व एव हि तां प्रार्थयन्त एव। अथ वा "क्वेयं नेतव्येति वा" दानायेत्येवं तां प्रति पिता चिन्तयतीति कन्या। "कमनेनानीयत इति वा"। "कनतेर्वा स्यात् कान्तिकर्म्मणः"; "कनति(१०), कानिषत्(१८)"—इति कान्तिकर्म्मसु पठितम्॥। 'इव'-इति उपमायाम्। 'विद्रधे', 'नवे', 'द्रुपदे',

* 'नवन्ते' क, ख, ग,—'नमन्ते' ङ।
† "वञ्चनवन्त" चातिरिक्तेषु सर्वत्र।
‡ १भा० २९ पृ० १७ पं०, २९४ पृ० १ पं०।
§ ऋ० सं० ३. ६, ३०, ७।
|| १भा० ९ख० ६ख० (१९९ पृ०)।

'अर्भके'—इत्येतानि चत्वारि पदानि "कन्ययोरधिष्ठानप्रवचनानि", "सप्तम्या एकवचनानीति" एवं "शाकपूणिः" आचार्य्यो मन्यते। एकस्मिन् दारुमये पादपीठे स्मिन् समधिरूढ़ेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढ़े 'शोभेते', यथैवं 'बभ्रू' बभ्रुवर्णे अश्वे 'यामेषु' आजिस्थानेषु यमनस्थानेषु; कन्यके, शालभञ्जिके * वा। तदेतैश्चतुर्भिः पादैरुच्यत इति शाकपूणिराचार्य्यो मन्यते। यास्कस्तु "विद्रुयोः" विकुषिताधोभागयोः "दारुपाद्वोः" अधिरूढ़योः कन्ययोरभिधानपदान्यभिधायकान्येतानि द्विवचनानीति मन्यते। ताभ्यां खश्विन्योः खुराकारत्वेन सारूप्य मस्तीत्येव मुपादानम्। दारुपाद्वोरित्येतस्मिन् व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तो दारुशब्दो निरुच्यते;—"दारु दृणातेर्वा" विदारणार्थस्य (क्र्या०प०)। "द्रूणाते र्वा" हिंसार्थस्यो। तस्मादेव धातुद्वयादन्यतरस्य "द्रु"—इत्येतदभिधानं भवति। द्रुपदे इत्येतदपेक्ष्य "तस्मादेव द्रु"—इत्येतदुक्तम्; द्रुम इत्यर्थः। "नवे नवजाते"। "अर्भके अवृद्धे" अल्पके ‡ इत्यर्थः। "ते" कन्यके एवम्प्रकारेषु "तदधिष्ठानेषु" तेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढ़े "शोभेते" यथा "एवं" "बभ्रू" बभ्रूवर्णो अश्वे "यामेषु" आजिस्थानेषु यमनस्थानेषु वा बन्धनस्थानेषु मन्दुराख्येषु §, वर्त्तमाने शोभेते। ते एव मेत्र "बभ्रोरश्वयोः संस्तवः"॥

---

* चित्रकृते काष्ठपुत्तलिके इत्यर्थः।

† १भा० ६८१ पृ० २ख० १९ ऋ० (२१) = ६८४ पृ० (१२)।

‡ १भा० ६९९ पृ० ५ख० ६ऋ० (९)।

§ "वाजिशाला तु मन्दुरा"—इत्यमरः। २, ९, ७।

"तुम्वनि(२०)"—इति *। एतदनवगतम्। "तूर्णं मेतदायन्ति"—इति शब्दसमाधिः। "तीर्थम्" अभिधेयम्। "सुवास्त्वा अधि तुग्वनि"—इति † निगमः। अस्य ऋक्पादस्य ऋक्शेषापेक्षो निर्णयः। सर्व्वस्या अपि च तस्या ऋचो यस्या मयं पादः, तस्या या आद्यान्या आधस्त्या ऋक्, तदपेक्षो निर्णयो यतः, अतस्तस्या ऋचः आधस्त्यायाः सङ्क्रियार्थ माह भाष्यकारः,—"इदञ्च मेऽदादिदञ्च मेऽदादित्यृषिः प्रसङ्ख्यायाह"—इति। इदञ्च द्रव्यजातं, मम दत्तवानसौ राजेत्येवं, 'प्रसङ्ख्याय' परिसङ्ख्यानं कृत्वा, ऋषिराह ‡ उक्तवानित्यर्थः। कतमा पुनरसौ आधस्त्या ऋक्, यथाय मर्थः सङ्क्रियते? इति उच्यते;—"अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्। मंहिष्ठो अर्यः सत्पतिः" §। सोभरेः काण्वस्येय मार्षम्, परा ‖ च; दानप्रशंसा ¶। 'यः' 'अदात्', 'मे' मम, 'पौरुकुत्स्यः' पुरुकुत्सस्य पुत्रः 'त्रस-दस्युः' दस्युत्रासनः। किं मदात्? 'पञ्चाशतं वधूनाम्' पञ्चाशतं वोढव्यानां कन्यानाम्। 'मंहिष्ठः' पूज्यतरः। 'अर्यः' ईश्वरः। 'सत्पतिः' च सतां पालयिता च। एवंलक्षणः पौरुकुत्स्यः त्रसदस्युः मम दत्तवान् पञ्चाशतं वधूनाम्। आह किं मेतदेवादात्? नेति। उच्यते;—इदञ्च यदुक्तम्, उत्तरञ्च यद् वक्ष्यते। कतरा पुनरस्या-

---

* १भा० ९९४ पृ० ४पं०।

† ऋ० सं० ६, १, ३५, ७।

‡ कण्ववंशीयः सोभरिर्नाम।

§ ऋ० सं० ६, १, ३५, ६।

‖ सैव परा ऋक्, यस्या द्वितीयः पादः "सुवास्त्वा अधि तुग्वनि"—इति।

¶ "षट्चिंशौ सप्तचिंशौ च त्रसदस्युनाम्नो राज्ञो दानस्तुतिरूपत्वात् तद्देवताके"—इति तत्र ऋग्भाष्ये सायणः।

वृत्तरा ऋक्? इति। उच्यते ;—"उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि। तिसृणां सप्ततीनां श्यावः प्रणेता भुवद् वसुर्दियानां पतिः" *—इति। अप्येतत्,— यदुक्तम्, अपि च यदेतत् वक्ष्यमाण मिति 'उत'—शब्द एव मुभयं सम्भावयति। 'मे' मम 'प्रयियोः' (प्र गम्यते येन, तत् प्रयियुः, धन मश्वादि; तस्य प्रयियोः) धनस्य; सकाशात्। ताभिः कन्याभिः सह 'वयियोः' (ऊयत इति वयियुः वस्त्रादि, तस्य) च सकाशात्। 'तिसृणां सप्ततीनां' गवाम्। 'श्यावः' श्यामवर्णः वृषः, श्यामवर्णानां 'प्रणेता' प्रकर्षेण नेता अग्रतोगामी। 'भुवद्वसुः' भावयिता वसूनाम्। 'प्रशस्तः' पूजितलक्षणः। 'दियानां' दानार्हाणाम्, देया याः तासां पतिः। तास्त्र गा एतत्सङ्ख्यायुक्ताः, एतद्गुणयुक्ताश्च मह्य मदात्। क्व पुनरसा वदात्? 'सुवास्त्वा' सुष्ठु-निवासाया नद्याः 'अधि तुग्वनि' तीर्थेऽधि, एतत् अदात् मह्यम्। "सुवास्तुः नदी †", "तुग्व तीर्थं भवति" "तूर्णं" हि "एतत्" अवगाहनार्थम् "आयन्ति"। अत्र दानसम्बन्धात् सुवास्तुशब्दो नद्य-भिधाने; प्रसिद्धं हि नद्यां दानम्; नदीसम्बन्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक ‡ इत्युपपत्तिः। निगमार्थप्रकाशनायैवं सूक्तगतोऽपि अन्वीक्षितव्य एवार्थ इत्येतत् प्रदर्शित माचार्येण॥

"नंसन्ते(२२)"—इति§। एतदनवगतम्। "नमन्ते,—"इत्यवगमः।

---

* ऋ० सं० ६, १, २५, ७।

† काश्मीरप्रदेशीयोद्यानमनगरतलवाहिनीयम्। इदानीं "सुयत्"—इति प्रसिद्धा।

‡ "निपानागमयोस्तीर्थं ऋषिजुष्टजलेऽपि च—इत्यमरः ३, ३, ८६। ऋक्संहिता-यास्र १. ४६, ८; ११६, ६; १०२, ११. ८, ७१, ७ ९. ९७, ५२ १०, २१, २, ४०, १२; ११४.७ ४, २९ २; ८, ४७, ११. ऋचो द्रष्टव्याः।

§ १भा० २९४ पृ० ८पं०।

"कुविन्नंसन्ते"—इति निगमः; "तां आ रुद्रस्य मीळ्हुषो०—०
"ईमहे तुराणाम्"—इति *। वसिष्ठस्यैव मार्षम्। 'तान्' अहं
'मीळ्हुषः' मरुतः वर्षस्य सेक्तॄन् धनवतः, बलवतः वा 'आ विवासे'
आभिमुख्येन स्थित्वा परिचरामि। किंलक्षणान् पुनः मरुतः आविवासे?
'रुद्रस्य' इन्द्रस्य स्वभूतान्, आप्तान् वा। अथ वा 'मीळ्हुषः' इति
रुद्रविषयं षष्ठ्येकवचनान्तं स्यात्; मीळ्हुषो रुद्रस्य स्वभूतानिति।
कस्मात् पुनस्तानहं परिचरामि? यस्मात् ते मरुतः 'कुविद्' बहु
'नंसन्ते' नमन्ते 'पुनः' वर्षाद्युपकारेण अस्मान् प्रति नमन्ते, प्रह्वी-
भवन्ति। किञ्च; 'यत्सस्वर्त्ता' यच्छरीरगतम् 'एनः' 'जिहीळिरे'
लज्जयन्ति, यच्च 'आविः' प्रकाशम्, तदेवम्प्रकार मुभयलक्षण मपि
एनोऽस्मान् 'जिहीळिरे' लज्जयन्ति। तदेषां मरुतां 'तुराणां'
त्वरमाणानां प्रसादेन उभयलक्षण मपि 'अवयजेमहि' निर्णुदेमहि;—
इत्येतद् 'ईमहे' याचामहे; अनेन परिचारेण आराध्यैतान् मरुत
इति। "नक्षत इत्येतदुपरिष्टात्" द्वादशाध्याये † "व्याख्यास्यामः";
—"अभि प्रवन्त समनेव योषाः" (ऋ० स० ३, ८, ११, ३)—इति
व्याख्याने, "नक्षतिराप्नोतिकर्मा वा नमतिकर्मा वा" ‡—इति॥

"आहनसः(११)"—इति §। एतदनवगतम्। "आहननवन्तः"—
इत्यागमः। "ये ते मदा आहनसः"—इति निगमः; परिसोम०—०

* "तां आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः। यत् सस्वर्त्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम्" ॥ ऋ० सं० ५, ४, १८, ५।

† पञ्चाध्यायिनिघण्टुसहिते भाष्यसप्तमाध्याये इति यावत्।

‡ दै० का० ७ख० ४पा० ४ख०।

§ १भा० २९४ पृ० १९ पं०।

मघम्'' *। पावमानी सौमी। कवेर्भार्गवस्येय मार्षम्। जगती।
हे भगवन्! 'सोम!' 'परिप्रधन्व' परिप्रक्षर, एतस्मात् दशापवित्रात्।
'स्वस्तये' स्वस्त्ययनाय अस्माकम्। 'नृभिः' एतैः ऋत्विग्भिः, 'पुनानः'
पूयमानः। किञ्च; 'अभि वासय' अभिप्रच्छादय, अभिभावय।
'आशिरम्' तृतीयसवने। किञ्च; 'ये ते मदा आहनसः' ये ते मदाः
तव आहननवन्तः, "वधनवन्तः", सम्मोहयितारः; 'विहायसः'
महान्तः, तैः 'इन्द्रं' 'चोदय' प्रेरय, 'दातवे' "दानाय", 'मघं'
धनम्। यथास्मार्क तैर्मदैरनभिहतचेताः † सन् दद्यात् मघं धन
मित्यर्थः॥ ७ (१५)॥

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत-
प्रियाणि। अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पु-
नरेयुषीणाम्॥ उपादर्शि शुन्ध्युवः शुध्युरादित्यो
भवति शोधनात्तस्यैव वक्षो भासाध्यूढम् ‡ इद § मपी-
तरदक्ष एतस्मादेवाध्यूढं ‖ काये शकुनिरपि शुन्ध्यु-
रुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुन्ध्यव ¶
उच्यन्ते शोधनादेव नोधा ऋषिर्भवति नवनं दधाति स

---

* "परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम्। ये ते॰—॰ मघम्॥"—इति ऋ॰ सं॰ ७, १, २२, ५।

† "तैर्मदैरभिहतचेताः" क।

‡ "भासोऽध्यूढम्" च।

§ "मिद" च।

‖ "देवाध्यूढं" च।

¶ "शुन्ध्युव" च।

यथा स्तुत्या कामानाविष्कुरुत एव मुषा रूपाण्याविष्कुरुतेऽश्नसदश्नान्नं भवत्यश्नसादिनीति वाश्नसानिनीति * वा। सस्रतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम्। (स्वपतो बोधयन्तो † ) शाश्वतिकतमागात्पुनरेयुषीणाम् ‡। ते वाशीमन्त इष्मिणः। ईषणिन इति वैषणिन इति वार्षणिन इति वा वाशीति वाङ्नाम वाश्यत इति सत्याः। शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्। अभिवहनस्तुति मभिषवण § प्रवादां स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते परितक्म्येत्यु ‖ परिष्टाद् व्याख्यास्यामः॥ ८ (१६)॥

॥ इति चतुर्थाध्यायस्य द्वितीयः पादः॥ ४,२.

"अश्नसत्(२४)"—इति ¶। एतदनवगतम्। "अश्नसादिनीति वा अन्नसानिनीति वा" ग्रन्थसमाधौ। "उपो अदर्शि"-इति ** निगमः। कक्षीवत आर्षम्। औषसी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते; 'उपो अदर्शि' उपश्लिष्टा दृश्यत इय मुषाः। कस्य? 'शुन्ध्युवः' शोधयितु रादित्यस्य; आदित्यो हि यदप्यशुचिर्भवति, तदपि रश्मिभिः

---

* "वाश्नसानिनीति" ङ, च।

† ख-च-पुस्तकयोरधिक एष पाठः।

‡ "पुनरागामिनीनाम्" ङ, च।

§ "मभिषवस" क, ङ।

‖ "परितक्म इत्यु" ङ, च।

¶ १भा० २९ पृ० १पं०।

** ऋ० सं० १, १, ७ ४।

स्पृष्ट्वा शुचीकरोति। "सूर्यः पवित्र मुच्यते"—इति वक्ष्यति *। तमांसि वा शोधयतीति शुन्ध्युः, तस्य शुन्ध्युवः। कथं पुनरुपश्लिष्टा दृश्यते? 'वक्षो न' वक्ष इव; यथा तस्य स्वभासः स्वप्रकाशजालं वक्षोभूत मेतस्मिन् मण्डलेऽध्यूढम्, एवमिय मुषा एतस्मिन् मण्डले उपश्लिष्टा दृश्यते, सन्निकर्षात्। प्रासङ्गिक मुच्यते शब्दसामान्यात्,—"इद मपीतरत्" "वक्षः" पुरुषवक्षः, पशुवक्षो वा अङ्गम् "एतस्मादेव" वहेर्धातोः (भ्वा०प०), इदम् "अध्यूढम्" अधिप्रवेशित मेव "काये" शरीरे भवति। "शकुनिरपि" य एष मद्गुर्नाम †, अय मपि "शुन्ध्युरुच्यते", "शोधनादेव"; यो हि "उदकचरो भवति" नित्यशुद्ध एवेति शुन्ध्युः। "आपोऽपि शुन्ध्यव ‡ उच्यन्ते" ता अपि हि शोधयन्ति। "एवं" तावदियम् "उषाः" आदित्यस्य वक्ष इवोपश्लिष्टा दृश्यते। किञ्च इय मेवोषा नोधा इवाविष्कृतप्रियाणि "नोधा ऋषिर्भवति §" स हि "नवनं" स्तोत्रं देवताः प्रति "दधाति"। "स यथा" स्वमुखोद्गीर्णया "स्तुत्या" प्रियाण्यात्मनः "कामान्" स्वानि कामाख्यानि "आविष्कुरुते" आविष्कृणोति, प्रकाशयति देवताः प्रति। "एवम्" इयम् "उषा" स्वात्मन एवोद्गीर्णेन प्रकाशेन "रूपाणि" जनानाम् "आविष्कुरुते" प्रकाशीकुरुते। किञ्च; इय मेवोषाः 'अद्मसन्न ससतो बोधयन्ती' "अद्म अन्नम्" तत् प्रतिकर्त्तव्यताया मीदति, तद्वा सनोति, सम्भजत इति

---

* इत उत्तरस्मिन्नेवाध्याये (पञ्चमे) २पा० १ख०।

† 'मद्गुः पानीयकाकिका"—इत्यमरः १, ५, ३४।

‡ "शुन्ध्यवः"—इत्येव पाठः क-ख-ग-मूलपुस्तकेषु, टीकापुस्तकेषु च सर्वेषु।

§ नोधाः, गौतमः; ऋ० सं० १. ५८—६४; ८ ८८; ९ ९३ सू०।

"अप्रसत्" गृहाधिकारे नियुक्ता अन्नसाधिका स्त्री। सा यथा प्रातरेव क्षीराद्युपादानार्थं 'ससतः' "स्वपतः" जनानाम्, दोहकादीन "बोधयन्ती" अन्नं साधयिष्यन्ती, एव मुषा अपि जनान् बोधयन्ती, तत्काले हि ते इतिकर्त्तव्यतार्थे जनाः प्रतिबुध्यन्ते, तेनैतयैव बोधिता भवन्ति। आह;— कदा पुनरेतद्भवति? इति। उच्यते;— यदा 'शश्वत्तमागात्' "शाश्वतिकतमा" नित्यतमा "आगात्" आगच्छति, तदैव जनान् बोधयति, एव मुषा रूपाण्याविष्कुरुते। एवञ्च वच इवोषा आदित्यस्य दृश्यते। आह;— का वा सा शश्वत्तमा इय मुषाः? इति। उच्यते;—'पुनरेयुषीणाम्' "पुनरागामिनीनाम्" —इत्यर्थः। या एताः काश्चिद्गत्वा पुनरागच्छन्ति, ताः पुनरेयुष्यो गावः, अन्या वा*, तासां पुनरेयुषीणां इति निर्द्धारयति। एषैव 'शश्वत्तमा' शाश्वतिकतमा। एव मेतस्मिन् मन्त्रे, सा यथा अप्रसदित्यन्नसाधिका स्त्री उच्यते, सा हि तत्काले जनान् दोहकादीन् बोधयति, उषा अपि च तत्काल एवागच्छतीति, एव मुपमान मुपपद्यत इत्युपपत्तिः। अन्ये† तु मक्षिका मद्मसदं मन्यन्ते; सापि अन्ने सीदति, सनोति वान्नं तत्काले च प्रतिबुध्यमाना अन्यान् बोधयतीति॥

"इरिमाः(२५)"—इति ‡। एतदनवगतम्। "ईषणिन इति वा, एषणिन इति वा, आर्षणिन इति वा" शब्दसमाधयः। "श्रियसे कं भानुभिः०—० मारुतस्य धाम्नः"—इति § निगमः। राजगणस्य

* "वारयोषिता वा" म, सायणीयञ्च।

† वय मिति वक्तव्ये एष परोक्षनिर्देशो मध्यमैकोप्रयक्तः।

‡ १भा० ३९५ पृ० ९ पं०।

§ "श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः"॥ ऋ०सं०१,६,१२,१।

गोतमस्येय मार्षम्। जगती। मारुतस्य प्रैयङ्गवस्य चरोरियं याज्या; तत्र सूत्रम् "प्रियवती याज्यानुवाक्ये भवतः"—इति। 'श्रियसे कम्' श्रियोऽर्थाय यजमानाय आत्मने वा; क मित्यनर्थक मेव†, कामये इति वा अस्यार्थः। 'भानुभिः' दीप्तिभिः सूर्यरश्मिभिः, येऽन्तरिक्षे मरुतः 'सम्मिमिक्षिरे' सङ्गच्छन्ते, 'ते' एव 'रश्मिभिः' सर्वलोक-नियन्तृभिः 'सम्मिमिक्षिरे'—इत्येतदेवानुवर्त्तते। त एव 'ऋक्वभिः' रथहर्य्यभिः सम्मिमिक्षिरे। 'सुखादयः' सुखदातारः जनानाम्। शोभ-नानां वा हविषां खादितारः, अत्तारः, 'सुखादयः'। 'ते' एव 'वाशीमन्तः' वाग्मिनः। 'इष्मिणः' "ईषणिनः" उपगमनवन्तः, "एषणिनो वा" इच्छावन्तः, "आर्षणिनो वा" आभिमुख्येन सर्वा-र्थानां द्रष्टारः; 'अभीरवो विद्रे' विदारयितव्ये मनौ प्राप्ते विगत-भयाः; अथ वा 'विद्रे' वेद्मि, जाने। य एवंलक्षणा मरुतः, तेषां मरुतां यत् स्थानम् अन्तरिक्षलोकः, तस्य 'प्रियस्य' इष्टस्य 'मारुतस्य' मरुतां स्वभूतस्य 'धाम्नः' स्थानस्य प्राप्तये; तानेव मरुतः सौमी-त्यध्याहारः। एव मेतस्मिन् मन्त्रे 'वाशीमन्त इष्मिणः'—इत्येतस्मा-देकवाक्यसम्बन्धाद् 'इष्मिणः'—इत्येतद् मरुद्विशेषणम्। "वाशीति वाङ्नाम"। "वाशी[११], वाणी[१२]"—इति ‡ पठितं वाङ्नामसु। वाश्यत इति कारकावधारणम्॥

"वाहः[२१]"—इति ‡। एतदनवगतम्। पक्षेण चानेकार्थम्।

---

* पुरस्तात् ७९ पृ० ११ पं० =७४ पृ० १९ पं०।

† १भा० (१अ० ११ ख०) ७४ पृ०=७९ पृ० ९पं०, १५ पं०।

‡ १भा० ३९५ पृ० ११ पं०।

"अंसावाध्वर्यो०—०मिन्द्रा जुष्टम्"—इति* निगमः। विश्वामित्रस्येय मार्षम्। त्रिष्टुप्। होता ब्रवीति;— हे 'अध्वर्यो!' एहि 'प्रति ष्टणीहि' 'अंसाव' आवा मुभावपि; न ह्यप्रतिगीर्यमाणं शस्यते, नाप्यशस्यमानं प्रतिगीर्यते †; एव मितरेतरोपकारकत्व मभिप्रेत्योक्तं द्विवचनम्,—'अंसाव' इति। एव मितरेतरगुणसम्पन्न मेतद् 'वाहः' स्तोत्रं 'कृणवाव' आवाम् ‡। सोम एव हि देवानां वोढा भवति §। "वाहिष्ठो वां हवानां स्तोमः। (ऋ० सं० ६, २, २९, १)"—इति, "वोढृतमो ह्वानानां स्तोमः"—इति हि वक्ष्यति ‖। एव मिय मभिवहनस्तुतिः। एव मेतच्छस्त्र माभिमुख्यगामि 'इदम्', 'इन्द्राय' इन्द्रार्थम्, 'जुष्टम्' प्रियम्, तस्य यथा स्यात् तथा कुर्वः। अन्ये त्वेनाम् "अधिषवणप्रवादां" सोमाभिषवणप्रवादिनीं स्तुतिं मन्यन्ते; वाहःशब्दो हि उदकवाहाभिधानसारूप्यात् तत्र युक्तरूपतर इति कृत्वा यदा पुनरेवं, तदेव मर्थो योज्यः;—'इन्द्राय' 'इदं' 'वाहः' सोमोदकपूर्णं मधिषवणफलकाख्यं वाहः 'जुष्टं' प्रियं यथा स्यात् तथा कुर्वः। तद्धि सु'शस्तं' सुप्रतिगीर्णञ्च इन्द्रस्य प्रीतिजनकं भवति। एतदेव कर्त्तव्य मावाभ्यां यतः, अतो ब्रवीमि;—'एदं बर्हिः यज-

---

* 'अंसावाध्वर्यो प्रति मे ष्टणीहीन्द्राय वाहः कृणवाव जुष्टम्। एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थ मिन्द्राय शस्तम्।" ऋ० सं० २, २, १९, २।

† होतृवचनं शंसनम्, अध्वर्युवचनन्तु प्रतिगरत्व मुच्यते। यथा च "होतो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण"—इति ऐ० ब्रा० २, ९, १।

‡ "यद्वाव स तत्र यथा भाजनं देवता अमु मावहामु मावहेत्यावाहयति, तदेव होतुर्होतृत्वं, होता भवति, होतेत्येन माचक्षते"—इति ऐ० ब्रा० १ १, १।

§ "येनैवाध्वर्युर्यजुषा प्रयच्छति, तेन होता प्रतिगृह्णाति"- इति ऐ० ब्रा० १, ४, १।

‖ इत उत्तरस्मिन्नेवाध्याये (पञ्चमे) १पा० १ख०।

मानस्य सीद' एतद् बर्हिः, यदेतदग्रतस्तीर्णं मयेण होतारं बर्हिः 'सीद' "स प्रतिगरायोपविशति"—इति सूत्रम्*, 'यजमानस्य' अभिप्रेतकामावाप्तये आसीद। मा अवमंस्थास्थिरेणैतच्छंसत इति, उपविष्टश्चेत् त्वं ममायतः। 'अथ' अनन्तर मेव 'भद्र' भवति। 'उक्थं' शस्त्र मेतत्, इन्द्रार्थं शस्तम्; नात्र मम वाग्मृषेत्यभिप्रायः। एव मिथ मभिवदनस्तुतिः, अथवा अधिषवणप्रवादा स्तुतिः; उभयथापि तु इयम् "ऐन्द्री त्वेव शस्यते" इद मेवैक मभिधान मत्र व्युत्पाद्यत इत्य-भिप्रायः॥

"परितक्म्या(१०)"—"इति"†। "एत दुपरिष्टाद् व्याख्यास्यामः‡" षोड़शाध्याये §; तत्र हि एतत् "कि मिच्छन्ती सरमा प्रेद मानट (ऋ० सं० ८, ६, ५, १)"—इत्येतस्मिन् मन्त्रे॥ प्रसक्त मायास्यतीति लाघवार्थं मुत्कृष्ट मिति॥ ८ (१९)॥

॥ इति निरुक्तवृत्तौ नवमाध्यायस्य (चतुर्थाध्यायस्य) द्वितीयः पादः॥ ४, २.

---

सुविते सु इते सूते सुगते प्रजाया मिति वा। सुवि-ते मा धा इत्युपि निगमो भवति। दयतिरनेककर्मा।

---

* "ओथामोदैवेत्यादिको होतुरध्वर्युजनकः प्रतिगरः" आ० ७, ११।
† १भा० २९५ पृ० १० पं०।
‡ "परितक्म्या रात्रिः"—इत्यादिना।
§ पञ्चाध्यायिनिघण्टुसहिते भाष्येकादशाध्याये इति यावत्।
॥ दै० का० ११ अ० ३पा० ५ख०।

नवेन पूर्वं दयमानाः स्यामेत्युपदयाकर्मा। य एक इद्विदयते वस्विति दानकर्मा वा विभागकर्मा वा। दुर्वर्त्तुर्भीमो दयते वनानीति दहतिकर्मा। दुर्वर्त्तुर्दुर्वारः विदहसुहंयमानो वि शत्रूनिति हिंसाकर्मा। इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबत मश्विना तान्। अहं हि वां मतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्। दयमान इति। नू चिदिति निपातः पुराणनवयोर्नू चेति च। अद्या चिन्नू चित्तदपो नदीनाम्। अद्य च पुरा च तदेव कर्म नदीनाम्। नू च पुरा च सदनं रयीणाम्। अद्य च पुरा च सदनं रयीणां रयिरिति धननाम रातेर्दानकर्मणः ॥ १ (१७) ॥

"सुविते(१८)"—इति *। एतदनवगतम्। अनेकार्थञ्च। 'सु, इते"-इति, "सूते"—इति शब्दसमाधी। अत्र यदा "सु इते" इति विपरिणामः, तदा "सुगते" इत्यर्थः। यदा "सूते" इति, तदा "प्रजायाम्"; सूते देवदत्ता पुत्र मिति प्रजायत इत्यर्थः। एवं 'सुविते'-इत्यस्य "सु इते, सूते" शब्दसमाधी। तयोरेतद् यथा-सङ्ख्येनार्थवचनम्, "सुगते, प्रजाया मिति"। "सुविते मा धाः"-इत्यपि निगमः†। "अनाधृष्ट मस्य नाधृष्यं देवाना मोजो अभि

* १भा० २९९ पृ० ३पं०।

† तैत्तिरीये, काण्व-शाखायाञ्च द्रष्टव्यः। माध्यन्दिन्यां तु "स्विते मा धाः"—इति श्रूयते, अन्याश्च सन्ति तत्र बहवः पाठभेदाः (५, ५)।

शस्तिपाः। अनभिशस्त्यञ्जसा सत्य मुपगेषं सुविते मा धाः" *—इति।
अनेन तानूनप्त्रं संस्पृश्यते †। हे तानूनप्त्र! 'अनाधृष्ट मसि' अना-
धर्षित मसि; त्वयि स्पृष्टे समयोपयन्त्रिता ह्येते नान्योऽन्यस्मिन् ‡ द्रोह
मुपयास्यन्त्यृत्विजः। कुतः पुनरेतत् सामर्थ्यं तव? इति। इतः;—
यस्माद् 'अनाधृष्यं देवाना मोजः' अनाधर्षणीयं त्वम्। ओजो बल
मित्यर्थः। किञ्च; 'अभिशस्तिपाः' अभिशंसनात् पासि त्वम्।
'अनभिशस्ति' नाभिशंसनीयं केनचित्, अनवद्य मित्यर्थः। 'अनु
मे' 'इदं व्रतं व्रतपतिः' 'मन्यताम्' अनुमन्यताम् 'इदं व्रतं' कर्म,
'व्रतपतिः' अग्निः। 'मे' मयोपेयमानाम् एनां 'दीक्षाम्' 'अनुमन्यताम्'
'दीक्षापतिः' सोमः। किञ्च; 'अञ्जसा' अनन्तर्हितम्, अहम् 'सत्यम्'
'उपगेषम्' उपगतवान्। योऽह मेतदस्पृशम्, स त्वं हे तानूनप्त्र!
एव मुपगतवन्तं मां 'सुविते' सुगते स्थाने, यत्र गतानां शोभनं
गतं भवति, तत्र धेहि; अथवा प्रजायां जनयितव्यायां धेहि, यथा
बहुपत्या स्याम तथा कुर्वित्यर्थः § ॥

"दयति(१९)"—इति ‖। एष शब्दः "अनेककर्मा" अनेकार्थः;

---

* काण्वशाखीयपाठ एषः।

† तदेतद्विधायकं ब्राह्मणम्;—"तनूनपातं यजति। प्राणो वै तनूनपात्, स हि तन्वः पाति, प्राणमेव तत् प्रीणाति—प्राणं यजमाने दधाति"॥—इति ऐ० ब्रा० २, १, ४। "ते वरुणस्य राज्ञो गृहे तनूः सन्न्यदधत, ते यद् वरुणस्य राज्ञो गृहे तनूः सन्न्यदधत, तत् तानूनप्त्र मभवत् तत् तानूनप्त्रस्य तानूनप्त्रत्वम्"—इति च ऐ० ब्रा० १, ४, ७।

‡ "नान्योऽन्यस्मै" क, ख।

§ तैत्तिरीयपाठानुसारेणैवेदं इतिहृद्-व्याख्यानं बोध्यम्। स चैवम् —"अना-धृष्ट मस्यानाधृष्यं देवाना मोजो अभिशस्तिपाः। अनभिशस्तेन्य मनु मे व्रतं व्रत-पतिर्मन्यता मनु मे दीक्षां दीक्षापतिरञ्जसा सत्य मुपगेषᳪ सुविते मा धाः॥"—इति।

‖ १भा० ३९९ पृ० ७पं०।

मत्वनेकविकल्पप्रकृतिः,—यथा सुविते-शब्दस्य अन्येनान्येन धातुना विगृह्यानेकार्थत्वं मुक्तम्;—इणा विगृह्य "सु इते"—इति गत्यर्थत्वम्, सूतिना विगृह्य "सूते"—इति च प्रजार्थत्वम्; नैव मिह। किन्तर्हि? एकप्रकृतेरेवायं शब्दोऽनेकार्थो भवतीत्यस्य विशेषस्योपद्योतनार्थ मुदाहरति। एव मुच्यमानेऽप्यनेकार्थत्वे दयतिरनेककर्मैवेत्येव मुक्तम्। अन्ये तु ब्रुवते;—यथा "सुविते"-शब्दोऽनेकार्थोऽनवगतसंस्कारश्च, नैव मयम्। किन्तर्हि? अनेकार्थ एवाय मिति॥

एव मनेकार्थत्वं प्रतिज्ञाय उदाहरणेनैवोपपादयति;—"नवेन पूर्वं दयमानाः स्याम"—"इति" एतस्मिन् मन्त्रे दयतीत्येष शब्दः "उपदयाकर्मा"। उपदयेति रक्षण मुच्यते। 'नवेन' धान्येन 'पूर्वं' पुराणं 'दयमानाः' रक्षन्तः 'स्याम', पुराणेन च नवम्; दृष्टं हि नवेन पुराणस्य च रक्षणं, पुराणेन च नवस्य; प्रसिद्धं च लोके। तस्मादिहाय मुपपद्यते उपदयाकर्मा। चतुर्दशेऽध्याये इत्यस्य शेषः*॥

"य एक इद् विदयते वसु"—"इति" † एतस्मिन् मन्त्रे "दानकर्मा वा, विभागकर्मा वा"। "य एक इद्॰—॰इन्द्रो अङ्ग" ‡। राहूगणस्य गोतमस्यार्षम्। ऐन्द्री। उष्णिक्। 'यः' इन्द्रः 'एकः इद्' एक एव स्वतन्त्रः 'वि' विविधं 'वसु' धनं 'दयते' ददाति। कस्मै? 'मर्त्ताय' मनुष्याय। किंलक्षणाय? 'दाशुषे' दत्तवते हवींषि। अथवा विभागकर्मा। 'दाशुषे' 'वसु' 'विदयते' विभजते

---

* दै॰ का॰ ९, ४, ९।

† ऋ॰ सं॰ १, ६. ९, २।

‡ "य एक इद् विदयते वसु मर्ताय दाशुषे। ईशानो अप्रतिष्कुत इन्द्रो अङ्ग"।

इत्यर्थः। किंलक्षणः पुनरिन्द्रो ददाति, विभजते वा? इति। उच्यते;—'ईशानः' ईश्वरः, 'अप्रतिष्कुतः' अप्रतिस्खलितः सङ्ग्रामेषु। 'इन्द्रः', 'अङ्ग' क्षिप्रं धनं ददाति, विभजते वा, 'दाशुषे' यजमानाय; त महं स्तौमि; सोऽस्माक मेतत् करोत्वित्यभिप्रायः। ईशानः, इन्द्रः, अन्यत्र दानविभागाभ्यां दाशुषे यजमानाय वस्वेकवाक्ये श्रूयमाणं किं मन्यत् कुर्यात्? तस्माद् वाक्यसामर्थ्यादत्र "दानकर्मा वा विभागकर्मा वा"—इत्युपपद्यते॥

"दुर्वर्तुर्भीमो दयते वनानि"—"इति"* एतस्मिन् मन्त्रे "दहतिकर्मा"। निगमप्रसक्तं निर्ब्रवीति;—"दुर्वर्तुः दुर्वारः" दुर्वारणीय इत्यर्थः। "अध जिह्वा०—०दयते वनानि"†। आग्नेयी। भरद्वाजस्यार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। उपज्वलितस्याग्नेः 'अध' अथ, अनन्तर मेव तस्य 'जिह्वा' ज्वाला दारुषु 'पापतीति' पुनः पुनः पतति, 'प्रवृष्णः' प्रवर्षितुः इन्द्रस्य 'गोषुयुधः' गवार्थं वादे पणिभिः सह असुरैर्युध्यते; अथ वा 'गोषु' अप्सु, मेघेन सह युध्यत इत्यर्थः। 'न'—इत्युपमा; इन्द्रस्य गोषु युध्यत इव। 'अशनिः' 'सृजाना' तेनैव सृज्यमानो यथा पतति अशनिर्वज्रः, तथा अग्नेर्ज्वाला दारुषु पापतीति। किञ्च; 'शूरस्येव प्रसितिः क्षातिरग्नेः'। यथा कस्य चिद् 'शूरस्य' विक्रान्तस्य वा अप्रतिहतगतेः 'प्रसितिः' प्रसहनं सङ्ग्रामानुप्रवेशमार्गः छिन्नभिन्नदुर्गेः

---

* ऋ० सं० ४, ६, ८, ५।

† "अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना। शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि॥"

शत्रुभिः प्रकीर्णः स्यात्, एव मस्य 'अग्नेः' 'व्रातिः' दहनमार्गः, ईषत्-शुष्कार्द्रदग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभिराकीर्यते। कदा पुनरेतद् भवति? 'दुर्वर्त्तुः' दुर्वारः, दावाग्नीभूतः, 'भीमः' सर्वप्राणिभयङ्करो यदायमग्निः 'दयते' दहति। किम्? 'वनानि'। एव मय माग्नेये मन्त्रे वनशब्दसन्निकर्षे श्रूयमाणे दयतिशब्दो दहनादन्यत् किमभिदध्यात्? तस्मात् सामर्थ्यादिहायं "दहनकर्मा"—इत्युपपत्तिः॥

"विदद्वसुर्दयमानो विशत्रून्"—"इति"* एतस्मिन् मन्त्रे "हिंसाकर्मा"। "इन्द्रः पूर्भिं०—०आपृणद्रोदसी उभे"†। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। उक्तिदलभिदोर्निष्केवल्ये निविद्धानीयस्य सूक्तस्य प्रथमैवेयम्। 'इन्द्रः', 'पूर्भित्' असुरपुरां मेघानां वा भेत्ता; अद्भिः पूर्णा अपो वा पालयन्तीति मेघाः, पुरः; "पॄ पालनपूरणयोः (क्र्या०प०)"—इत्येतस्य। 'आतिरत्' आभिगत्। 'दासं' दासयितव्यं मेघम्। कैः सहायैः सह? 'अर्कैः' स्तुत्यैः, देवैर्माध्यमिकैर्वा‡। किंलक्षणः पुनरसाविन्द्रः, य आतिरत्? 'विदद्वसुः' प्राप्तधनः। किं कुर्वन् आतिरत् दासम्? 'विदयमानः' विविधं हिंसन् 'शत्रून्' ये मेघवधप्रतिबन्धिनः। आह;— किं विदद्वसुत्वेनैवैकेन गुणेन युक्तो य इन्द्रः, स एतदकरोत्? नेत्युच्यते;—'ब्रह्मजूतः' च ब्रह्मणा स्तुतिलक्षणेन 'जूतः' प्राप्तः, प्रीतो वा; आत्मीयतन्वा शरीरेण 'वावृधानः' वर्द्धमानः 'आपृणत्' आपूरयति। 'रोदसी' द्यावापृथिव्यौ उभे

---

* ऋ० सं० २, १, १५, १।

† "इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो विशत्रून्।
ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे॥"

‡ परस्ताद् वक्ष्यति,—"अर्को देवो भवति"—इत्यादि ५, १, ४।

अपि। 'भूरिदावः' बहुदानस्य इन्द्रो दाव मातिरत्। एव मत्र "विद्वद्वसुर्दयमानो विशत्रून्"—इति मन्त्रसन्निधौ दयतेः किं मन्त्रत् सामर्थ्य मुपपद्येतान्यत्र वधात्?

"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबत मश्विना तान्। अहं हि वां भूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्"—इति। "दयमान इति"। अत्र दयतिर्गत्यर्थः। दय-मानोऽड्डीयमानः काकोऽन्तरिक्षेणाधस्तात् मां सुप्तं दोषाया मबोध-यत्*। ऋग्योऽत्र शेषः॥

"नू चित्(१०)"—इति†। एषः "निपातः" अनेकार्थत्वेनेह समा-म्नातः। न हि निपातानां प्रकृतिप्रत्ययादिसंस्कारोऽस्ति, यस्मानव-गतं स्यात्। स च पुनरयं "पुराणनवयोः" अर्थयोर्वर्त्तते। प्रकरणोप-पदवशात् पुराणतां कस्य चिदर्थस्यावद्योतयति, नवतां च कस्य चित्॥

"नू च(११)"—"इति च"‡। अय मपि पुराणनवयोरर्थयो-र्वर्त्तते। अयन्तु नू चिदित्येतस्यैवार्थसामान्यप्रसङ्गादसमाम्नात एवो-दाहृतः§॥

नू चिदित्यस्योदाहरणम्;—"अधा चिन्नु०—०रजांसि"||। भर-द्वाजस्येय मार्षम्। त्रिष्टुप्। उक्थपर्यायेष्वच्छावाकस्य शस्त्रे माध्यन्दिने

---

* "पुरा शकुनिवादादनुब्रूयान्निष्पतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयः"—इति ऐ० ब्रा० ७, १, ५।

† १भा० ३९९ पृ० १५ पं०।

‡ १भा० ३९९ पृ० १५ पं०।

§ वयन्तु सर्वपुस्तकेषु समाम्नात एव पश्यामः। १भा० ३८८ पृ० १० पं० (११)।

|| "अधा चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र। नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि॥"—इति ऋ० सं० ४, ७, १, १।

सवने विनियुक्ता। 'अद्य' च पुरा च, तदेव कर्म 'नदीनां' वर्त्तते। कतमत्? 'तत्' उद्दिष्टं वहनं कर्म। कथं नाम? अस्य लोकस्यो-पकारायाजस्रं नेता वहेयुरिति। 'गातुं' गमनमार्गम् 'आभ्यः' नदीभ्योऽर्थाय त्वम् 'अरदः' अखनस्त्वम्। किम् गमनम्? गच्छ-न्त्यनेनेति गमनम्। हे 'इन्द्र!' तदेव कर्माद्यापि वर्त्तते, तासां नदीनाम्, यथा व्यादिष्ट मेव 'त्वया'। ताभिरद्यापि तदनुष्ठीयत इत्यभिप्रायः। यदुक्तं पुरस्तादपि; "इन्द्रो अस्माँ अरदत्"—इत्यत्र*। एवं तावदयं त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः। किञ्च; 'निपर्वता अद्मसदो न सेदुः'। य एते 'पर्वताः' पर्ववन्तो मेघाः, 'अद्मसदः' निष्पादयितव्य मन्न मस्माभिरित्येतदर्थं मुद्दिश्यान्तरिक्षे लोके सीदन्ति, अवतिष्ठन्ते, गच्छन्ति वा; तेऽपि युष्मदीयेनाप-न्नदिता एवोदकभृताः, नीचैर्भूम्या मन्न, निष्पत्त्यर्थं 'सेदुः' सीद-न्तीत्यर्थः। तदेवं कृत्वा (किं बहुना†) सर्वथाप्युदकप्रदानद्वारेण त्वयैवैतानि, हे 'सुकर्मन्! 'दृढानि' दृढीकृतानि 'रजांसि' लोका इत्यर्थः। त्वत्प्रदेशा मेव मन्न मुदकञ्च न व्यधास्यः, सर्व एवैते लोका नाभविष्यन्नित्यभिप्रायः। इहाद्यैतस्य सन्निधौ वर्त्तमानो नूचिदित्येष पुराणाभिधायीत्युपपद्यते। इह पुराणनवयोरित्युक्तम्‡, तत्र पुरा-णाभिधायित्वस्यैतदुदाहरणम्; नवाभिधायिनो "नू चिन्नु वायोर-मृतं वि दस्येत्" अत्र हि वक्ष्यति;—"नवञ्च पुराणञ्चेति §" ॥

---

* पु० १ ख० ७ पा० ४ ख० १४४ पृ०।

† नास्त्येतत् क-ख-पुस्तकयोः।

‡ पु० ४१० पृ० ८ पं०।

§ ऋ० ६० का० १०, ६, २।

नू चेत्यस्योदाहरणम्;—"नू च पुरा०—०द्रविणोदाम्"—इति *। कुत्सस्येय मार्षम्। पृष्ठ्यस्य षष्ठेऽहनि अग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते। 'नू च पुरा च सदनम्' अद्य च पुरा च सदनम्। कस्य? 'रयीणां' धनानाम्। किञ्च; 'जातस्य' उत्पन्नस्य 'जायमानस्य च' अभिनिष्पद्यमानस्य भूतजातस्य 'क्षाम्' निवास मित्यर्थः। "तस्मात् सर्वानृतून् पशवोऽग्नि मभिसर्पन्तीति विज्ञायते" †। "यत्र गां प्रयातां निर्जगाति मृता मेता मविद्वान् मन्यतेऽस्वग्नौ ह्येवैते प्रविशन्तीति च विज्ञायते" ‡। तस्मादुपपद्यते स्थानत्वं निवासत्वं चाग्नेः। 'सतश्च' निष्पन्नस्य भूतजातस्य § 'गोपां' गोप्तारम्, 'भवतश्च' उत्पद्यमानस्य 'भूरेः' बहुनः, गोप्तार मित्यनुवर्त्तते। य एवंलक्षणो-ऽग्निस्तं 'द्रविणोदां' धनस्य दातारम्, 'देवाः' 'धारयन्' धृतवन्त इत्यर्थः। क? हविर्वहनकर्मणि? "अधा देवा दधिरे हव्यवाहम्" —इति वक्ष्यति ‖। एव मिह पुरा चेत्यस्य सन्निधौ नू चेत्येष शब्दो वर्त्तमानो नवाभिधायीत्युपपद्यते। पुराणाभिधायित्वे पर्येष्य मस्योदा-हरणम्॥ १ (१७)॥

विद्याम तस्य ते वय मकूपारस्य दावने। विद्याम तस्य ते वय मकुपरणस्य दानस्यादित्योऽप्यकूपार ¶ उच्यते

---

* "नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम्। सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन् द्रविणोदाम्।" ऋ० सं० १. ० ४, १।

† "षड् वा ऋतवः; ऋतूनेव तत् कल्पयति।"—इत्यादि च रे० ब्रा० २, १, ९।

‡ "ओर्वै देवानां मनोता"—इत्यादि च द्रष्टव्यम् रे० ब्रा० २, १, १०।

§ "निष्पन्नभूतजातस्य" ग।

‖ ऋ० सं० ५, २, १४, ४।

¶ "ऽप्यकूपारो"—इति च।

ऽकूपारो भवति दूरपारः समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूप मृच्छतीति कच्छपः कच्छं पाति कच्छेन पातीति वा कच्छेन पिबतीति वा कच्छः खच्छः खच्छदोऽय मपीतरो नदीकच्छ एतस्मादेव क मुदकं तेन छाद्यते। शिशीते शृङ्गे रक्षसे विनिक्षे। निश्यति शृङ्गे रक्षसो विनिक्षणाय * रक्षो रक्षितव्य मस्माद्रहसि क्षणोतीति † वा रात्रौ नक्षत इति वा। अग्निः सुतुकः सुतुकेभिरश्वैः। सुतुकनः सुतुकनैरिति वा सुप्रजाः सुप्रजोभिरिति वा। सुप्रायणा अस्मिन् यज्ञे विश्रयन्ताम्। सुप्रगमनाः॥ २ (१८)॥

"दावने(२२)"–इति। एतदनवगतम् ‡। "दानस्य"–इत्यवगमः। "अकूपारस्य(२२)"–इति §। एतदनवगतम्। अनेकार्थम्। "अकुपरणस्य"–इत्यवगमः। द्वयोरप्येतयोरेक एव निगमः; "यमन्यसे वरेण्य॰—॰ मकूपारस्य दावने ॥"। अत्रेभौमस्येय मार्षम्। अच्छावाकस्य तार्तीयसवनिके आवापे नियुक्ता; "यदिन्द्रचित्र"–इति, ¶ इयञ्च। हे 'इन्द्र !' 'यत्' 'मन्यसे' जानीषे त्वं 'वरेण्यं' वरणीयम्,

* "विनिषणनाय" क, ख।

† "चषी भवतीति" क।

‡ १भा॰ २२१ पृ॰ १८ पं॰।

§ १भा॰ २२० पृ॰ ९ पं॰।

|| "यमन्यसे वरेण्य मिन्द्र द्युक्षं तदा भर। विद्याम तस्य ते वय मकूपारस्य दावने ॥"–इति ऋ॰ सं॰ ४, ९, १०, १।

¶ ऋ॰ सं॰ ४, ९, १०, १।

एतद्धन मिति; 'द्युम्नं' च, यत् द्युतिनिवासभूतम्, द्युतिमदि-त्यर्थः। 'तद्' अस्मभ्यम् 'आहर'। कदाचित् त्व माहृत्यापि न दद्याः? अतो ब्रूमः;—'तस्य' त्वयाहृतस्य धनस्य 'विद्याम' लभे-महि 'ते' तव स्वभूतस्य। किंलक्षणस्य? 'अकूपारस्य' "अकूपरणस्य" अकुत्सितपूरणस्येत्यर्थः। येन लब्धेन सुपूर्ण मात्मानं मन्यामहे पर्याप्त मैहिकाय च श्रेयसे आमुष्मिकाय चेत्यर्थः। 'दावने' "दानस्य" इत्यर्थः। ईदृशस्य भावत्कस्य धनस्य * वय मेव लम्भारः स्यामेत्य-भिप्रायः। एव मिह यन्मन्यसे वरेण्यं, द्युम्नञ्च, तदाभरेति इन्द्र उच्यमानो धनसन्निधानाद् दानादन्यत् कि मुच्यते? धन मेव हि प्रायेण मनुष्यैः प्रार्थ्यते; तस्मादत्राश्रूयमाणोऽपि धनशब्दोऽध्याहृतः। तच्च पुनः प्रार्थ्यमानं बहु प्रार्थ्यते। तस्मादकूपारस्येत्येष शब्दोऽति-परोक्षवृत्तिः। "अकुपरणस्य"—इत्येवं परोक्षवृत्तित्वेनावस्थाप्य, ततः अकुत्सितपुरणस्य—इत्येवं प्रत्यक्षवृत्तित्वेन व्याख्यायते। अत्र कुरिति कुत्सार्थः, परणं पूरण मुच्यते; कुत्सितं परणं 'कुपरणम्', न कुत्सितं परणं 'अकुपरणम्'; तस्य "अकुपरणस्य" प्रभूतस्येत्यर्थः॥——॥दान-सम्बधादेव "दावने"—इत्येष शब्दो दानार्थ इत्युपपत्तिः। एतस्मिन् मन्त्रे "अकूपारस्य, दावने"—इत्यय मनयोः पदयोरनुक्रमः; समा-म्नाये पुनः † "दावने, अकूपारस्य"—इति मन्त्रपाठव्यतिक्रमेणानु-क्रमः ‡। तेन ज्ञायतेऽन्यैरेवाय मृषिभिः समाम्नायः समा-

---

* "दानस्य" न।

† "समाम्नाये तु" न।

‡ तथा चि;—४अ० १ख० (१भा० १८८ पृ० १० पं०) द्रष्टव्यम्।

म्नात:*, अन्य एव चायं भाष्यकार† इति; एको हि समाम्नानं भाष्यं च कुर्वन्, प्रयोजनस्याभावादेकमन्त्रगतयो: पाठानुक्रमं नाभङ्क्ष्यत्। अविवक्षितार्थाश्चैते मन्त्रे‡ निगमा:, तेषु सम्पत्त्या काकतालीयन्यायेन§ कस्मिंश्चिदेकस्मिन्नेव निगमे द्वे पदे आगच्छतस्ते यथोपागते एव भाष्यकारो व्याचष्टे इत्यदोष:॥

"आदित्योऽप्यकूपार:"—इति "उच्यते"। किं कारणम्? स हि अकुत्सितस्य महतोऽध्वन: पारयिता भवति; उदयादारभ्य यावदस्तमिति। "समुद्रोऽप्यकूपार उच्यते", असावपि अकुत्सितपार: आत्मनैव भवति। "महापार:"—इति पर्यायेणार्थवचनम्; विस्तीर्णपार इत्यर्थ:। "कच्छपो¶ऽप्यकूपार उच्यते" स हि "न कूपमृच्छति" अल्पोदकत्वात्; किं तर्हि? यत्र बहु प्रकीर्णमुदकम्, तत् स्थानं गन्तुमिच्छति, समुद्रं नदीं वा। आख्यानप्रसक्तमुच्यते;— "कच्छप:", "कच्छम्" आत्मनो मुखसम्पुटं "पाति" रक्षति; स हि किञ्चिद् दृष्ट्वा स्वशरीरे एव मुखसम्पुटं प्रवेशयति; सम्पुटे हि

---

* इह समाम्नायशब्देन 'निघण्टु'-नाम समाम्नायो बोद्धव्य:, वेदाङ्गेष्वपि वेदमन्त्रावादेष्वपि समाम्नायशब्द: प्रयुक्तोऽस्य इतिज्ञता, एतत्क्षाप्यारम्भे यास्केनापि।

† भाष्यकारो यास्क:।

‡ "मन्त्रा" क, ख।

§ एवञ्च "गौ:, ग्मा, ज्मा (१भा० ९पृ० ५पं०)"—इत्यादिपदसमाम्नायो न यास्ककृत इत्यर्थ: फलित:।

‖ काकागमनं तालपतनञ्चेति युगपत् सम्भूतं काकतालीयमुच्यते।

¶ प्राचीनपुस्तकेषु सर्वत्रैव "कश्यपो"—इति, अर्वाचीनेषु तु सर्वत्रैव "कच्छपो"—इति; एवमन्यत्रापि च्छ-विशिष्टपदमात्रे दृश्यते। लिपिभेद एवास्य कारणमनुमीयतेऽस्माभि:; यस्ति च पूर्वतनीयार्वाचीनयो: 'छ'-वर्णयोराकारभेदस्तथा चार्वाचीनानां 'छ' एव प्राचीनानां 'श्य' इति मन्यते।

कच्छशब्दः प्रसिद्धः, प्राणिवाच्यः कच्छपुट इति च। "कच्छेन" कटाक्षेन इतराण्यङ्गानि पातीति वा; स हि किञ्चिद् दृष्ट्वा सर्वाण्यङ्गानि कटाह एवानुप्रवेश्य कूर्मत्वेनैवावतिष्ठते*। अथ "वा" "कच्छेन" मुखसम्पुटेन "पिबतीति" कच्छपः। विग्रहप्रसक्तः कच्छशब्दो निरुच्यते;—स एष कच्छो मुखसम्पुटः कटाक्षो वायं कच्छः, आह किमुक्तं भवति? "खच्छः"—इत्युच्यते; स हि "खच्छदः" खम् आकाशं छादयति, स हि मध्ये सुषिरो भवति। "अथ सपीतरो नदीकच्छ एतस्मादेव"क-सञ्ज्ञकेन उदकेन "छाद्यते" इति कच्छः †॥

आदित्योऽप्यकूपारः ‡, समुद्रोऽप्यकूपारः, कच्छपोऽप्यकूपार;—इत्येतेषु निगमाः पर्य्येष्याः॥

"शिशीते(२४)"—इति §। एतदनवगमम्। "शिश्नति",—इत्यवगमः। "वि ज्योतिषा ०—०विनिचे ॥"—इति निगमः। वृषो नाम जनपुत्रस्तस्येयमार्षम्; आत्रेयस्य वा कुमारस्य; उभयोर्वा। प्रातरनुवाकाश्विनयोः शस्यते। 'वि भाति' 'अग्निः' नानाप्रकारं भाति। केन? 'बृहता ज्योतिषा'। स एवं विभासमानः किं करोति? 'आविर्विश्वानि कृणुते'; 'आविष्करोति' प्रकाशीकरोति 'विश्वानि' सर्वाणि भूतानि। 'महित्वा' महत्त्वेनेत्यर्थः। किञ्च;

---

* "कूर्मवत्त्वेनैवावतिष्ठते"—इति क, ख।

† "पुंसि कच्छस्तथाविधः"—इत्यमरः ३, ३, १०।

‡ "अकूपारः सलिलो मातरिश्वा (ऋ० सं० ८, ४, ७, १,"—इत्यस्य व्याख्यावसरे "अकुत्सितपारो महागतिरादित्यः"—इत्याह सायणः।

§ १भा० ६९७ पृ० १० पं०।

|| "वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा। प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे॥" ऋ० सं० ४, ८, १५, २।

"प्रादेवीर्मायाः सहते"; 'प्रसहते' प्रकर्षेणाभि भवति। किम्? 'अदेवीर्मायाः' आसुरीरित्यर्थः। 'दुरेवाः' दुरवाः, दुःसर्पा वा *; न अग्नेरुपतिरस्ति। किञ्च; 'शिशीते शृङ्गे' यथा हि वृषभस्तटाविषाणं शृङ्गे तीक्ष्णीकरोति, एव मग्निरपि दारूणि दहंस्तीक्ष्णीकरोति ज्वालाः। क मर्थं पुरस्कृत्य? "रक्षसे विनिक्षणाय" विहिंसनार्थेत्यर्थः॥ अत्र शृङ्गशब्दसन्निधानात् "शिशीते"—इत्यस्य तीक्ष्णार्थत्वम्, तीक्ष्णीकृतैर्ह्यर्चिभिर्विनिक्षण मुपपद्यत इति॥ निगमप्रसङ्ग मुच्यते;—"रक्षः रक्षितव्यम्" हि शरीर मस्माद्भवति, रक्षो हि † मानुषान् भक्षयति। "रहसि वा" विविक्ते प्रदेशे रक्षः "क्षणोति" हिनस्तीत्यर्थः। "रात्रौ नक्षते" गच्छति—"इति वा" रक्षः॥

"मुतुके(१५)"—इति ‡। एतदनवगतम्। पक्षेण चानेकार्थम्। "मुतुकनः"—इत्यवगमः; "मुतुकमैरिति वा"। "स आ वक्षि ०—० एह गम्याः"—इति निगमः §। चितस्येव मार्षम् आप्नस्य। प्रातरनुवाकाग्निनयोः शस्यते। यस्त्वं 'दिवस्पृथिव्योः', 'युवत्योः' सम्मिश्रीभवन्त्योः यानि भूतानि अन्तरा वर्त्तन्ते, तेषां सर्वेषाम् 'अरतिः' त्व मेवालमतिः, पर्याप्तमतिरित्यर्थः। 'स' एवंलक्षणस्त्व मस्माकम् 'आ वक्षि' आकर्षसि देवान् ‖; 'महि' महत इत्यर्थः। स एवम् 'आ सत्सि च' आसी-

* "दुःसृप्ता वा" क, ख।

† "नहि रक्षो" ग।

‡ १भा० १९० पृ० १९ पं०।

§ "स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः। अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः॥"—इति ऋ० सं० ७, ५, ११, ०।

‖ "एताभिर्वै देवान् यजमानो ह्वयति, तदाहुतीना माहुतित्वम्"—इत्यादि ऐ० ब्रा० १, १, २ द्रष्टव्यम्।

हविंषि च वोढवे। 'अग्निः'—इत्येतत् पदं सम्बोधनत्वेन* विपरिणम्यते, 'आ वक्षि'-'आ च वक्षि'—इति मध्यमपुरुषयोगान्मन्त्रस्य। हे अग्ने! यस्त्वमेवङ्गुणयुक्तः 'सुतुकः' "सुतुकनः" सुगमन इत्यर्थः; अथ वा "सुप्रजाः"। तुगित्यपत्यनामसु पठितम्†। हिरण्य मपत्य मभिप्रेत मग्नेः; "हिरण्यरेता अग्निः"—इति श्रूयते‡, "अग्नेरपत्यं प्रथमं सुवर्णम्" —इति च§। 'सुतुकैरेव' सुगमनैरश्वैः; अथ वा "सुप्रजोभिः" कुलजैरित्यर्थः। अथ वा शोभना प्रजा येषां ते सुप्रजाः; शोभनाना मेवाश्वानां शोभनाः प्रजा भवन्तीति प्रजाद्वारेण चाग्निः स्तूयते। अथवा स एवाग्निः 'सुतुकः' "सुप्रजाः"|| अपत्यस्थानीयाः सर्वाः प्रजाः; तासु प्रति कल्याण इति "सुप्रजाः"। 'रभस्वद्भिः' त्वरितैः 'रभस्वान्' स्वयं च त्वरितः 'एह गम्याः' आगच्छेस्त्व मिह कर्मणि, नित्यं हवींषि वोढुम्; कर्मैव तवेद मित्यभिप्रायः। एव मेतदिह "सुतुकः"—इत्यग्निविशेषणम्, सुतुकनैरश्वैरित्येतस्मात्तृतीयासम्बन्धादित्युपपत्तिः॥

"सुप्रायणाः(२९)"—इति¶। एतदनवगतम्। "सुप्रगमनाः"—इति शब्दप्रतीतिः। यज्ञगृहद्वारोऽभिधेया यास्कमतेन, शाकपूणेस्तु अर्चिषः। "होता यक्षद्०———०होतर्यज"—इति निगमः**। मैत्राव-

---

* "सम्बोधनार्थत्वेन" ग।

† १भा० १०१ पृ० १अ० १ख० (१)।

‡ 'हिरण्यदन्तम् (ऋ० सं० ३, ८, १४, ३)"—इत्यादिषु वक्ष्यतीति ज्ञेयम्।

§ "अग्निर्वैश्वानरः प्राच्यावयत्, तस्य यद्रेतसः"—इत्यादि च ऐ० ब्रा० ३, ३, १०।

|| "सुतुकप्रजाः"—इत्येकपदं ग-पुस्तके।

¶ १भा० ३९७ पृ० १८ पं०।

** "होता यक्षद्दुरऋष्वाः कवष्योऽकोषधावनीरुदाताभिर्जिहतां विपक्षोभिश्रयन्तां सुप्रायणा अस्मिन् यज्ञे विश्रयन्ता मृतावृधो_ व्यन्त्वाज्यस्य होतर्यज॥"—इति य० का० सं० (वा० सं० २८, ५)।

रुणो* ब्रवीति ;—'होता यक्षत्' होता यजतु। किम्? एताः 'दुरः' यज्ञगृहद्वारः; अथवैता अन्यर्चिषः। 'ऋष्वाः' महत्यः; अथवा हिंस्राः; द्वार्य्येव हि यो निवारणीयः, स हिंस्यते; अर्चिषान्तु हिंस्रत्व मुपपद्यत एव। 'कवष्यः' विकर्त्तिताः, कुषिताः† इत्यर्थः; कपाटवत्यो वा यज्ञगृहद्वारः। 'अकोषधावनीः' अकोशधावनीः; तासु हि संवृतासु द्रव्यकोशाः सुरक्षा भवन्ति; अर्चिःष्वपि हविः प्रक्षिप्तं नान्यतो धावति, किं तर्हि? देवानेव प्राप्नोति; एतदकोश-धावनीत्व मर्चिषाम्। एवंलक्षणा एता द्वारः, अर्चिषो वा 'उदा-ताभिर्ज्जिहताम्'; 'उज्जिहताम्', उत्तिष्ठन्तु, 'आताभिः' दिग्भिः‡; 'विश्रयन्ताम्' च 'पक्षोभिः' विश्रियन्ते कपाट-संवरणैः द्वारः; अर्चिषस्तु हविषोऽनुप्रवेशार्थम् पक्षोभिः स्वैरेवावयवैर्विश्रयन्ताम्। विवृताश्च सत्यः 'सुप्रायणाः' "सुप्रगमनाः" भवन्तु ऋत्विजं प्रति द्वारः; अथ पुनरर्चिषस्ततो हविषः सुप्रगमनाः सन्तु। सामान्य मेवेद माशास्तं यत्, पुनस्तस्मिन्नेव वर्त्तमाने कर्मण्याशास्ते;—'अस्मिन् यज्ञे' 'विश्र-यन्तां' विश्रियन्ताम् 'ऋतावृधः' यज्ञवर्द्धयित्र्यः। या एता एवंलक्षणा द्वारः, अर्चिषो वा; ता अस्या 'आज्यस्य व्यन्तु' य आसां स्वांशः, तं पिबन्तु। हे 'होतः!' त्व मपि मया प्रेषितो 'यज' एताः॥ एव-मेव 'सुप्रायणाः'—इति दुरा मर्चिषां वा सन्निधौ श्रूयमाणः सुप्रग-मनाभिधायीत्युपपद्यते॥ २ (१८)॥

---

* मैत्रावरुणः ऋत्विग्विशेषः, स च सप्तसु होतृषु तृतीयः; तस्य च पश्चाद्दक्षिण-पश्चिमांशो भागः। ऐ० ब्रा० ६, २, १. किंच ७, १, १।

† "कषिताः" ग।

‡ 'आताः' दिशः। ५ आ० १९ ख० १ प० ६ ख० (१)।

देवा नो यथा सद मिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ देवा नो यथा सदा वर्द्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि च्यवन ऋषिर्भवति च्यावयिता स्तोमानां च्यवान मित्यप्यस्य निगमा भवन्ति। युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः। युवां च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथु र्युवा प्रयौति कर्म्माणि तक्षतिः करोतिकर्मा रजो रजते र्ज्योती रज उच्यत उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी उच्येते (रजांसि चित्रा वि चरन्ति तन्यव इत्यपि निगमो भवति *) हरो हरते र्ज्योतिर्हर उच्यते (उदकं हर उच्यते †) लोका हरांस्युच्यन्ते ‡। (असृगहनी हरसी उच्येते। प्रत्यग्ने हरसा हरः शृणीही-त्यपि निगमो भवति §) जुहुरे विचितयन्तः। जुह्वरे विचेतयमाना व्यन्त इत्येषोऽनेककर्म्मा। पदं देवस्य नमसा व्यन्त इति पश्यतिकर्मा। वीहि शूर पुरोळाश-मिति ॥ खादतिकर्मा। वीतं पातं पयस उस्रियायाः।

---

* क-ख-ग-पुस्तकेषु नास्त्येष पाठः; दुर्गेणापि न व्याख्यातः।

† नास्त्येष पाठः घ-पुस्तके; दुर्गेण तु स्वीकृतः।

‡ "हरा उच्यन्ते"—इति क. ख, ग।

§ क-ख-ग-पुस्तकेषु नास्त्येष पाठः; दुर्गेणापि न गृहीतः।

‖ "पुरोडाश मिति"— इति घ-पाठः।

अश्नीतं पिबतं पयस उस्रियाया उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः (उस्रेति च *)। त्वा मिन्द्र मतिभिः सुते सुनीथासो वसूयवः। गोभिः क्राणा अनूषत। गोभिः कुर्वाणा अस्तोषत (३ †)। आ तू षिञ्च हरिं मीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः। आसिञ्च हरिं द्रोरुपस्थे द्रुममयस्य हरिः सोमो हरितवर्णोऽय मपीतरो हरिरेतस्माद्देव। वाशीभिस्तक्षताश्मन्मयीभिः। वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा। स शर्द्धदुर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपिगुर्ऋतं नः। स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्याः शिश्नं श्नथतेः। अपिगुर्ऋतं नः। सत्यं वा यज्ञं वा॥ ३ (१९)॥

"अप्रायुवः(२०)"—इति ‡। एतदनवगतम्। "अप्रमाद्यन्तः"—इत्येव मर्थप्रतीतिः। "आ नो भद्राः क्रतवो०—०दिवेदिवे"—इति निगमः §। गोतमस्यैव मार्षम्। अग्निष्टोमे महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते। 'आ यन्तु' उपयन्तु, अस्माकं 'भद्रा' भन्द-

* एष च पाठो न विद्यते क-ख-ग-पुस्तकेषु।

† इत्येव तृतीयखण्डः परिसमाप्तो दृश्यते क-ख-ग-पुस्तकेषु।

‡ १मा० २९८ पृ० १ पं०।

§ "आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवा नो यथा सद मिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे॥"—इति ऋ० सं० १, ६, १५, १।

नीयाः, स्तुत्याः। 'क्रतवः' सोमक्रतवः, कामा वा। 'विश्वतः' सर्वतः, सर्वदैव यथाविहितेषु कालेषु। 'अदब्धासः' अनुपहताः, अविगुणाः, कैश्चिदपि दस्युभिः। 'अपरीतासः' अपरिप्राप्तपूर्वाः, असमच्छत्रुभिः। 'उद्भिदश्च' उद्भेत्तारः, एषां त्रयाणा मपि लोकानाम्; येषां फलेनैताम् त्रीनपि लोकानुद्भिन्द्मीमहि *, ते आगच्छन्तु। किञ्च; तथा च तेऽत्यर्थ मविगुणा आगच्छन्तु, 'यथा' तैः परितोषिताः सन्तो 'देवाः' सदैव नित्य मेवास्माकं वर्द्धनायोद्यताः 'असन्' स्युरित्यर्थः; भाष्येऽपि † "स्युः"—इत्येष पाठः। 'अप्रायुवः' अप्रमाद्यन्तः, प्रमाद मकुर्वाणः; असम्मुह्यमाना इत्यर्थः। वर्द्धयितारो 'रक्षितारः, च। 'दिवेदिवे' अहन्यहनि यथा स्युस्तथा ते सोमक्रतवः, सगुणाः कामा वा आगच्छन्तु। अत्र "अप्रायुवो रक्षितारः"—इति रक्षितृशब्देन समानार्थसन्निवेशादप्रायुवशब्दस्याप्रमादार्थत्वम्; रक्षणे हि सत्यप्रमादस्येष्टत्वात्॥

"च्यवनः(१८)"—इति ‡। एतदनवगतम्। "च्यावनः"—इत्येव मर्थप्रतीतिः। "ऋषिर्भवति"—इत्यभिधेयवचनम्, "च्यवानम्"—"इति"। एवम् "अप्यस्य" ऋषेर्भृगुपुत्रस्य § छन्दसि "निगमाः" सन्ति। च्यवन इति प्रसिद्ध मेवेति कृत्वा निगमं न पठति ||; इतरथा त्वप्रसिद्ध मल्पप्रयोगञ्चैतदिति कृत्वा पठति;—"युवं च्यवानम् ०—०

---

* "विन्देमहि"—इति ग।

† यास्कीयेऽस्मिन्नेव निबन्धेऽपीति यावत्।

‡ १भा० ३९८ पृ० ७ पं०।

§ तथा चैतरेयकम्;—"च्यवनो भार्गवः शार्यातं मानव मभिषिषेच" ८,४,७।

|| ऋक्संहितायाम्—१, ११, ३.—७, १८, १.—८, २२, ९;—९९, ४.—१० १९, ५. ऋचो द्रष्टव्याः।

प्रवाच्या" * । काक्षीवत्या घोषायाः इय मार्षम् † । प्रातरनुवाकाश्विनयोः शस्यते। अश्विनावुच्येते ;—हे अश्विनौ! "युवं", 'च्यवानम्' ऋषिं च्यावयितारं स्तोमानाम्। 'सनयं' वृद्धं गमनासमर्थं सन्तम् 'यथा' चिरन्तनं 'रथं' गमनासमर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्यात्, एवं 'पुनः युवानम्' च्यवन मृषिं 'चरथाय' "चरणाय" गमनार्थम् 'तक्षथुः' कृतवन्तौ स्थ इत्यर्थः । किञ्च ; 'निष्टौग्र्य मूहथुः' निरूहथुः, निर्वहतवन्तौ स्थः, 'तौग्र्यं' तुग्राणा मपां ‡ सङ्घातं मेघानाम् § । क्व पुनः निरूहथुः ? 'अद्भ्यस्परि' चिरन्तनीना मन्यासा मपा मुपरि; अनुपक्षीणास्वेवान्यासु वार्षिकास्वप्सु, तासा मेवोपरि लोकानुग्रहार्थं मन्य मुदकसङ्घातं निरूहथुः। तान्येवमादीनि कर्माणि 'विश्वा' विश्वानि, सर्वाणि । युवयोः 'सवनेषु' यज्ञेषु; प्रातःसवनादिषु वा 'प्रवाच्या' प्रकर्षेण वचनीयानि स्तोतृणाम् ॥ एव मेतस्मिन् मन्त्रे "च्यवानः"—शब्देन च्यवन एव ऋषिरुक्तः; स हि श्रूयते सौकन्ये आख्याने ;—जीर्णः सन्नश्विभ्यां पुनर्युवाकृत इति ‖ । तस्मादुपपद्यते ॥ निगमप्रसक्त मुच्यते ;—"युवा, प्रयौति कर्माणि" मिश्रयति । "तक्षतिः करोतिकर्मा" करोतीत्यर्थः ॥

---

* "युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः। निष्टौग्र्य मूहथुरद्भ्यस्परि विश्वेत् ता वां सवनेषु प्रवाच्या ॥"—इति ऋ० सं० ७, ८, १५, ४ ।

† कक्षीवतो दुहिता घोषा नाम ब्रह्मवादिनी ऋषिः। ऋ० सं० १, ११७, ७;—११२, ५.—८, ९२, ७.—१०, ४०, ५;—९८, १;—१०२, १०;—११८, ४ ऋचो द्रष्टव्याः। कक्षीवांश्चैतरेयके सुपरिचितः, तथा हि;—"एताभिर्हाश्विनोः कक्षीवान् प्रियं धामोपागच्छत्"—इत्यादि ऐ० ब्रा० १, ४, ४ ।

‡ १भा० ९९ पृ० १ष० १२ष० (११) ।

§ "सङ्घातं मेघम्"—इति म ।

‖ ऋ० सं० १, ८, ९, ५ द्रष्टव्यम् ।

"रजः(१९)"—इति *। अनेकार्थम्। "रजतेः"—इति व्युत्पत्तिः॥ "ज्योती रज उच्यते"; तद्धि अनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन। "या ते अग्ने रजःशया तनूः"—इत्येवमाद्युदाहरणं द्रष्टव्यम् †। भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान् न पठति॥

"उदकं रज उच्यते"; तदपि हि स्वेन स्नेहाख्येन गुणेनानुरञ्जयति। "भुवो यज्ञस्य"—इति निगमः ‡। हे अग्ने! त्व मेवास्य 'यज्ञस्य' 'भुवः' पृथिवीलोकादमुं लोकं 'नेता'। 'रजसः' उदकस्य च नेता; "अग्नि र्वा इतो वृष्टिं समीरयति"—इति हि वक्ष्यति §। क्व पुनर्नेता? 'यत्र' यस्मिन् लोके 'नियुद्भिः' अश्वजातिभिः 'शिवाभिः' सुखतमाभिः सहितं 'वायुम्' अन्तरिक्षस्थानं 'सचसे' संसेवसे त्वम्, तत्र नेता, मध्यस्थानानां देवानां स्थितये। किञ्च; त्व मेव 'दिवि' अवस्थितः सर्वभूतमुर्द्धानं 'दधिषे' धारयसि। यज्ञाभिनिष्पन्नेनेतो लोकाद्धृतेन ‖ हविषा 'स्वः' स्वराख्य मादित्यम् ¶। किञ्च; त्व मेव एतां 'जिह्वां' ज्वालाम्** अत्यद्भुताम्, आत्मनः सकाशात् 'चकृषे' पुनः पुनः करोषि। यः अस्मत्प्रदत्तानि हवींषि उपक्षिपति, यस्त्व मेवङ्गुणयुक्तस्तं त्वां वय मेतस्मिन् कर्मणि 'हव्यवाहं' हविषां वोढारम्,

---

* १भा० ३९८ पृ० १४ पं।

† य० वा० सं० ५, ८।

‡ "भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वा मग्ने चकृषे हव्यवाहम्॥"—इति ऋ० सं० ७, ९, ४, ९।

§ प० दै० का० ७अ० ९पा० १ख०।

‖ "लोकाद्धृतेन" ग।

¶ प० ११० पृ० २अ० ४पा० २ख०।

** "या ते जिह्वा"—इत्यस्य सायणीयव्याख्या द्रष्टव्या (ऋ० सं० ९, ४, १, ५)।

अनेन पुरोडाशाख्येन 'हविषा' * यजामः। पौर्णमासस्याग्नेयस्य हविषो याज्यैषा ॥

"लोका रजांस्युच्यन्ते"; तेष्वपि हि प्राणिनो रज्यन्ते। "त्वया-हूण्हानि सुक्रतो रजांसि" (ऋ० सं० ४, ७, २, ३)—इति व्याख्यातो निगमः † ॥

"असृगहनी, रजसी उच्येते"। असृग् रुधिरम्. असृक् च अहश्च असृगहनी; ते अपि रजसी उच्येते। "मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति"—इति (?) रुधिरस्योदाहरणम्। "अहश्च कृष्ण-महरर्ज्जुनञ्च"—इत्यह्नः ‡ उदाहरणम् ॥

"हरः(४०)"—इत्येतदनेकार्थम् §। "हरतेः"—इति व्युत्पत्तिः। "ज्योति हर उच्यते"; तद्धि ह्रियते, हरति वा स्नेहम्; विद्रवी-करोति। हरति वा तम इति हरः। "या ते अग्ने हरःशया तनूः ‖", "अग्ने यत्ते हरस्तेन तं प्रति हर ¶"—इत्येवमादयः प्रचुरा एव निगमा इति अत्रापि भाष्यकारो न पठति ** ॥

---

* "पुरोडाशः स्विष्टकृते यजति, हविरेवास्मा एतत् स्वदयतीव सूर्व्वं मालम् भते"—इति (ऐ० ब्रा० २, १, ९), "हविर्वा एतद् यदुत्पूतम्"—इति च (ऐ० ब्रा० १, १, ५)।

† पु० ४२५ पृ० १९ पं० "यथाविद्म"—इति मन्त्रव्याख्यानावसरे इति यावत्। ङ-च पुस्तकयोस्तु मूले एव "रजांसि चित्रा (ऋ० सं० ४, ४, १, ५)"—इति निगमो दृश्यते।

‡ ऋ० सं० ४, ५, ११, १। तत्र हि "रजसी"—इति पदस्य 'स्वस्वभासा सर्व्वं जगद्रञ्जयन्तौ'—इति सायणीयव्याख्याहोरात्रपरा।

§ १भा० २९८ पृ० १५ पं०।

‖ य० वा० सं० ५, ८।

¶ अथ० सं० २, १९, २।

** ङ-च-पुस्तकयोस्तु मूले एव "प्रत्यग्ने हरसा (ऋ० सं० ८, ४, ९, ५)"—इति निगमो दृश्यते।

"उदकं हर उच्यते"; तद्धि ह्रियते प्राणिभिः जीवनाय॥

"लोका हरांस्युच्यन्ते"; तेभ्यो हि क्षीणपुण्याः प्राणिनो ह्रियन्ते *॥

"जुहुरे(४१)"—इति †। एतदनवगतम्। "जुह्विरे"—इत्यवगमः। "जुहुरे विचितयन्तो०—०पुरं विविश्रुः" ‡। वहेराचेयस्यार्षम्। जुहुरे, जुह्विरे, जुह्वति। योऽग्निं 'विचितयन्तः' "विचेतयमानाः" कर्मकर्त्तृसाधनानां याथात्म्यं वेदान्तदर्शनेन जानानाः, ये च नराः 'अनिमिषम्' आदरवदवस्थान मात्मनः कृत्वा युक्तात्मानो 'नृम्णं' योगबल मात्मनः कर्मणि वर्त्तमाने 'पान्ति' रक्षन्तीत्यर्थः। आह;— ये एवं गुणयुक्ताः, किं तेषाम्? इति। उच्यते;—'आ दृढां पुरं विविश्रुः' ते 'दृढां' नित्यम्, अनावृत्तये परब्रह्ममयीं 'पुरम्' §, इमा मदृढां शरीरपुरं पापिष्ठां हित्वेत्यभिप्रायः॥ विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते कि मन्यत् कुर्युः, येन दृढां पुर माविशेयुः? अस्त्वसाकण्य मपि च "जुहुरे"—इत्येतस्मिंश्छन्देऽस्त्येव। प्रकरणाच्चेय माग्नेयी ऋक् ‖। तस्मात् "जुहुरे"—इत्येष शब्दो हवनार्थ एवेत्युपपद्यते॥

---

* "अथातो ब्रह्मणः परिमरः"—इत्याद्यैतरेयारण्यकस्य द्रष्टव्यः।

† १भा० ६९९ पृ० ९ पं०।

‡ "जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति। आ दृळ्हां पुरं विविशुः॥"—इति ऋ० सं० ४, १, ११, ९।

§ "अयस्मयी मेवेमा मकुर्वत, रजता मन्तरिक्षम्, हरिणीं दिवम्"—इत्यादि ऐ० ब्रा० १, ४, ५।

‖ "पूर्व्वाणो"—इत्यादिदशसूक्तानां चतुर्थनवमवर्जितानां प्रातरनुवाके आग्नेये क्रतावेव विनियोगदर्शनात् (आ० ४, १२)।

"व्यन्तः[४२]"—इत्येषोऽनेककर्मा *। यस्माद्धातोरयं शब्दो निष्पद्यते, स धातुरनेककर्मा, अनेकार्थः। "वी गतिप्रजननकान्त्यसनखादनेषु (अदा॰ प॰)"—इति। तद्यथा;—"पदं देवस्य नमसा व्यन्तः ०—० रणयन्त सन्दृष्टौ" † इत्यत्र "पश्यतिकर्मा"। भरद्वाजस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते, पश्वौ च विनियुक्ता। 'पदं' स्थानम्, अवस्थानं याथात्म्यम्, 'अग्नेः' 'देवस्य' दानादिगुणयुक्तस्य 'व्यन्तः' पश्यन्तो जानानाः। केन? 'नमसा' नमस्कारेण, 'स्तुत्या' मन्त्रेणेत्यर्थः। मन्त्रार्थपरिज्ञानादेव ह्यग्नेराध्यात्माधिभूताधियज्ञेष्ववस्थानं याथात्म्यतो दृश्यते। पदशब्दो हि स्थाने प्रसिद्धः‡; पदस्थोऽयमिति हि वक्तारो भवन्ति लोके। अथ वा 'नमसा' अन्नेन §, हविराख्येनाभ्युद्यतेनेति योज्यम्। 'अवस्यवः' अव इच्छमानाः, अन्नमात्मनः प्रार्थयमानाः। य एव मग्नेः स्तुतिभि र्विद्वांसो याथात्म्यम्; अन्नै र्वा अभ्युद्यतैः अव इच्छमानाः पश्यन्तोऽग्नि मुपासते। किन्तेषाम्? इति। उच्यते;—'अव आपन्'। किंलक्षणं पुनराप्नुवन्ति? 'अमृक्तम्' अमृदितम्; अनुपभुक्त मन्यैः। किञ्च; 'नामानि चित्'; ये चैते ग्रन्थमात्राध्येतारः, केवलच्छान्दसाः, नामान्यपि च मन्त्रभावेनावस्थितानि धारयन्ति, अनर्थज्ञाः, 'यज्ञियानि' यज्ञार्हाणि; तेऽपि 'भद्रायां' भन्दनीयायाम्, अग्नेः 'सन्दृष्टौ' सन्दर्शने 'रणयन्त' रमयन्त्यात्मानम्। तानपि भद्रेण चक्षुषा पश्यत्येवाग्निरित्यभिप्रायः॥

---

* १भा॰ २९९ पृ॰ १० पं॰।

† "पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम्। नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त सन्दृष्टौ॥"—इति ऋ॰ सं॰ ४, ४ २५, ४।

‡ "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु"—इत्यमरः ३, ३, ९१।

§ १भा॰ २११ पृ॰ १ख॰ ७अ॰ (२२)।

एव मेतस्मिन् मन्त्रे "पदं देवस्य नमसा व्यन्तः अवस्यवः अव आपन्"—इत्येतेषां पदाना मेकवाक्ययोगात् "व्यन्तः"—इत्यस्य शब्दस्य पश्यत्यर्थोऽप्युपपद्यते ॥

"इमा ब्रह्म ब्रह्मवाहः०—०पुरोळाशम्"*—इत्यत्र "खादतिकर्मा"। विश्वामित्रस्येय मार्षम्। रात्रिपर्यायेषु महारात्रिके पर्याये ब्राह्मणाच्छंसिनः† शस्त्रे विनियुक्ता। 'इमा' इमानि, 'ब्रह्म' ब्रह्माणि, ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तानि, अस्माभिः ब्रह्मणोऽस्य हविषः वहनसमर्थानि, त्वां प्रतिक्रियन्ते, उच्यन्त इत्यर्थः। यज्ञो ब्रवीति;—हे इन्द्र! 'आ बर्हिः सीद' आसीदेदं बर्हिः प्रति। आसीनस्त्वेतस्मिन् बर्हिषि, 'वीहि' भक्षय एत मस्मत्प्रदत्तं हे 'शूर'! 'पुरोडाशम्'‡॥ एव मेतस्मिन् मन्त्रे 'वीहि शूर पुरोडाशम्"—इत्येतस्मादेकवाक्यसंयोगात् "वीहि"—इत्येष शब्दः खादनार्थः प्रतीयति; किं मयं बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात् कुर्यात्? प्रसिद्धञ्च लोके कठिनद्रव्यस्य भक्षणम्, भक्षयति मोदकादीनि। तस्मात् सामर्थ्याद्भक्षणार्थोऽय मित्युपपद्यते ॥

"वीतं पातं पयसः"—इत्यत्राशनार्थः। "उत वां विचु०—०

---

* "इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद। वीहि शूर पुरोळाशम्॥"—इति ऋ० सं० २, १, २, २।

† सप्तहोतृषु द्वितीयो ब्राह्मणाच्छंसी (ऐ० ब्रा० ६, २, २.)। "सख्यं (सक्थि) ब्राह्मणाच्छंसिनः"—इति च ऐ० ब्रा० ७, १, १।

‡ "पुरो वा एतान् देवा अक्रत यत् पुरोडाशस्तत् पुरोडाशानां पुरोडाशत्वम्" —इति ऐ० ब्रा० १, २, ४।

उस्त्रियायाः" *। मैत्रावरुणेषा †। त्रिष्टुप्। दीर्घतमस आर्षम्। मित्रावरुणावुच्येते;—'उत वां' अपि युवयोः, एतासु 'विक्षु मर्त्यासु', एतेषु मनुष्येषु मदयितृषु वर्त्तमान मेतद् 'अन्धः' हविर्लक्षणम् ‡; यदि तस्मिन्नहनि मनुष्यैः भवद्भ्यां देयं पयस्याख्यम् § आज्याख्यञ्च ‖। तदेव 'गावः' एताः 'च आपः', 'देवीः' दानादि-गुणयुक्ताः। आसां गवा मुपकारं कुर्व्वन्त्यः, 'पीपयन्त' वर्द्धयन्ती-त्यर्थः। यदेतदन्नपानयोग्यम्, आज्यं सान्नाय्यलक्षणम् ¶ आभि-रद्भिर्गोभिश्च युवयो रन्धो वर्ध्यते। 'उतो नो अस्य' अप्यस्य हविषो-ऽस्मत्पूर्वो यजमानः पतिः। पूर्वं हि द्रव्यस्य यजमानः पति र्भवति, तदनन्तरं स तद् ऋत्विग्भ्यः समर्पयति—'देवतायै संस्कुरुतैतत्'—इति; ततस्ते तस्य हविषः पतयो भवन्ति। तानपेक्ष्य यजमानः 'पूर्व्यः पतिः'। तदपेक्षयैव ऋत्विज आहुः;—योऽस्मत्तः 'पूर्व्यः पतिः' अस्य हविषः, स 'दन्' भवति, ददादित्यर्थः। तेनाप्येतद् भवन्ता-वेवोद्दिश्य स्यात् प्रत्युत्सृष्टम्। एव मपि सदच भवत्यपि वयं यथा व्यादिष्ट मेव तेन पूर्वेण हविः-पतिना भवद्भ्या मेतद्भ्यः।

---

* "उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः। उतो नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्त्रियायाः॥"—इति ऋ० सं० २, २ १२, ४।

† मन्त्रे विनियुक्तेति शेषः।

‡ १भा० १०४ पृ० २पं० ७पं० (१)।

§ ऐ० ब्रा० २, ३, ९;—"धाना, करम्भः, परिवापः, पुरोडाशः, पयस्येत्येष वै हविर्व्यक्तिः"—इति।

‖ ऐ० ब्रा० १, १, ३;—'नवनीतेनाभ्यञ्जन्ति आज्यं वै देवानां सुरभि घृतं मनुष्याणा मायुतं पितृणां नवनीतं गर्भाणाम्"—इति।

¶ "सान्नाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम्"—इत्यमरः १, ७, १७।

तौ युवा मस्य हविषः, 'पयसः' पयस्याख्यस्य, 'उस्रियायाः' पयसा निष्पन्नस्य *, नातिकठिनस्य अशनयोग्यस्य स्वं भाग मस्माभिर्ह्रीयमानं 'वीतम्' अश्नीतं युवा मित्यर्थः। पिबतं च यदेतदाज्यस्य स्वं भागम् उपस्तरणाभिघारणसम्बद्धम्†। एव मस्मिन् मन्त्रे 'उस्रियायाः पयसा निष्पन्नस्य'—इति श्रूयमाणे पयस्याज्ये प्रतीयेते; तयो राज्यं पेयम्, तत् 'पातम्'—इत्यनेन सम्बध्यते, पारिशेष्याद् 'वीतम्'—इत्यस्य शब्दस्य पयस्यया सह सम्बन्धः; सा च नाति कठिना, नातिद्रवा, अशनयोग्या; तस्माद् "वीतम्" —इत्येष शब्दोऽशनार्थं इत्युपपद्यते; लोकेऽपि हि नातिकठिने नातिद्रवे अश्नाति-शब्दः प्रसिद्धः,—'अश्नाति पायसम्'—इति॥ निगमप्रसक्त मुच्यते;—"उस्रियेति गोनाम"‡; "उत्स्राविणः" हि तस्याः सकाशात् क्षीरादयो "भोगाः" भवन्ति॥

"क्राणाः"(४२)—इति§। एतदनवगतम्। "कुर्वाणाः"—इत्यर्थप्रतीतिः। "गोभिः क्राणा अनुषत"—इति निगमः। "गोभिः कुर्वाणा अस्तोषत"—इति निर्वचनम्, त्वा मिन्द्रेति शेषः। "त्वा मिन्द्र मतिभिः सुते सुनीथासो वसूयवः। गोभिः क्राणा अनुषत॥"—इति। हे 'इन्द्र!' त्वा मस्मिन् सोमे 'मतिभिः' मतिमद्भिः

---

* "पयस्य मामिक्षाद्यादि द्रप्सं दधि घनेतरत्॥"—इत्यमरः २, ९, ५१।

† "पञ्चावत्तैव वपाज्यस्योपस्तृणाति हिरण्यशकलो वपा हिरण्यशकल आज्यस्योपरिष्टादभिघारयति। तदाहुर्यद्धिरण्यं न विद्येत कथं स्यादिति। द्विराज्यस्योपस्तीर्य वपा मादाय द्विरुपरिष्टादभिघारयति"—इति ऐ० ब्रा० २, २, ४।

‡ १भा० १अ० ११ख० (२). ११९, १२० पृ०।

§ १भा० ३९९ पृ० १२ पं०।

'सुते' मेधाविभिरभिषुते सोमे ; य एव हि मतिमन्तः, त एव हि सोम मभिषोतुं शक्नुवन्ति, नेतरे मतिहीनाः । 'सुनीथासः' सुष्ठु ये सोतुं शक्नुवन्ति, ते सुनीथाः । 'वसूयवः' वसुकामाः । आह;- किं मेते कुर्वन्ति, मतिभिः सुते मेधाविभिरभिषुते सोमे ? उच्यते ;—'गोभिः' वाग्भिः, स्तुतिलक्षणाभिः * । अस्मिन्नभिषुते सोमे, आभिमुख्येन "कुर्वाणाः" 'अनुषत' "अस्तोषत" स्तुवन्ती-त्यर्थः । अभिषुतेषु सोमेषु किं मन्यदाभिमुख्येन करणाद् इन्द्रस्य गोभिः सुनीथाः स्तुवन्तः कुर्युः ; तस्मात् "क्राणाः"—इत्येव शब्दः, "कुर्वाणाः"—इत्येव मुपपद्यते ॥

"वाशी[४४]"—इति † । एतदनवगतम् । पक्षेण च अनेकार्थम् । "वाशीभिरश्ममयीभिरिति वा, वाग्भिरिति वा"—इति शब्दसमाधी । "वाश्यः" एवाभिधेयाः, वाच्याः वा । "आ तू षिञ्च०—०वह्निं युनक्त" ‡ । बुधस्य सोमपुत्रस्यार्षम् 'आषिञ्च' प्रक्षिप, एतं 'हरिं' हरितवर्णं सोमम् । क्व ? 'द्रोरुपस्थे' द्रुममयस्याधिषवणफलक-द्वयस्योपरि । एवं तावदध्वर्युरुक्तः, स हि सोम मुपावहरति । अधुनेतरानभिषवकर्तॄन् ब्रवीति ;— यूय मपि अनेनाध्वर्युणोपावहृत मेनं सोम मधिषवणफलकयोरुपरि 'वाशीभिः' एताभिः 'अश्मन्मयीभिः' "अश्ममयीभिः" 'तक्षत' संस्कुरुत, अभिषुणुतेत्यर्थः ;

---

* १भा० १अ० ११ख० (४) ७४, ७७ पृ० ।

† १भा० ९९९, १५ पं० ।

‡ "आ तू षिञ्च हरि मीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः । परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥"—इति ऋ० सं० ८, ५, १९, ४ ।

"ग्रावभिरभिषुण्वन्ति"—इति सुतम्। अथ वाऽय मन्योऽस्यार्द्धस्यार्थः ;—हे उन्नेतः! 'आसिञ्च' प्रक्षारय, तं हरितवर्णं सोम मनेन कलशेन। क्व? 'द्रोणपस्थे' द्रोणकलशस्योपरि। यूय मपि च हे होतारः! आसिच्यमानम् एनं सोमं 'वाश्रीभिः' "वाग्भिः" स्तुतिलक्षणाभिः 'तक्षत' संस्कुरुत ; यदस्यायज्ञिय मपूतं, तत् स्तुतिभिः पुनीतेत्यभिप्रायः। 'अश्मन्मयीभिः' व्यापनसमर्थाभिरित्यर्थः। यूय मपि हे अध्वर्यवः! पूत मेत मुद्गातृभिः, सोमं 'परिष्वजध्वं' ग्रहेषु, स्थालीषु च। 'कक्ष्याभिः' अङ्गुलीभिः ; अङ्गुलिभिरेव हि पात्रस्थः सोमो गृह्यते। यदेव चेदं ग्रहण मेष एव तस्य परिष्वङ्गः। परिष्वज्य च गृहीत्वा एनं सोमम् 'उभे' हविर्द्धान-'धुरौ' 'प्रति' 'वह्निम्' इव, वोढार मिव, अनड्वाहं 'युनक्त' एनं सोमं सादयतेत्यर्थः*। स हि सोमो हविर्द्धान-धुरोः† अधस्तात् खरे‡ साद्यते। एतस्मादेव चानडुद्-योजनदेशं प्रति सामान्याद्वह्नि मिव युनक्तेति लुप्तोपम मुपपद्यते। अत्र "वाश्रीभिस्तक्षते"—इति तक्षणयोगात् अश्ममय्यो वाच्य एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्तिः॥ एतस्मिन्नर्थे 'आ तु षिञ्च'—इत्यासेकशब्दो गौणः ; न हि सोमांशूनाम् अनभिषुतानाम् आसेकोऽस्ति कठिनत्वात् ; तस्मादेतस्मिन्नर्थे प्रक्षेपणमात्र मेव सिञ्चतेरर्थः। अथ वा 'आसिञ्चत हरिं द्रोणपस्थे'

* "अन्यतरोऽनड्वान् युक्तः स्यात्, अन्यतरो विमुक्तोऽथ राजान मुपावहरेयुः"—इति ऐ० ब्रा० १, ३, २। राजानं सोम मित्यर्थः "सोमो वै राजा (ऐ० ब्रा० १. ५. १)"—इत्येवमादिश्रुतेः।

† "हविर्द्धानाभ्यां प्रोह्यमाणाभ्या मनुब्रूहीत्याहाध्वर्युः"—इति ऐ० ब्रा० १,५,२।

‡ "खरे" म। खरशब्द इह वस्त्रार्थः ; वस्त्रे च सोममर्दनस्थानम्।

—इत्यतोऽनन्तरं वाश्री-शब्दः श्रूयमाणो वाङ्नामधेयत्वेनाप्युपद्यते एव *; सोमो हि द्रोणकलशस्योपरि आसिच्यमाने वाश्मिः स्तूयते। एव मर्थद्वय मभिप्रेत्य उभयथा भाष्यकारेणोक्तम्; —"वाश्रीभिरश्ममयीभिरिति वा वाश्मिरिति वा"—इति ॥

"अथ मपीतरो हरिः" मर्कटः, "एतस्मादेव" इति; हरित-वर्णत्वाद्धरिरुच्यते; "शिरीषकुसुमप्रख्याः केचित् पिङ्गलकप्रभाः, वानराः"—इति श्रूयन्ते रामायणे ॥

"विषुणस्य[४५]"—इति †। एतदनवगतम्। "विषमस्य"—इत्यवगमः। "न यातव इन्द्र जूजु०—०अपि गुर्त्तं नः ‡"। वसि-ष्ठस्येय मार्षम्। त्रिष्टुप्। उन्नीयमानसूक्ते माध्यन्दिने सवने शस्यते। हे भगवन्! "इन्द्र!" तथा कुरु, यथा 'न' इम मस्मदीयं 'यातवः' यातयितारः, यज्ञविघ्नकर्त्तारः, के चिदपि 'जूजुवुः' आगच्छेयुरित्यर्थः। किञ्च; हे 'शविष्ठ' बलिष्ठ! य एते 'वन्दनाः' वन्दितारः, लाड-गौडादयः §; जानपदीभिः 'वेद्याभिः' आकृतिभिर्युक्ताः; किं ब्राह्मणाः एते स्युः, उतान्यजातीयाः केचिदिति? अथ वा आवेदितव्याभिः प्रवृत्तिभिः युक्ताः; न हि तासां प्रवृत्तीना मन्तोऽस्ति, याभिस्ते प्रव-

---

* १भा० १ख० ११ख० (११). ७४, ७९ पृ०।

† १भा० ४०० पृ० १पं०।

‡ "न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः। स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः॥"—इति ऋ० सं० ५. २. २, ५।

§ राढ़-गौड़ेतिविभक्त-दक्षिणोत्तर-वङ्गदेशवासिप्रभृतयः, लाड़गौड़ेति प्रसिद्धा वङ्गिच्छनौयादयो वा। एतच्च जातिविद्वेषमूलक माख्यानम्, अस्ति च दाक्षिणात्यानां पवित्रमन्यमानाना मेष संस्कारः, दृत्तिकारश्चायं दाक्षिणात्यः। सायणस्तु 'वन्दनाः वन्दनानि रक्षांसि'—इत्याह।

र्त्तन्ते चपलत्वात्। किञ्च; येऽपि चैते श्रोत्रिया अपि सन्तः ‘शिश्न-देवाः’ शिश्नेन नित्य मेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीडन्त आसते, श्रौतानि कर्माणि उत्सृज्य *; तेऽपि युष्मदनुग्रहादिद मस्माकम् ‘ऋतं’ यज्ञम् ‘मा अपिगुः’ मा आगच्छन्तु; नास्माकं तैरपि यज्ञ मभिगच्छद्भि रर्थोऽस्तीत्यभिप्रायः। आह;—कीदृशास्तर्हि यज्ञ मागच्छन्त्विति? उच्यते;—‘स शर्द्धत्’ स एवोत्सहता मिम मस्मद्यज्ञ मागन्तुम्, य एव ‘अर्यः’ ईश्वर आत्मीयाना मिन्द्रियाणाम्, जितेन्द्रिय इत्यर्थः। यश्च ‘विषुणस्य’ “विषमस्य” यज्ञविध्वंसयितुः ‘जन्तोः’ मनुष्यस्य निग्रहाय समर्थः; येन परिपाल्यमाना एतं यज्ञ मविघ्नेन समापयेमहीत्यभिप्रायः॥ एव मेतस्मिन् मन्त्रे “यातवो वन्दनाः शिश्नदेवाश्च मा आगच्छन्तु”—इति प्रतिषिद्धेष्वेतेषु अनिष्टत्वादेतेषां ‘स शर्द्धदर्यः’—इति श्रूयमाण मर्थवत्त-मनुष्या-भ्यागमनविषय मेतद्भवति, तस्येष्टत्वात्; स चाभ्यागतः सन्नवश्यं ‘विषुणस्य’ “विषमस्य” मनुष्यस्य निग्रहं करोति; तस्माद् “विषुणस्य”-शब्दो विषमस्येत्युपपद्यते। यदा तु ऋतशब्दस्य “सत्यं वा”—इत्येतदर्थवचनं भवति, तदाऽस्माकम् ‘ऋतं’ सत्यम्, एवं-लक्षणाः पापकर्माणो ‘मा अपिगुः’—इत्येवं योज्यम्। अपिगुरिति चैष गमिस्तदा ज्ञानार्थः। एव मप्युपपद्यत इत्यतो भाष्यकारेणो-क्तम्,—“सत्यं वा यज्ञं वा”—इति॥ ३ (१९)॥

---

* “शिश्नदेवाः। शिश्नेन०——०। अब्रह्मचर्या इत्यर्थः”—इति सायणः। इह मूलेऽप्येव मेव (पृ० ४४९ पृ० ११ पं०)। म-पुस्तके तु ‘शिश्नोदरपरायणाः’—इति टीकितं च दृश्यते। एवञ्चेह ‘शिश्नदेवाः’—इत्यस्य ‘शिवोपासकाः’—इत्यर्थः केषाञ्चिद् वेदसमालोचकानां विचारणीय एव।

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि। उप बर्बृहि वृषभाय बाहु मन्य मिच्छस्व सुभगे पतिं मत्॥ आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि जाम्यतिरेकनाम बालिशस्य वासमानजातीयस्य वोपजन उपधेहि वृषभाय बाहु मन्य मिच्छस्व सुभगे पतिं मदिति व्याख्यातम्॥४(२०)॥

"जामि[४१]"—इति *। एतदनेकार्थम्। भगिनी, बालिशः, पुनरुक्तम्बास्याभिधेयानि। प्रकरणादेवैतेषा मन्यतम मस्मिन्नवतिष्ठते। यथानेन तावद्भगिन्युच्यते, तथेद मुदाहरणम्;—"आ घा ता०—० मत्" †—इति। इयं यमी ‡ किल यमं प्रार्थयाञ्चकार;—एहि मैथुनाय सङ्गच्छावहा इति; ता मकामयमानोऽसावनयर्चा प्रत्युवाच §;— 'आ घा ता गच्छान्'। 'घा'—इत्यनर्थक एव, 'आ गच्छान्' आगमिष्यन्तीत्यर्थः। आह;— कानि? उच्यते;—'ता' "तानि उत्तराणि युगानि आगमिष्यन्ति", तेऽपि काला न तावत् साम्प्रतं वर्त्तन्ते इत्यभिप्रायः ‖। येषु किम्? 'यत्र' येषु 'जामयः' भगिन्यः भ्रातॄणाम् "अजामि"-योग्यानि मैथुनसम्बन्धानि

* १भा० ४०० पृ० ४पं०।

† ऋ० सं० ७, ६, ७. ५।

‡ विवस्वतः सूर्यस्य पुत्रौ। रूपक मेतदाख्यानम्।

§ ऋ० मं० १०मं० १अ० १०सू १—१४ ऋक्षु यमयमीसंवादो द्रष्टव्यः।

‖ तथा चैतरेयकम्;—"कलिः शयानो भवति, सञ्जिहानस्तु द्वापरः, उत्तिष्ठंस्त्रेता भवति, कृतं सम्पद्यते चरन्।"—इति ७, ३, ३।

"कर्माणि" "करिष्यन्ति" * ; कलियुगान्ते हि तादृशः सङ्करो भवति, न चेदं कलियुगं वर्त्तते इत्यभिप्रायः। यतो न तावदद्यापि सङ्कीर्णो वर्णसङ्करधर्मः ; स्वाचारा एव तावत् प्रजाः। अतो ब्रवीमि ;—'उप बर्बृहि' उपधेहि। कस्मै ? 'वृषभाय' तवोपरि रेतः-सेक्तु मन्यकुलजो योग्यः, तस्मै। किं मुपबर्ब्रहि ? इति 'बाहुम्'। शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न भविष्यामीति। यतो ब्रवीमि ;—'अन्य मिच्छस्व' अन्य मन्वेषयस्व। हे 'सुभगे !' 'पतिं', 'मत्' मत्त इत्यर्थः †॥ एव मेतस्मिन् मन्त्रे, सूक्ते वा संवादाधि-काराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥

"जामि"—इत्येतदेव स्वरान्तशब्दरूपम् "अतिरेकनाम" भवति, पुनरुक्तनामेत्यर्थः। तदुत्तरच्च लक्षणतो भविष्यति; तद् यत् समान्या मृचि समानाभिव्याहारं भवति, तत् "जामि भवति"—इति ‡ पुनरुक्ताभिधानत्वेन। जामिशब्दस्य पर्य्येष्यो निगमः॥

"बालिशस्य वा" बालिशस्यैतदेव नाम। बालिशो मूर्खः ; स हि बाल इव शेते, प्रमादित्वाद्धर्मकार्येषु। एतस्यापि पर्य्येष्यो निगमः॥

"असमानजातीयस्य वा" असमानजातीयो हि पुरुषस्य भगि-

---

* पौराणिकानां मतपोषकं भविष्यद्वचन मिदम्।

† "गार्हपत्येन पत्नीषु प्रत्यञ्चाङ्गेतो दधाति, प्रजात्यै, प्रजायते प्रजया पशुभिर्य एवं वेद; तस्मात् समानोदर्य्यास्वसान्योदर्य्यायै जायाया अनुजीविनी जीवति"—इत्यादि च ब्राह्मणं द्रष्टव्यम् ऐ० ब्रा० ३, ३ ११।

‡ "जामि वा एतद् यज्ञे क्रियते यत्र समानीभ्या मृग्भ्यां समानेऽहन् यजतीति"—इति ऐ० ब्रा० २, ५, २।

न्याय्यो भ्राता, सा हि स्त्रीत्वादेवातुल्यजातीयेव पुरुषस्य भवति। जामिरित्येतस्मिन् शब्दे 'मिः'—इत्येष "उपजनः"; यदेवास्मं भवति 'जा'—इति, तदेव जामीति। उभयथापि मन्त्रे प्रयोगो द्रष्टव्यः। "अन्य मिच्छस्व सुभगे! पतिं मत्—इति व्याख्यातम्"। निगद-सिद्ध मेवैत दित्यर्थः। अथ वैतानि पदान्यधस्तात् तत्र तत्र व्याख्यातानि; तद् यथा,—"अन्यो नानेयः" *—इत्येवमादि उपे-क्षितव्यम्॥ ४ (२०)॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृ-थिवी महीयम्। उत्तानयोश्चम्वो३ र्योनिरन्तरत्रा पिता दुहितुर्गर्भ माधात्॥ द्यौर्मे पिता माता वा पालयिता वा जनयिता नाभिरत्र बन्धुर्मे माता पृथि-वी महतीयं बन्धुः सम्बन्धनान्नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन्त्सना-भय इत्याचक्षते सम्बन्धव इति च ज्ञातिः सञ्ज्ञा-नात्। उत्तानयोश्चम्वो३ र्योनिरन्तः। उत्तान उत्त-तान ऊर्ध्वतानो वा तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः। (शंयुः सुखंयुः†।) अथानः शं योर-रपो दधात। रपो रिप्र मिति पापनामनी भवतः शमनञ्च रोगाणां यावनञ्च भयाना मथापि शंयुर्बार्ह-

* पू० १अ० ३पा० १ख०;—११ पृ० १पं।

† नास्त्येष पाठः क-ख-ग पुस्तकेषु।

स्पत्य उच्यते* । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ ५ (२१) ॥

॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ४, ३.

"पिता[४०]"—इति † । एतदनवगतम् । "पाता वा पालयिता वा"—इत्यवगमः । "द्यौर्मे पिता"—इति ‡ । इयमस्यवामीयं दीर्घतमस आर्षम् । तृतीयसवने वैश्वदेवे शस्यते । 'द्यौर्मे पिता' येयं द्यौः, उपरि स्थिता द्युलोकाख्या, एष एव मम पिता । द्यौरह मित्येवं वैवाहिके कर्मणि द्युलोकभावेन पित्रा आत्मान मभिसम्पाद्यमानं दृष्ट्वैव माह मन्त्र दृक्'—'द्यौर्मे पिता'—इति । 'जनिता' जनयिता, उत्पादयितेत्यर्थः । आह ;–कथम् ? उच्यते ;— 'नाभिरत्र' महन मेव नाभिः §, अत्र एतस्मिन् द्युलोकलक्षणे पितर्युदकदानेनानुगृहीतरि ‖ सति सन्तानोत्पत्यनुग्रहक्रमेणैव शुक्रात्मनोत्पत्तिरुपपद्यते ¶ ;—इत्येव मभि समीक्ष्योक्तम् 'द्यौर्मे पिता, जनिता, नाभिरत्र'—इति । 'बन्धुः मे' अन्नसम्बन्धकारणाद् बन्धुः

* "स्पत्य उच्यते"—इति ख ।

† १भा० ४०० पृ० ११पं० ।

‡ ऋ० सं० २ ३, १०, ३ ।

§ "प्राणो वा अयं सन्नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम्, प्राण मेवास्मिंस्तद्दधाति ।"—इति ऐ० ब्रा० १, ४, २ ।

‖ उदकस्य रेतस्त्वं स्पष्ट माम्नात मैतरेयके "रेतो वा आपः"—इति १, ९, २ ।

¶ "सा न्यूङ्खयति, अन्नं वै न्यूङ्खोऽन्नाद्रेतः सिच्यते, रेतसः प्रजाः प्रजायन्ते"—इति ऐ० ब्रा० ७, ५, १० ।

मे 'माता पृथिवी महीयम्'—इति। मातुर्मन्त्रेण पृथिवीत्वं सम्भाव्यमानं दृष्ट्वैव माह;—'बन्धु में माता पृथिवी महीयम्' —इति। उदकं हि द्युलोकात् पतितम्, पार्थिवेन धातुना सम्पृक्तम्, ओषधिभाव मागम्य, शरीरभावेनावतिष्ठते,—इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितरौ उच्येते तत्र तत्र। तद्यथा;—"यदन्तरा पितरं मातरञ्च*" इत्येव मादि। तत्कृतस्य ह्युपकारस्याभावे सतीतरौ मातापितरावकिञ्चित्करावेव भवतः। तस्मादुपपद्यते द्यावापृथिव्योर्मातापितृभावः। आह;—किं मेते द्यावापृथिव्यौ अन्यत् किञ्चिदनपेक्ष्यैव सर्वभूतानां मातृपितृभावं बिभ्रतः, उत अन्यदपि किञ्चिदपेक्षेते? इति। उच्यते; — अनयोः 'चम्वोः' † द्यावापृथिव्योः 'उत्तानयोः' ‡ ऊर्द्ध मेव ह्येनयोः अन्तरा च प्रतिधारणीयोऽन्तः प्राणः तत इति उत्ताने द्यावापृथिव्यौ; प्राणेन हीमे वायुना सूत्रभूतेन विधृते तिष्ठतः §; एतयोः द्यावापृथिव्योरुत्तानयोः य एषोऽन्तरिक्षाख्यः 'अन्तः' मध्ये 'योनिः', 'अत्र' एतस्मिन्नवकाशदानोपकारप्रवृत्ते सति 'पिता' "पर्जन्यः" द्युलोकाख्यः; द्यौरेव हि रसान् प्रार्जयति, तस्मात्

* "द्वे स्रुती अशृणवं पितृणा महं देवानां मुत मर्त्यानाम्। ताभ्या मिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्च॥"—इति ऋ० सं० ८, ४, १२, ५।

† 'सर्वस्य चम्वोः भोगसाधनयोः'—इति म० पु० टी०।

‡ 'उत्कृष्टं तानयोरूर्द्धं तानयोर्वा'—इति म० पु० टी०।

§ तथा चैतरेयकम्;—"वायुर्वै यन्ता, वायुना हीदं यन्तं मन्तरिक्षं न समृच्छति"—इत्यादि ऐ० ब्रा० १, ५, ८। किञ्च; इत उत्तरं त्रिलोकप्रतिष्ठाम मन्यथैव वर्णितम्। तथा हि;—'द्यौरन्तरिक्षे प्रतिष्ठिता, अन्तरिक्षं पृथिव्याम्, पृथिव्यापसु, आपः सत्ये, सत्यं ब्रह्मणि, ब्रह्म तपसि;—इत्येता एव तत्प्रतिष्ठाः।"—इति ऐ० ब्रा० ३, ६, ९।

मेवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता। 'दुहितुः' "पृथिव्याः" उपरि 'गर्भं' सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् * 'आधात्' आदधाति, ददातीत्यर्थः। अत्र पृथिव्येव दुहितृशब्देनोक्ता; सा हि द्युलोकाद् 'दूरे निहिता', अथ वा सा हि द्युलोकं 'दोग्धीति' दुहिता;—सा हि द्युलोकात् पतित मुदक मुपजीवत्येवादूरे निहिता, दोग्धि वा † ॥ एवं द्यावापृथिवीभ्या मन्तरिक्षेण चावकाशदानेनानुगृह्यमाणान्येतान्यस्मदादीनि भूतान्युत्पद्यन्त इति. एत दनेन मन्त्रेण मन्त्रदृशाख्यापितम्। अत्र मातृपितृसम्बन्धात् पितृशब्दः पितर्य्येवेत्युपपत्तिः। पिता माता चाय मेतदाशासमं मन्येत ॥

"शंयोः[(४८)]"—इति ‡। एतदनवगतम्। पञ्चम्यन्तं वा षष्ठ्यन्तं वा सत् §। न चैवं यजमानोऽर्थात्तस्माद् बृहस्पतिपुत्रादर्थं मपेक्षते, किं कारणम्? स्वत एव हि ते विधातुं समर्थाः; न च बृहस्पतिपुत्रस्य शंयोः मम पितरः किञ्चिदेभिः पितृभिः विधीयेतेति। एवं पञ्चम्यर्थासम्भवं षष्ठ्यर्थासम्भवञ्च पश्यन् भाष्यकारः, 'शंयोः'—इत्येकं पदं, द्वितीयान्ते द्वे पदे चकार, 'शम्'—इति, 'योः'—इति च। श मित्यस्य "शमनम्" अर्थं निराह, योरित्यस्य "यावनम्"—इति। एवं द्वितीयान्तेन परिणामं कृत्वा अर्थं निराह, तथा हि

---

* अत एवाह;—"पुनर्वा एत मृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्त्यद्भिरभिषिञ्चन्ति"—इत्यादि। ऐ० ब्रा० १, १, ३।

† पु० ३अ० १पा० ३ख० २५९ पृ० १पं० द्रष्टव्यम्।

‡ १भा० ४०० पृ १५ पं०।

§ निगमश्चैषः;—"बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम्। त आ गतावसा शन्तमेनाथा नः शंयोररपो दधात॥"—इति ऋ० सं० ७, ९, १७, ४।

वाक्येन सम्बध्यत इति। कस्य शमनं कस्य वा यावनम्? इति पुनः पर्यनुयोगे प्राप्ते "रोगाणाम्", "भयानाम्" "च" इत्यध्याजहार भाष्यकारः। रोगशमनञ्च दधात, भययावनञ्च; शान्तरोगा यथा स्याम, प्रक्षीणसर्वभयाश्च, तथा कुरुतेत्यभिप्रायः। किमेतावदेव? नेत्युच्यते;—यदपि चान्यत् किञ्चिद् 'अरपः' अपापम्, तदपि चास्मभ्य मेव 'दधात' दत्तेत्यर्थः॥ एव मेतत् पदम् एकम्, अर्थासम्भवाद् द्विधा प्रविभज्य भाष्यकारेण निरुक्तम्। इत्थ मप्यर्थासम्भवे सति निर्वचनप्राप्तिरस्त्येव, तद्यथा उद्गीथशब्दे,—"प्राण एवोत् प्राणेन ह्युत्तिष्ठति, वाग् गीर्वाचो ह गिर इत्याचक्षते, ऽन्नं थ मन्नेन हीदं सर्वं स्थितम् (छा० आ० २, ३.)"—इत्येवमादि; तस्मादुपपद्यते। प्रथमान्त मेव सत् कस्माद् द्वितीयान्तत्वेन विपरिणम्यते शंयु मिति? एव मपि न विरुध्यति; तथापि हि न कश्चिदर्थ उपपद्यते, तस्माद् युक्त मिति॥ "रपो रिप्रम्"—इति, अत्र रिप्रशब्दस्य रपःशब्देनार्थसामान्यात् तत्त्व मुक्तम्। यदेवास्य 'रिप्रम्' अमेध्यम्, तच्छुध्यतीति ह विज्ञायते॥

"अथापि शंयुर्बार्हस्पत्य उच्यते" अपि शं, योः,—इत्यनेन पदद्वयेन शमनयावने रोगभययोः उच्येते, द्वेधा प्रविभक्तेन; अपि यथावस्थितेनैवाविभक्तेन बार्हस्पत्यो बृहस्पतेः पुत्र उच्यते*; तस्याप्येतदेव नामेत्यपिशब्दः. "तच्छं योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये"—इति†॥

---

* तस्य चर्क्संहितायां चत्वारि सूक्तानि;—९, ४, १-१ १-५।

† "शीमानं शं योमंसकाय सूनवे (ऋ० सं० १, २, ४, ९)" इति, "तच्छं योः सुम्न मीमहे (ऋ० सं १, २, २१, ४)"—इति च निगमौ।

इयं शक्वरी। शंयोरेव बृहस्पतिपुत्रस्यार्षम्। शंयोर्वाके* विनियुक्ता। शंयोरात्मान मभि सम्पाद्य, अथवा शंयोः सकाशादिति के चिन्मन्यन्ते। अनेन कर्मणा 'शंयोः' वाकाख्येनां 'तत्' तदा आभिमुख्येन 'वृणीमहे'। किं पुनस्तत्? 'गातुं यज्ञाय' "गमनम्" अस्मै "यज्ञाय" देवान् प्रति, 'गातुं यज्ञपतये' "गमनं" चास्मै "यज्ञपतये" देवान् प्रति। किञ्च; 'दैवी स्वस्तिरस्तु नः' देवानुग्रहादस्माकं स्वस्तिरस्तु; मा नो देवाः काञ्चिदापद मुत्पादयन्त्वित्यभिप्रायः। 'स्वस्ति मानुषेभ्यः' मनुष्येभ्योऽपि सकाशात् मा नः का चिदापदस्तु। 'ऊर्द्ध्वं जिगातु भेषजम्' गच्छत्वेतद्भेषजम्, भयशादयितृ कर्म; यावज्जीव मनवच्छिन्न मविगुणमूर्द्ध्वगमनयोग्यम् अस्माक मस्त्वित्यभिप्रायः। किञ्च; 'शन्नो अस्तु' शं सुखं नोऽस्माकं भवतु, 'द्विपदे' मनुष्यादिकाय 'चतुष्पदे' गवादिकाय च॥ 'शंयुः' बृहस्पतिपुत्रः—इति, एतस्मिन् मन्त्रे विशेषलिङ्ग मस्ति; तदन्यस्मात् श्रुतिलिङ्गात् कुतश्चिदुपलभ्यमानाद्वा एतावदेव त्वेतस्मात् मन्त्रात् सिद्धम्;—एक मेवेदं पद मविभक्तम् निरुच्यते, पञ्चम्यन्तं वा षष्ठ्यन्तं वा; न यथा पूर्वस्मिन्‡ मन्त्रार्थासम्भवाच्छंयुशब्दो विभक्त इति॥ ५ (२१)॥

इति निरुक्तवृत्तौ नवमस्याध्यायस्य (चतुर्थाध्यायस्य)

तृतीयः पादः॥ ४, ३.

---

* वाक-परिचयस्तु "गायत्रेषु प्रति मिमीते (ऋ० सं०१, ३, १८, ४)"—इति मन्त्रे "वाकेन वाकम्"—इत्यस्य सायणीयव्याख्यायां द्रष्टव्यः।

† वाकलक्षणमन्त्रप्रयोजककर्मणेति यावत्।

‡ पु० ४९५ पृ० १५ पं०।

## ॥ चतुर्थः पादः ॥

## अदितिरदीना देवमाता ॥ १ (२२) ॥

"अदितिः(४९)"—इति*। एतदनवगतम्। "अदीना"—इत्यवगमः। "देवमाता" अभिधेया, ऐतिहासिकपक्षेण; नैरुक्तपक्षेण पुनर्यान्येतस्या माववच्यमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्ते† एतान्येवादितिशब्देनोच्यन्ते ॥ १ (२२) ॥

**अदिति द्यौरदितिरन्तरिक्ष मदितिर्माता स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जात मदितिर्जनित्वम् ॥ इत्यदितेर्विभूति माचष्ट एनान्यदीनानीति वा। यमेरिरे भृगवः। एरिर इतीर्त्तिरुपसृष्टोऽभ्यस्तः ॥ २ (२३) ॥**

"अदितिर्द्यौः०—०मदितिर्जनित्वम्" ‡। राहूगणस्य गोतमस्येय मार्षम्। तृतीयसवने सर्वस्तोमेष्वेव, वैश्वदेवस्य शस्त्रस्य परिधानीयैषा §। 'अदितिः' एव देवमाता 'द्यौः', 'अदितिः' अदितिरेव च 'अन्तरिक्षम्', 'अदितिः' एव 'माता' सर्वभूतनिर्मात्री, 'सः' एव च 'पिता' पालकः, 'सः' एव हि 'पुत्रः'; सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुनः पापात् त्रायते; अथ वा सैव निष्ट-

---

* १भा० ४०१ पृ० १पं०।

† ऐ० ब्रा० ३, ३, ७ द्रष्टव्यम्।

‡ ऋ० सं० १, ६, १६, ५।

§ अस्य च विधायकं ब्राह्मणम्; "वैश्वदेवं शंसति" इत्यादि ऐ० ब्रा० ३, ३, ७।

णाति, सर्वभूतानां यन्निर्वर्त्तव्यं दातव्य मित्यर्थः। येऽपि चैते 'विश्वेदेवाः' सर्वे देवाः, एतेऽपि 'अदितिः' एव। 'पञ्चजनाः' गन्धर्वादयः* 'अदितिः' एव। सर्वथापि किं बहुना, यावदेतत् किञ्चित् 'जातं' च 'जनित्वं' च जनिष्यमाणञ्च सर्वं मप्येतद् 'अदितिः' एव। एव मनेन मन्त्रेण मन्त्रदृक् "अदितेर्विभूति माचष्टे" देवमातुस्तत् सर्वं मप्युपपद्यत एव; माहाभाग्याद्देवतायाः। तदुत्तरत्र† वक्ष्यामः। एव मैतिहासिकपक्षेण; नैरुक्तपक्षेण पुनः "एनानि" द्युलोकादीनि सर्वाणि "अदीनानि" अनुपक्षीणानि इति योज्यम्; न ह्येषां क्षयोऽस्तीति॥

"एरिरे(५०)"‡—इति। एतदनवगतम्। "आ ईरिरे"—इत्यवगमः। "यमेरिरे भृगवो०—०न राजति" §। दीर्घतमस इय मार्षम्। जगती। प्रातरनुवाकाश्विनयोरग्निमारुते च शस्यते। 'यम्' अग्नि माभिमुख्येन ईरितवन्तः, प्रेरितवन्तः, स्थापितवन्त इति यावत्; आत्माभिप्रेतार्थसिद्धये 'भृगवः'। 'विश्ववेदसं' सर्ववेदसं, सर्वस्य वेत्तारं, सर्वधनं वा। क्व पुनः 'एरिरे'? 'नाभा' पृथिव्याः नाभौ अवस्थितम्, उत्तरवेदिमध्यगतायाः पृथिव्या वेद्या उपरि। केमं

* "सर्वेषां वा एतत् पञ्चजनानां मुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणाञ्च, पितॄणां चैतेषां वा; एतत् पञ्चजनानां मुक्थम्। सर्वे एनं पञ्चजना विदुः।"—इति ऐ० ब्रा० ३, ३, ७।

† "माहाभाग्यात् देवताया एक आत्मा बहुधा स्तूयते एकस्यात्मनोऽन्य देवाः प्रत्यङ्गानि भवन्ति।"—इति दै० का० ७, १, ४।

‡ १भा० ४०१ पृ० ५ पं०।

§ "य मेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना। अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति॥"—इति ऋ० सं० १, १, ११, ४।

प्रेरिरे? 'भुवनस्य' उदकस्य 'मज्मना' मननीयेन वीर्येणान्नेन दुर्विलङ्घ्येन। किं तस्य? 'त मग्निं' हे यजमान! त्व मपि 'गीर्भिः' वाग्भिः स्तुतिलक्षणाभिः आभिमुख्येन स्थित्वा 'हिनुहि' प्रेरय। तस्मिन् तस्मिन् कर्म्मणि वर्त्तमान मग्निहोत्रादौ; यथा भृगवः प्रेरितवन्तः, तथा 'स्वे दमे' स्व एव गृहे; मा कस्य चिद्दार्लि-ष्ट्येऽवर्त्स्यत इत्यभिप्रायः। किंलक्षणं पुनरग्नि माहिनुहि? 'य एको वस्वः' एक एव यो वसुनो धनस्य दाता। 'वरुणो न' वरुण इव, यथा वरुणः समुद्रान्तर्गतानां धनानाम् इष्टे, एवं यः सर्वस्यैव धनस्य 'राजति' इष्टे इत्यर्थः। राजतिरैश्वर्यकर्मसु पठितः; —"क्षियति(१), राजति(४)"—इति *। "एरिरे—इति", "ईर्त्तिः" अयं धातुर्गतिकर्मा;—"ईर्त्ते(७९), अयति(८१)"—इति गतिकर्मसु पठितम् †। स पुनरय माङोपसर्गेण "उपसृष्टोऽभ्यस्तः" च; पुनः पुनरेरितवन्त इत्यर्थः॥ २ (२२)॥

उत स्मैनं वस्त्रमथिं न तायु मनु क्रोशन्ति क्षितयो भरेषु। नीचायमानं जसुरिं न श्येनं अव स्याच्छा पशुमच्च यूथम्॥ अपि स्मैनं वस्त्रमथि मिव वस्त्रमाथिनं वस्त्रं वस्तेस्तायुरिति स्तेननाम संस्त्यान मस्मिन् पापक मिति नैरुक्तास्तस्यतेर्वा स्यादनुक्रोशन्ति क्षितयः सङ्ग्रामेषु भर इति सङ्ग्रामनाम भरतेर्वा हरतेर्वा नीचा-

* १अ० १ख० १२अ० (१), (४) १९१, १९१पृ०।

† १अ० १ख० १४अ० (७९), (८१). १९८, १५१ पृ०।

यमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुच्चितं भवति। जस्त मिव श्येनं श्येनः शंसनीयं गच्छति। अवश्याच्छा पशुमच्च यूथम्। अवश्यापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा यूथं यौतेः समायुतं भवति। इन्धान एनं जरते स्वाधीः। गृणाति मन्दो मन्दतेस्तुति-कर्म्मणः। प्र मन्दिने पितुमदर्चता वचः। प्रार्चत मन्दिने पितुमद्वचो गौर्व्याख्यातः ॥ ३ (२४) ॥

"जसुरिः(५१)"—इति *। एतदनवगतम्। "जस्तम्"—इत्यव-गमः। "उत स्मैनं"—इति † निगमः। वामदेवस्यार्षम्। त्रिष्टुप्। दधिक्राव्णे सूक्ते। दधिक्रावा चेन्द्र एव, वायुर्वा मध्यस्थानत्वात् ‡। 'उत स्मैनम्' अपेन मिन्द्रम् 'अनु क्रोशन्ति' आभिमुख्येन क्रन्दन्ति, आह्वयन्ति। 'चितयः' मनुष्याः। क्व? 'भरेषु' सङ्ग्रामेषु। कथं पुनरभिक्रन्दन्ति? 'वस्त्रमथिं न' वस्त्रापहर्त्तार मिव 'तायुम्', यथा के चिज्जनाः कश्चिद्वस्त्रापहर्त्तारं तायुं दृष्ट्वा कश्चिदन्य मात्मनस्त्रा-णार्थं मभिक्रन्देयुः, एव मेत मिन्द्रम् अभिक्रन्दन्ति सङ्ग्रामेषु, परैरर्द्यमानास्त्राणार्थं मात्मनः। किञ्च; अपि चैनं तायुं 'नीचाय-मानं' नीचैर्गच्छन्तं 'जसुरिं न' जसुरि मिव, "जस्त मिव" 'श्येनं' बद्धम्, स्नायुतन्तुना य एष याजिक इति § प्रसिद्धो राज्ञाम्; स

* १भा० ४०१ पृ० ८ पं०।
† ऋ० सं० ३, ७, ११, ५।
‡ पु० १४७ पृ० १ख० ७पा० ५ख०। पं० १०अ० ३पा० १ख०। १भा० १४१पृ० (७)।
§ "पाशिक इति"—इति म।

हि बहुत्वादुत्पतितु मत्यर्थं न शक्नोति, नीचैरेव गच्छति; गत्वा च शशकादीनि हिनस्ति सत्त्वानि। स यथा जनैरभिक्रन्द्यन्ते, तथा चैन मभिक्रन्दति। आह ;—क मर्थ मभिसन्धाय? इति। उच्यते ;—'अवस्य अच्छ' कीर्त्तिस्याभिसन्धाय ; कथं नाम श्रूयेमहि? प्रशस्येमहि जित मेभिरित्येत मर्थं मभिसन्धाय *। 'पशुमच यूथम्' अनेक-पशुजातिसंयुक्तं पशुयूथ मभिसन्धायैतदस्माकं स्यादित्येव मभि-क्रन्दतीत्येष समस्तार्थः॥

अथैकपदनिरुक्तम्।—"वस्वं वस्तेः" आच्छादनार्थस्य (अदा॰ आ॰); तद्याच्छाद्यते। "तायुरिति"—एतत् "स्तेनमाम" †, "संस्त्यानं" संहतम् "अस्मिन् पापकं" भवति "इति" एवं "नैरुक्ताः" मन्यन्ते। "तस्यतेः वा स्यात्" चयार्थस्य (दि॰ प॰); उपचीणो ह्यसौ भवति, अधार्मिकत्वात्; परलोक मनपेच्य कल्पयति कर्माणि। चितयो मनुष्याः ‡। "भर इति सङ्ग्रामनाम §" भ्रियन्ते तस्मिन् योद्धारः "हरतेः वा" ह्रियन्ते हि तस्मिन् जीवितानि, वसूनि च। "श्येनः शंसनीयं गच्छति" शीघ्रत्वात्। "यूथं यौतेः"; तद्धि "समायुतं भवति" एकत्र मिश्रीभूतं स्त्रीपुरुषबालवृद्धैः पशुभिः॥ एव मिह नीचाय-मानं श्येन मित्यनेन सम्बन्धाज्जसुरिर्बद्ध इत्युपपद्यते; न ह्यबद्धः श्येनो नीचैरयते॥

---

* "सर्वं नन्दन्ति यशसागतेन"—इति ऋ॰ म॰ १, २, २।

† १भा॰ ३९१ पृ॰ ३ख॰ २४ख॰ (७); ३९२ पृ॰ (७,।

‡ १भा॰ १०९ पृ॰ २ख॰ ३ख॰ (९); १०८ (९)।

§ १भा॰ २९४ पृ॰ २ख॰ १०ख॰ (५); २९८ पृ॰ (५)।

"जरते(५९)"—इति *। एतदनवगतम्। धातोरस्वार्थे प्रवृत्ति रेवानवगमः। "दिवस्परि०—०जरते स्वाधीः"—इति †। वत्सप्री-भौलन्दनः, तस्यैव मार्षम्। उक्थस्याग्नेरुपस्थाने विनियुक्ता। 'दिवस्परि' 'दिवः' द्युलोकादित्यर्थः। 'प्रथमम्' अयम् 'अग्निः' 'जज्ञे' आदित्या-त्मना। 'द्वितीयम्' 'अस्मत् परि' अस्मदधि, अस्मत्तो जायते, पार्थिवात्मना। 'तृतीयम्' 'अप्सु' अन्तरिक्ष लोके वैद्युतात्मना जायते। "आपः"—इति अन्तरिक्षनामसु पठितम् ‡। नृणां मनस्यवस्थितो 'नृमणाः'; नृषु वा मनोऽस्य, स नृमणाः। योऽय मेक एव त्रिषु स्थानेषु जायते §, त मेवङ्गुणयुक्तं 'स्वाधीः' शोभनधीः 'इन्धानः', 'अजस्रं' नित्यं 'जरते' स्तौति, यः, स एव 'स्वाधीः' सुप्रज्ञ इत्यर्थः। इन्धानो हि किं मन्यत् स्तुतेः कुर्यात्? तस्मात् "जरते"-इत्यस्य शब्दस्य "गृणाति"-इत्यर्थ उपपद्यते॥

"मन्दिने(६१)"—इति ‖। एतदनवगतम्। "मन्दतेः" स्तुत्यर्थस्य। मन्दनीयः स्तुतिमान् वेत्यर्थप्रतीतिः। "मन्दति(१८), शंसति(२५)" —इति स्तुतिकर्मसु पठितम् ¶। "प्रमन्दिने पितुमद ०—० हवामहे" **। कुत्सस्यैव मार्षम्। छन्दोमेषु तृतीयेऽहनि मरुत्वतीये

---

* १भा० ४०१पृ० ११पं।

† "दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥"—इति ऋ० सं० ७, ८, १८, १।

‡ १भा० २४ पृ० १ख० २ख० (८); २८ पृ० (८)।

§ ऋ० सं० २, १, ११, १ ऋक् द्रष्टव्या; मत० ग्रा० ७, १, १२ कण्डिकायाश्च।

‖ १भा० ४०१ पृ० १५पं०।

¶ १भा० ३३१ पृ० ३ख० १४ख० (१८), (२५); ३३४ पृ० (१८), ३३५ पृ० (२५)।

** "प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना। अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे॥" ऋ० सं० १, ७, ११, १।

मन्त्रे निविद्धानीयसूक्तस्य * प्रथमैषा। हे स्तोतारः! 'प्रार्चत' प्रकर्षेणोच्चारयत, पूजयत। 'मन्दिने' मन्दनीयाय, स्तुत्याय, स्तुतिमते वा; इन्द्राय। 'पितुमत्' अन्नसंयुक्तं 'वचः'। 'यः' इन्द्रः, किं करोति? कृष्णस्य मेघस्य गर्भभूता अपः 'निरहन्' नीचै-रहन्, निरगमयदित्यर्थः। केन? 'ऋजिश्वना' ऋजुरेवावच्छिन्नो लक्ष्ये यः श्वनति गच्छति इति ऋजिश्वा वज्रः, तेन निरगमयत्। 'अवस्यवः' अवन मात्मनो रक्षण मिच्छन्तः, तर्पणं वा। योऽय मेव-म्प्रभाव इन्द्रः, त मिमं 'वृषणं' वर्षितारम्, 'वज्रदक्षिणं' वज्रबाहुम्, 'मरुत्वन्तं' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासु तासु क्रियासु आह्वयामहे इत्यर्थः॥ एव मेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत'—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषण मेतदित्यु-पपद्यते॥

"गौः(५४)"—इति †। एतदनेकार्थत्वादिह समाम्नातम्। यथा चैतदनेकार्थत्वं तथा पुरस्ताद् "व्याख्यातम्" ‡॥ ३ (२४)॥

## अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे॥ अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्य§ मपचित मपगत॥ मपिहित मन्तर्हितं वामुत्र चन्द्रमसो गृहे गातुर्व्याख्यातो (गातुं कृणवन्नु-

* "निविद्धानं निविदा ह्येव स्तोत्र मतिमक्तं भवति" इत्यादि ऐ० ब्रा० ३,१,११।

† १भा० ४०१ पृ० १पं०।

‡ पृ० २अ० २पा० १ख० (१०५ पृ०)।

§ "संनामापीच्य" क, ख, ग।

|| "मपगत मपचित"—इति क-च-पुस्तकयोर्व्यत्ययेन पाठ, इतिकारसमेतश्च।

षसो जनायेत्यपि निगमो भवति *) दंसयः कर्माणि दंसयन्त्येनानि †। कुत्साय मन्मन्नह्यश्च दंसय इत्यपि निगमो भवति। स तूताव नैनं मश्नोत्यंहतिः। स तुताव नैन मंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद् ‡ विपरीतात्। बृहस्पते चयस इत्पियारुम्। बृहस्पते यच्चातयसि देवपीयुं पीयतिर्हिंसाकर्मा§ वियुते द्यावापृथिव्यौ वियवनात् ‖। समान्या वियुते दूरे अन्ते। समानं सम्मानमात्रं भवति मात्रा मानाद् दूरं व्याख्यात मन्तोऽततेर्ऋधगिति पृथग्भावस्य प्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते। ऋधगया ऋधगुताशमिष्ठाः। ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा इति चास्या इति चास्येति ¶ चोदात्तं प्रथमादेशेऽनुदात्त मन्वादेशे तीव्रार्थंतर मुदात्त मल्पीयोऽर्थतर मनुदात्तम् (४ **) अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व (श्रवस्यता मजाश्व ††)॥ अस्यै नः सातय उपभवाहेल-

---

* नैष पाठो दृश्यते क-ख ग-पुस्तकेषु, नापि दुर्गवृत्तौ स्वीकृतो व्याख्यातो। निगमस्त्वेषः;—ऋ० सं० ६, ८, १, १।

† "दंसयन्त्येनानि" - इति क, ख।

‡ "निरूढोपधाद्" ख।

§ "पीयुतिर्हिंसाकर्मा"—इति क, ख, ग।

‖ "वियुमनात्" क, ख, ग।

¶ "चास्या इति" क, ख, ग।

** इहैव चतुर्थखण्डसमाप्तिः क-ख-ग-पुस्तकेषु।

†† एषोऽधिकः पाठो क-ख-पुस्तकयोः।

मानोऽक्रुध्यन्त्वरिवान्नातिरभ्यस्तोऽजाश्वेति पूषण माहाजाश्वाजा अजना अर्थानुदात्तम्। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्। दीर्घायुरस्या यः पतिर्ज्जीवतु स शरदः शतं शरच्छृता अस्या मोषधयो भवन्ति शीर्णा आप इति वाऽस्येत्यस्या इत्येतेन* व्याख्यातम्॥ ४ (२५)॥

यत्नूक्तम्,—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते,०—० सोऽपि गौरित्युच्यते;—'अत्राह गोरमन्वतेति' तदुपरिष्टाद्व्याख्यास्यामः"—इति †, तदिद मुच्यते ;—"अत्रा ह"—इति ‡। गोतमस्य राहूगणस्येय मार्षम्। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अत्रा ह' अत्रैव, एतस्मिंश्चन्द्रमण्डले 'गोः' सुषुम्नस्यैकस्य सूर्यरश्मेः, इतरे सूर्यरश्मयः 'अमन्वत' अमन्यन्त, समनुज्ञातवन्त इत्यर्थः। किं पुनस्तत् सममन्यन्त 'नाम', नमनं प्रह्वण मवस्थान मित्यर्थः। कुतः? 'त्वष्टुः' आदित्यस्य स्वभूता रश्मयः सममन्यन्त। कथं तस्य नमनं तत् सममन्यन्त? इति 'अपीच्यम्' "अपगतं" तत्रैव चन्द्रमण्डलेऽन्तःप्रविष्टस्य यदवस्थानान्तरं तत् सममन्यन्त। अथ वा अपीच्य मिति "अप" एत्य सूर्यमण्डलात् चन्द्रमण्डले "चितम्" अपीच्यम्। अथ वा अपीच्यम् "अन्तर्हितम्" इत्यर्थः; "प्रतीच्यम्(५), अपीच्यम्(६)"—इति अन्तर्हितनामसु पठितम् §। क्व पुनरन्तर्हितस्यान्य-

* "वाऽस्या अस्येत्यनेन"—इति क, ख, ग।

† पु० १अ० १पा० १ख० (१८१ पृ० १०पं०)।

‡ ऋ० सं० १, १, ०, ५।

§ १भा० २९५ पृ० ३अ० २५ख० (५), (६)।

चावस्थानम्? इति 'इत्था चन्द्रमसो गृहे' अमुष्मिंश्चन्द्रमण्डले इत्यर्थः॥

"गातुः(५५)"—इति*। "व्याख्यातः"; "गमनं यज्ञपतये"—इत्यत्र †॥

"दंसयः(५६)"—इति ‡। एतदनेकेषां कर्मणां अभिधानम्। तानि हि दंसयन्त्युपक्षयन्ति कर्मकराः। "तव त्य इन्द्र०—०इमा दंसयः §"। अङ्गस्यौरवस्यैव मार्षम्। हे 'इन्द्र' 'तव' 'त्ये' 'वह्नयः' वोढारोऽश्वाः, 'सख्येषु' समानख्यानेषु कर्मसु वर्त्तमानाः; इद मेव हि भवतः कर्म, मेघो विदारयितव्य इति ‖; एतदेव तेषा मपि समानख्यानत्वम्। 'ऋतम्' उदक मस्मिन्नस्तीति, एव मेतं 'मन्वानाः'। कि मकुर्वन्? 'अदर्द्दिरुः' विदारितवन्तो 'वलं' मेघं काले काले। 'यत्र' यस्मिन् मेघे विदारिते 'दशस्यन्' दशस्यन्ति 'उषसः' माध्यमिकाः; एकस्या एव पूजनार्थं बहुवचनम्। किं दशस्यन्? 'अपः', 'अद्राः च' अद्रिनिवासिन्यः, मेघनिवासिनीरित्यर्थः। ताश्च दीर्यमाणाः 'रिणन्' आगच्छन्, पृथिवीलोकम्। तदेतत् सर्व्व मपि युष्मदश्वैः क्रियते। किं पुनरर्थ मुद्दिश्य त एवं कुर्वन्ति? 'मन्नान्' मन्यमानाः, 'कुत्साय' पृथिवीं कृन्तते, कृषीवलाय; 'दंसयः' कृषिकर्माणि सफलानि कर्त्तुम्। अथ 'दंसयः'

---

* १भा० ४०२ पृ० ३पं०।

† पृ० ४९३ पृ० १पं०, किञ्च ४९७ पृ० ४पं०।

‡ १भा० ४०२ पृ० ५पं०।

§ "तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्द्दिरुर्वलम्। यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः॥"—इति ऋ० सं० ८, ७, १९, १।

‖ "अथास्य कर्म,—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्।"—इति प० दै० का० ७, २, २।

—इत्येतेन शब्देन "कर्माणि" उक्तानि। दासैः कर्मकरैः; 'दस्यन्ते'—इति कृत्वा कर्मकरा दासा इति। बाहुल्याद् भाष्यकारेण नोदाहृतः॥

"तूताव(५०)"—इति *। एतदनवगतम्। "तुताव"—इत्यवगमः। "यस्मै त्वं मा यजसे०—०वयं तव" †। कुत्सस्येय मार्षम्। महाभ्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते। हे भगवन्! 'अग्ने!' 'यस्मै' यजमानाय 'त्वम्' 'आ' आहूय 'यजसे' देवान्, होतृत्वेऽवस्थितः। 'सः' एव 'साधति' साधयत्यात्मनोऽभिप्रेतार्थम्। किञ्च; स एव 'अनर्वा' अप्रत्यृतः, अनाश्रितः कञ्चिदन्यम्, स्वेनैव महिमायुक्तः। 'चेति' निवसति, युष्मदनुग्रहात्। स एव 'दधते' धारयते 'सुवीर्यं' शोभन मात्मनो वीर्यम्। स एव 'तूताव' वर्द्धते, प्रजाधनयशोभिः; 'न' च 'एनम्' 'अंहतिः' अपि पाप मपि सम् "अश्नोति" आप्नोति। हे भगवन्नग्ने! यः त्व मेव मति-महानुभावः, तस्य 'तव' 'वयं' 'सख्ये' सखिभावे, परिचरण-कर्मणि वर्त्तमानाः 'मा रिषाम' मा केन चिच्छिद्येमहि॥ एव मथ मत्र "तूताव"—इति शब्दः 'यस्मै त्व मा यजसे'—इत्येवमादीनां पदानां मध्ये श्रूयमाणो वृद्ध्यर्थ मुपपद्यते॥ "अंहतिश्च अंहश्च अंहुश्च"—इत्येते शब्दाः ‡ "हन्तेः" "निरूढोपधात् विपरीताद्" अकार मुपधातोर्निष्कृष्यादौ कृत्वा, ततो हकार-नकारौ विपर्ययेण भवतः॥

---

* १भा० ४०१ पृ० ८ पं०।

† "यस्मै त्वमा यजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम्। स तूताव नैन मश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव॥"—इति ऋ० सं० १, ९, १०, २।

‡ १भा० ४५१ पृ० (१११). किञ्च पं० ९, ५, ५. अंहुरश्च द्रष्टव्यः।

"चयसे(५८)"—इति * । एतदनवगतम् । "चातयसि"—इत्यर्थ-प्रतीतिः । "ये त्वा देवोस्रिकं०———०चयस इत् पियारुम्" † । अगस्त्यस्य मैत्रावरुणस्येयं मार्षम् । हे 'बृहस्पते !' 'देव' दानादि-गुणयुक्त ! 'ये' यजमानाः त्वाम् 'उस्रिकम्' उत्स्राविणं भोगानां 'मन्यमानाः' दातैव केवलं भोगानाम्, अथ मार्जवेन न प्रत्युप-कारार्थीत्येवं मन्यमानाः, 'पापाः' अप्रत्युपचिकीर्षवः 'उपजीवन्ति' एव केवलं, न क्रियया प्रत्युपकारं कुर्वन्ति, 'भद्रं' भन्दनीयं स्तुत्यम्, अपि च 'पज्राः' प्रार्जितधनाः सन्तः, न दरिद्राः । किं तेभ्यः ? इति 'न दूढ्ये' न तेभ्य एवंलक्षणेभ्यः, दुर्बुद्धिभ्यः, पाप-बुद्धिभ्यः, स्वार्थप्रधानेभ्यः त्वम् 'अनु ददासि' 'वामं' वननीयं धनम् । किं तर्हि? यस्तादृशो जनः 'पियारुः' देवपीयुः, देवहिंसिता, स्वभोगप्रधानः, न यष्टा देवानाम्, तं 'चयसे' "चातयसि" नाश-यसि । य एव श्रद्दधानो यष्टा, तस्मै देवान् यजते ‡ अनुददासि वामम्; यस्मात् त्व मेवं करोषि, तस्मात् ते पापबुद्धयः त्वां सम्यक् न पश्यन्तीत्यभिप्रायः । यो हि दुर्बुद्धिः देवपियारुः तस्य कि मन्यत् चातनादृते स्यात्? चात्य एवासौ ॥ तस्मात् 'चयसे'—इत्येष शब्दः, "चतयतिः" नाशने इत्येव मवस्थापिते नाशनार्थो भवती-त्युपपद्यते; "चातयतिर्नाशने"—इति हि वक्ष्यति § । लोकेऽपि च प्रसिद्धं देशादुच्चातित इति । तस्मादुपपद्यते ॥

---

* १भा० ४०२ पृ० ११ पं० ।

† "ये त्वा देवोस्रिकं मन्यमानाः पापा भद्र मुपजीवन्ति पज्राः । न दूढ्ये अनु ददासि वामं बृहस्पते चयस इत् पियारुम् ॥"—इति ऋ० सं० २, ५, ११, ५ ।

‡ "देवान् यक्ष्यते" क, ख ।

§ प० ६अ० ६पा० १ख० ।

"वियुते(१८)"—इत्येतदेक मेव * समस्तयोर्द्वयोरपि द्यावापृथिव्योरभिधानम्। "वियवनात्"—इति निर्वचनम्। यौतिर्मिश्रणार्थः (अदा० प०) तस्योपसर्गसामर्थ्याद्विपर्ययेणार्थो भवति, विमिश्रीभूते इत्यर्थः।"इमे वै सहास्तां ते अन्यामाचं न्यैता मिति ह विज्ञायते"† । "समान्या वियुते०—०मिथुनानि नाम ‡"। विश्वामित्रस्येय मार्षम्। वैश्वदेवे सूक्ते। 'समान्या' समान्यावेते द्यावापृथिव्यौ, समानपरिमाणे। 'वियुते' च विमिश्रीभूते। 'दूरे अन्ते' च, न हि द्यावापृथिव्योरन्तोपलब्धिरस्ति। 'ध्रुवे पदे' सप्तम्येकवचनम्, अन्तरिक्षविषयम्; ध्रुवं शाश्वतम्, एतस्मिन् पदे आधारभूते; अन्तरिक्षस्य क्षयो नास्ति, प्रतिद्वन्द्वाभावात्; तच्चैतयोर्द्यावापृथिव्योः प्रतिष्ठा; तस्मिन्नेते 'तस्थतुः' स्थितवत्यौ। सर्गादारभ्य 'जागरूके' जागरणशीले, स्वं स्व मधिकारं प्रति। 'उत' अपि चैते 'स्वसारौ' भगिन्यौ, सहोत्पत्तित्वात्। 'युवतीभवन्ती' सम्मिश्रीभवन्त्यौ, परस्परसम्भोगेन। 'आह् उ ब्रुवाते मिथुनानि नाम' इति। अथैव मेते 'वियुते' च सम्मिश्रीभूते च सत्यौ, द्यावापृथिव्यौ, ब्रुवाते इव; प्रथयत इव; स्तोतॄणां 'नाम' नामानि, आत्मनो 'मिथुनानि' द्विवचनसम्बद्धानि स्तुतिनामभिः;—"स्वधे(१), पुरन्धी(२)"—इत्येवमादिभिरिति §॥ एव मेतस्मिन् मन्त्रे "वियुते"—इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्,

---

* १भा० ४०२पृ० १४पं०।

† पृ० ३११ पृ० ८ पं०;—'तयोः सावचयोश्चायिका रथा'—इत्यादि।

‡ "समान्या वियुते दूरेअन्ते ध्रुवे पदे तस्थतुर्जागरूके। उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम॥"—इति ऋ० सं० ३, ३, १५, १।

§ १ भा० ३०१, ३०२ पृ० ३ख० ३०ख० (१), (२)।

| Title | Rs. | As. |
|---|---|---|
| Nṛisiṃha Tápaní, (Sans.) Fasc. I—III @ /10/ each .. Rs. | 1 | 14 |
| Nirukta, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. I—IV @ /10/ each Fasc. | 6 | 4 |
| Nárada Pancharátra, (Sans.) Fasc. IV @ /10/ each .. .. | 0 | 10 |
| Nyáya Darṣana, (Sans.) Fasc. I and III @ /10/ each .. .. | 1 | 4 |
| Nítisára, or, The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—IV | 1 | 14 |
| Parisishtaparvan (Sans.) Fasc. I .. .. .. .. | 0 | 10 |
| Piñgala Chhandaḥ Sútra, (Sans.) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Prithiráj Rásau, (Sans.) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| Ditto (English) Fasc. I .. .. .. .. | 1 | 0 |
| Páli Grammar, (English) Fasc. I and II @ /10/ each .. .. | 1 | 4 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smṛiti (Sans.) Fasc. I and II .. .. .. | 1 | 4 |
| Rig Veda, (Sans.) Vol. I, Fasc. IV .. .. .. .. | 0 | 10 |
| Srauta Sútra of Ápastamba, (Sans.) Fasc. I—VIII @ /10/ each .. | 5 | 0 |
| Ditto Ásvaláyana, (Sans.) Fasc. I—XI @ /10/ each .. | 6 | 14 |
| Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /10/ each .. | 5 | 10 |
| Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /10/ each Fasc. .. .. | 23 | 2 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /10/ each .. | 2 | 8 |
| Sáñkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each .. | 1 | 4 |
| Súrya Siddhánta, (Sans.) Fasc. IV .. .. .. .. | 0 | 10 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. | 0 | 10 |
| Sañkara Vijaya, (Sans.) Fasc. II and III @ /10/ each .. .. | 1 | 4 |
| Sáñkhya Pravachana Bháshya, (English) Fasc. III .. .. | 0 | 10 |
| Sáñkhya Sára, (Sans.) Fasc. I .. .. .. .. | 0 | 10 |
| Suśruta Saṃhita, (Eng.) Fasc. I and II @ 1/each .. .. | 2 | 0 |
| Taittiríya Áraṇyaka, (Sans.) Fasc. I—XI @ /10/ each .. .. | 6 | 14 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /10/ each .. .. | 15 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc I—XXXII @ /10/ each .. .. | 20 | 0 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Ditto Aitareya S'vetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each .. .. .. .. | 1 | 4 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /10/ each .. .. | 11 | 14 |
| Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each .. .. | 6 | 14 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—4, @ /10/ each Fasc. .. .. .. .. .. | 6 | 4 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /10/ each .. .. | 1 | 4 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |
| The same, bound in cloth .. .. .. .. | 5 | 2 |

### *Arabic and Persian Series.*

| Title | Rs. | As. |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each .. | 8 | 2 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each .. .. | 27 | 8 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXVI @ 1/4 each .. | 32 | 8 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each .. | 11 | 14 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to, thick paper, @ 4/12; thin paper .. .. .. .. | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each .. .. .. .. .. .. | 26 | 4 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each .. .. | 17 | 8 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /10/ each .. .. | 5 | 10 |
| Ditto Azádí, (Text) Fasc. I—IV @ /10/ each .. .. | 2 | 8 |
| Haft Asmán, History of the Persian Mansawi (Text) Fasc. I .. | 1 | 0 |
| History of the Caliphs, (English) Fasc. I—VI @ 1/ each .. .. | 6 | 0 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /10/ each .. | 1 | 10 |
| Iṣabáh, with Supplement, (Text) 34 Fasc. @ /12/ each .. .. | 25 | 8 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each .. .. | 3 | 0 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each .. | 9 | 2 |

(Turn over.)

Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I. .. Rs. 1 6
Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc. XIX with Index @ /12/ .. .. .. .. 12 0
Mu'áṣir-i-'Álamgírí (Text), Fasc. I—VI @ /10/ each .. .. 3 12
Nukhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0 10
Niẓámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. 2 0
Suyúṭy's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. .. .. 8 12
Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. .. 3 2
Ditto (English) Fasc. I—XIV @ 1/ each .. .. 14 0
Táríkh-i-Fírúz Sháhi, (Text) Fasc. I—VII @ /10/ each .. .. 4 6
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. .. 5 10
Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. .. .. 3 2

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each .. Rs. 80 0
   Ditto Index to Vols. I—XVIII .. .. 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.

   *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*

   General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. .. .. .. .. 2 0
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. .. 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. .. 4 0
   Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 4 0
   A Grammar and Vocabulary of the Northern Balochí Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. .. .. 4 0
   Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. .. 2 0
   Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882).. 4 0
4. Anis-ul-Musharrihin .. .. .. .. .. 3 0
5. Catalogue of Fossil Vertebrata .. .. .. .. 2 0
6. Ditto of Arabic and Persian Manuscripts .. .. .. 1 0
7. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. 2 0
8. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 8
9. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1 0
10. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
11. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2 0
12. Khizánat-ul-'ilm .. .. .. .. .. 4 0
13. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40 0
14. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. .. 12 0
15. Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1 0
16. Sharaya-ool-Islám .. .. .. .. .. 4 0
17. Tibetan Dictionary .. .. .. .. .. 10 0
18. Ditto Grammar .. .. .. .. .. 8 0
19. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. 2 0

Notices of Sanskrit Manuscripts, Fasc. I—XVIII @ 1/ each .. 18 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 538.



# सभाष्यवृत्ति-निरुक्तम् ।

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY
PANDIT SATYAVRATA SÁMAS'RAMÍ.

VOL. II.
FASCICULUS VI.

CALCUTTA:
PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1885.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| Title | Rs. | As. |
|---|---|---|
| A'tharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /10/ each.. | Rs. 3 | 2 |
| A'śvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each .. | 2 | 8 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /10/ each .. .. | 8 | 12 |
| Aitaréya A'raṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each .. | 3 | 2 |
| Aphorisms of Śáṇḍilya, (English) Fasc. I .. .. .. | 0 | 10 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each .. | 6 | 14 |
| Brahma Sútras, (English) Fasc. I .. .. .. .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. .. | 5 | 0 |
| Bṛihad A'raṇyaka Upanishad, (Sans.) Fasc. IV, VI, VII & IX @ /10/ each | 2 | 8 |
| Ditto (English) Fasc. II—III @ /10/ each .. .. | 1 | 4 |
| Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each .. | 3 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each .. | 1 | 4 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, 1—9, @ /10/ each Fasc. .. .. .. .. | 28 | 4 |
| Chhándogya Upanishad, (English) Fasc. II .. .. .. | 0 | 10 |
| Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each .. .. .. | 1 | 14 |
| Gopatha Bráhmaṇa, (Sans. & Eng.) Fasc. I and II @ /10/ each .. | 1 | 4 |
| Gopála Tápaní, (Sans.) Fasc. I .. .. .. .. | 0 | 10 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each .. .. | 7 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Kátantra, (Sans.) Fasc. I—VI @ 1/ each .. .. .. | 6 | 0 |
| Kathá Sarit Ságara, (English) Fasc. I—XI @ 1/ each .. .. | 11 | 0 |
| Lalita Vistara, (Sans.) Fasc. I—VI @ /10/ each .. .. | 3 | 12 |
| Ditto (English) Fasc. I—II @ 1/ each .. .. | 2 | 0 |
| Maitri Upanishad, (Sans. & English) Fasc. I—III (in one volume) .. | 1 | 14 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XVI @ /10/ each .. .. | 9 | 6 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /10/ each .. .. | 2 | 8 |

*(Continued on third page of cover.)*

द्यावापृथिवीशब्दस्याध्याहार्य्यः; 'दूरे अन्ते'—इत्येवमादीनां तथो-पपत्तिदर्शनात् ॥

"ऋधक्(१०)"—इति *। अनेकार्थम्। "ऋधगिति पृथग्भा-वस्य प्रवचनं भवति" पृथक्त्व मेव पृथग्भावः, तस्येदं प्रवचनं भवति; योऽनेन प्रोच्यते इत्यर्थः। "यदिन्द्र दिवि पार्य्ये०——० मरुद्भिः" †। भरद्वाजस्येय मार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये निविद्धानीये सूक्ते प्रस्तते। हे भगवन्! 'इन्द्र!' 'यद्' यदि त्वं 'दिवि' द्युलोके 'पार्य्ये' पारणीये स्थानेऽवस्थितः, 'यदृधक्' यदि ऋधक् पृथगिव इत्यर्थः। 'यद्वा' यदि वा 'स्वे सदने' अन्तरिक्षलोकेऽव-स्थितः। 'यत्र वासि' क्वचिदन्यत्रैव स्थानेऽवस्थितः; को हि तत्त्वतो वेद, तव स्थानं यत्रासीति। किं बहुना, यत्र यत्रासि अवस्थितः, 'अतः' आगत्य 'यज्ञम्' 'अवसे' रक्षसि। 'नियुत्वान्' वायुर्भूत्वा। यस्त्व मेवम्प्रभावः, त्वां तु ब्रवीमि;— हे 'गिर्वणः' गीर्भिः सम्भ-जित! स हि स्तुतीः सम्भजति, स्तुतिभिर्वा सम्भज्यते, 'सजोषाः' सहजोषणः सप्रीतिः, 'मरुद्भिः' पिबैतं सोम मस्मत्प्रत्तम्। एव मेके पृथग्भावोदाहरण मेत सूक्तं व्याचक्षते ॥

अपरे पुनरयं एवैष भाष्यकारेण निगमः पठितः,—"ऋधगयाः" —इति, अत्रैवैतौ द्वावप्यर्थाविति मन्यन्ते, तथापि दर्शयिष्यामस्तस्या मेवर्चि "अथापि" अथ मेव मृध्नगिति शब्दः कदाचिद् "ऋघ्नोत्यर्थे"

---

* १भा० ४०१ पृ० ११पं०।

† "यदिन्द्र दिवि पार्य्ये यदृधग् यद्वा स्वे सदने यत्र वासि। अतो नो यज्ञ मवसे नियुत्वान् सजोषाः पाहि गिर्वणो मरुद्भिः॥"—इति ऋ० सं० ५, ७, ११,५।

अपि "दृश्यते" ;—"ऋधगया ऋधगुताशमिष्ठाः" इत्यस्मिन् मन्त्रे। "यद्द्य त्वा प्रयति यज्ञे"—इति *। समिष्टयजुःषु सौमिकेषु विनियुक्ता। तत्र चोक्तम् ;—"एतौ विश्वामित्रो यज्ञस्यारणौ अपश्यत्"—इति। हे भगवन्! 'अग्ने!' 'यत्' प्रयोजन मुद्दिश्य 'अद्य' 'प्रयति' प्रोत्सर्पति एतस्मिन् 'यज्ञे' 'वयम्' 'अवृणीमहि' वृतवन्तो 'होतारं' त्वाम्। "अग्निर्देवो दैव्यो होता"—इति श्रूयते †। किं पुनस्तत् प्रयोजनम्? इति। कथं नामास्य मण्यवदानमात्रं कृतं देवताद्वृप्तिसमर्थं बहु कुर्यादग्नान्त मपि च यद् विगुणं यज्ञस्य किञ्चित् तत्क्षमयित्वा समृद्ध मेव कुर्यात्? इति, तचोभय मपि यथाशास्त्र मेवास्माकं त्वया कृतम्; अत इदानीं परिसमाप्ते एतस्मिन् यज्ञे प्रत्यभाष्यसे अस्माभिः ;—'ऋधगयाः' त्वम्, अल्प मपि कृतम् अस्माभिः हविः, 'ऋधक्' एव ऋद्ध मेव, देवताद्वृप्तिसमर्थं बहु कुर्वन् 'अयाः' त्वं याग मकार्षीरित्यर्थः। किञ्च; 'ऋधगुताशमिष्ठाः' अपि च यदपि किञ्चिद्विगुणम् अकार्ष्म, वय मेतस्मिन् यज्ञे, तदपि सर्व मेव समृद्धं सगुण मेव कुर्वन्, पाप मस्य यज्ञस्य अशमिष्ठाः स्विष्टकृद्रूपेण शमितवानसि। यस्त्व मेतदकार्षीरस्माक मेतस्मिन् यज्ञे, तं, त्वां ब्रवीमि; —एतदेव मयैतेषां कर्त्तव्य मित्येतद् 'विद्वान्' 'प्रजानन्' प्रकर्षेण जानन् अस्माक मात्मन उपरि भक्तिं पुनः पुनः 'उपयाहि' उपागच्छ

---

* "यद्‌द्य त्वा प्रयति यज्ञे अस्मिन्होत॑श्चिकित्वोऽवृ॑णीमही॒ह। ऋध॑गया॒ ऋध॑गु॒ताश॑मिष्ठाः प्रजा॒नन् य॒ज्ञ मुप॑याहि वि॒द्वान्त्स्वाहा॥"—इति य० वा० सं० ८, २०। टीकाकद्वृत्तौ यद्द्येत्यादि प्रतीकक्षेपः शाखान्तरीयो बोध्यः।

† "अग्निर्वै देवानां होता, तस्मैतदोऽवपद्दनं यद्रुत्तरवेदी नाभिः।"—इति ऐ० ब्रा० ६, ५, २।

'यज्ञम्'॥ एवं तावदेकेषां "ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतौ द्वावपि "ऋधक्"-शब्दौ ऋध्नोत्यर्थावेव। एतस्मिन्नर्थे, ऋधक्छब्दस्य पृथग्भावार्थत्वे "यदिन्द्र दिवि पार्ये यदृधक्"—इत्येतदुदाहरणम्*। अन्ये पुनर्मन्यन्ते;—"ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतयोरेव ऋधक्छब्दयोः पूर्वः पृथग्भावार्थः, उत्तर ऋध्नोत्यर्थ इति। तदेतदुपपद्यते; मिश्राण्यपि हवींषि ऊतानि सन्ति, त्व मग्ने ऋधक् पृथगेव कृत्वा ततो देवानयाक्षीर्न ते सम्मोहोऽस्तीत्यभिप्रायः। 'ऋधगुताशमिष्ठाः'—इत्येष यथाव्याख्यात एव। पूर्वस्त्वर्थः साधीयान्; यत्र द्वावप्येतावृध्नोत्यर्थावेव,—"ऋधगयाः", "ऋधगुताशमिष्ठाः"—इति। किं कारणम्? "अथाप्यृध्नोत्यर्थे दृश्यते"—इति एव मुपन्यस्य भाष्यकारेण ततोऽय मुपात्तो निगमः,—"ऋधगया ऋधगुता शमिष्ठाः"—इति; एवञ्च निरुक्तम्—"ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठाः"—इति। तस्मात् द्वावप्येतावृध्नोत्यर्थावित्येतदेव साधीयः॥

"अस्याः(११)"—इति, "अस्य(१२)"—इति च†। पदद्वयं स्त्रीपुंसविषयम्, स्वरकृतात् विशेषाद् प्रधानाभिधायि वा भवति। आह;—कथम्? इति उच्यते;—"उदात्तं प्रथमादेशे"‡। प्रथम इति मुख्यनाम, मुख्यं प्रधान उच्यते; प्रधानं कञ्चिदर्थं मभिदधत् एतद् द्वय§ मुदात्तं भवति। "अनुदात्त मन्वादेशे"‖। प्रधान मर्थं मनु

* पु० ४८१ पृ० ५,११ पं०।
† १भा० ४१०पृ० १पं०।
‡ वा० प्रा० १अ० ७ सू०।
§ "एतत् पदद्वय" ग।
‖ "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ"—इति पा० २, ४, ३२।

यो वर्त्तते गुणभावेन तस्यैतत् पदद्वय मन्वादेशे वर्त्तमान मनुदात्तं भवति। आह;—कस्मादेतत् पुनरुदात्तं प्रधाने वर्त्तमान मनुदात्त मप्रधाने? इति। उच्यते;— लोकेऽपि हि यत् "तीव्रार्थतरम्" उत्कृष्टार्थप्रधानतरं तत् "उदात्तम्"—इति प्रसिद्धम्; तद्यथा,—उदात्त मेतत् कुल मिति। "अल्पीयोऽर्थतर मनुदात्तम्" अल्पीयसार्थेन यद्युक्तं भवति तदनुदात्त मुच्यते; अप्रधान मित्यर्थः। उदाहरणैरेवानयोर्विभागं दर्शयति;—"अस्मा ऊ षू॰—॰ अपन्हुवे"*। पदच्छेदपस्यार्थम्। अतिच्छन्दाः। 'उ'—इति, 'सु'—इति, 'न'—इति पदानि। 'अस्माः' "अस्मै" 'सातये' लब्धये। कथं नाम वय मर्थ मभिप्रेतं लभेमहि? इत्येत मर्थ मुद्दिश्य, हे 'पूषन्!' अस्माकं सुष्ठु 'उप' समीपे 'भुवः' भव। त्वयि सन्निकृष्टे त्वदनुप्रसादेन मर्थं लभेमहीत्यभिप्रायः। कथं पुनरुपभव? 'अहेलमानः' अक्रुध्यन्, सर्वो ह्यभ्यर्थ्यमानः क्रुध्यतीत्यभिप्रायः। 'ररिवान्' दानवान्, दानाभिप्रायसंयुक्तेन चेतसा उपभव। 'अजाश्व' "अजनाश्व" गमनाश्व, छागाश्व वा 'अवस्यताम्' अस्माकं धन मिच्छतां भव, "अजनाश्व" छागाश्वेत्यर्थः। किञ्च; 'ओ षु त्वा वहतीमहि'। 'आ', 'उ', 'सु',—इति पदानि। 'आ वहतीमहि' त्वां सुष्ठु आभिमुख्येन आत्मनो वर्त्तयामहे। केन? 'स्तोमेभिः' स्तोत्रैः। 'दस्म' हे दस्म! दर्शनीय! अथ वा दान्त! साधुभिः शोभनैरित्यर्थः। किञ्च; 'न हि त्वा' नैव त्वां

---

* "अस्मा ऊ षू ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यता मजाश्व। ओ षू त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः न हि त्वा पूषन्नति मन्य आघृणे न ते सख्य मपन्हुवे॥"— इति ऋ॰ सं॰ १, १, १, ४।

दर्शनीयम् अतीत्य साधुतरां कश्चिदप्यन्या मह्यं देवतां मन्ये, हे 'आघृणे' आगतदीप्ते! त्वद्भक्त एवाहं मस्मीत्यभिप्रायः। किञ्च; 'न ते' न चाहं तव 'सख्यं' सखिभावं कदाचिदपि 'अपह्नुवे' कृतघ्नो स्याह मित्यभिप्रायः। एव मत्र सातिः प्रधानेति कृत्वा "अस्याः"— इत्येतत् पद मन्तोदात्तम्। अन्तोदात्त मपि च सदुदात्त मित्युक्तं भाष्यकारेण, एकदेशस्योदात्तत्वाद् ॥

"अथ" पुनर्यस्मिन् "अनुदात्तम्" एतत् पदं गुणभूतार्थाभिधायि भवति। तस्यैष निगमः;—"पुनः पत्नीः०—०शरदः शतम्"*। सूर्याया आर्षम्। विवाहे विनियुक्ता। पित्रा पूर्व मेतां दत्तां सतीं कन्यां पत्नीं पुनरग्निरदात्, 'आयुषा सह वर्चसा' तेन सह एतस्मिन् वैवाहिके कर्मणि अग्निसन्निधिसंस्काराद् भार्यात्व मुपजायते इत्येतदपेक्ष्य पूर्वदानात् पुनर्दानत्व मुच्यते। तदेव मस्या दत्ताया एतदाशास्महे;—'योऽस्याः पतिः' स 'दीर्घायुः' अस्त्विति। यतो विशेषयन् ब्रवीमि†;—"जीवतु‡ सः शरदः शतम्"—इति। शरदि दुर्जीवाः, रोगभूयस्त्वात्; अत एव माशास्यते शरच्छतं जीवन्विति॥ एतस्मिन् मन्त्रे भर्तृकन्यासंयोगे सति भर्त्तैव प्रधानम्; तस्य ह्यायुराशास्यते। तस्य लक्षणार्था पत्नी। तस्माद् "दीर्घायुः अस्या यः पतिः"—इति, एतदनुदात्तम् ॥

निगमप्रसक्त मुच्यते;—"शरद्", "अस्यां" हि "शृताः" पक्वाः

---

* "पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्॥"—इति ऋ० सं० ८, ३, २०, ४।

† "ब्रवीमि"—इति ग।

‡ "जीवातु"—इति ख, "जीवाति"—इति ग।

"ओषधयो भवन्ति"—इति, "शीर्णा आप इति वा", वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्यन्ते। "अस्य—इति" एतत् पदं पुंविषयम् षष्ठ्यन्तम् "अस्याः—इत्येतेन" स्त्रीविषयेण पदेनैव "व्याख्यातम्" ॥ ४ (२५) ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यश्नो* भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्याय† मग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्र मिति वा सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मय इति वदन्ति ॥ ५ (२६) ॥

यदेवोक्तम् "उदात्तं प्रथमादेशे, अनुदात्तम् अन्वादेशे" ‡—इति तदेवात्रापि लक्षण मित्यभिप्रायः। उदाहरणमात्रं प्रदर्श्यते;—"अस्य वामस्य०—०सप्तपुत्रम्" §। अस्यवामीय मेवेदं सूक्तम्। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शस्त्रे शस्यते। 'अस्य' सूर्यस्य 'वामस्य' "वननीयस्य" स्तुतिभिः, 'पलितस्य' "पालयितुः"

---

* "मध्यमो ऽस्त्यश्नो" क, ख।
† "घृतपृष्ठोऽस्याय" क, ख।
‡ पु० ४०५ पृ० ११ पं०।
§ ऋ० सं० २, ३, १४, १।

अयं हि सर्व मेवेदं जगत् पालयति। 'होतुः' "ह्वातव्यस्य" आह्वा-
नार्हस्य। आह ;—तस्य किम् ? इति। उच्यते ;—योऽय मेवंलक्षणः
'तस्य' 'भ्राता' "भागहर्त्ता", "भर्त्तव्यो वा" उदकेन, 'मध्यमः'
मध्यमस्थानः 'अस्ति' विद्यते *। कतमः ? योऽयम् 'अश्नः' "अशनः"
व्यापनो वायुरित्यर्थः ; स हि द्युलोकादादित्येनोदकेन भ्रियते,
हरति चोदकं द्युलोकात्। 'तृतीयः' 'अस्य' वायोः 'भ्राता' हवि-
र्भागहर्त्ता वा ; ऐन्द्राग्ने हविषि संस्तुतौ वा 'घृतपृष्ठः' घृतेन स्पृष्टः,
आज्यस्पृष्टः "अयम्" एव "अग्निः" पृथिवीस्थानः †। 'सहस्रिणः' ‡
वायोः ; सर्वस्माद्धि वायुः बलवान्। अथ वा सहस्र मस्य नियुता
मश्वाना मस्तीति सहस्री वायुः ; "आ नो नियुद्भिः शतिनीभि-
रध्वरं सहस्रिणीभिः"—इति§ श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः,
अग्निः,—इत्येवं परिसङ्ख्याय वायोस्तृतीयोऽग्निर्भवति ; वायुरपि च
ज्योतिरेव ; "वायुना ज्योतिषा"—इति विज्ञायते ||। तत्रैतस्मिन्
त्रेधा विभक्ते ज्योतिषि¶, प्रधानत्वेनैत मेवाह मपश्य मिति। 'विश्पतिं'
विश्वस्य सर्वस्य जगतः पालयितारम्। कतमम् ? य एष 'सप्तपुत्रः'

---

* "वायुर्देवेभ्यो हव्यं वहति, वायु मेव तदन्तरिक्षलोक आयातयति"—इति ऐ० ब्रा० २, ५, २। परस्तादाय मपि वक्ष्यति दै० ९, २, १।

† "इमं हि मनुष्या इन्धतेऽग्नि मेव तदस्मिंल्लोक आयातयति"—इति ऐ० ब्रा० २, ५, २।

‡ एतत् पदं, न जाने वृत्तिकृता कुत उपलभ्य व्याख्यात मिति।

§ ऋ० सं० १, १, १४, १।

|| "स वायुना ज्योतिषा भाति च तपति च"—इति शा० ब्रा० ५, १८।

¶ "भूरग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यः"—इति ऐ० ब्रा० २, ५, ४।

सूर्य एव मेवाह मन्त्र प्रधानेनापश्य* मित्येव मेतस्मिन् मन्त्रे सूर्यः प्रधानः, सूक्ते सूर्याधिकारात्; तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"-शब्द अन्तोदात्तः। वायुस्त्वप्रधानम्; तस्मात् 'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्येषः "अस्य"-शब्दोऽनुदात्तः॥ एव मेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ "अस्य"-शब्दौ प्रधानाप्रधानविषयावित्येक मेवोदाहरणम्॥

आह;—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य"-शब्देन सूर्य एव कस्मान्न सम्बध्यते? अपि च "तृतीय"-शब्दस्य प्रकृतानुक्रमाविरोधेनैव मेव सुखतरा योजना भविष्यति। उच्यते;—'अस्य वामस्य'—इत्येतदन्तोदात्तं पद मितरदन्यत् तृतीयो भ्राता घृतपृष्ठो अस्य'—इति प्रधानरूप मेव सत् पूर्वेणानुदात्त मिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्य मित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्ते वायुस्त्वाप्रधानः, प्रकृतादादित्यात् तस्माद्वायुविषय मेवेदम् अस्येति द्वितीयपद मनुदात्तं सम्पद्यते। अतः सुतरा सुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्त मन्वादेशे" —इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते,— प्रथमादेशो नाम प्रारम्भः; तत्र यद्वर्त्तते, तदुदात्तं भवति,प्रधानार्थतर मुदात्तत्वेनैव† लक्षणेन। तद्यथा,—"अस्या ऊ षु णः (ऋ० सं० १, १, २४०)", "अस्य वामस्य (ऋ० सं० २, ३, १४,१.)" —इति। अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेशः; तत्र वर्त्तमान मनुदात्तं भवति। पदात् पदस्य निघातो भवतीति हि

* "प्रधानत्वेनापश्य" ग।

† "मनुदात्तत्वेनैव" क।

लक्षणविदोऽपि ब्रुवते *। तथानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतर मप्रधानार्थतरं भवति। तद्यथा,—"दीर्घायुरस्या यः पतिः (ऋ० सं० ८, ३, २७, ४.)", "तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १.)"—इति॥

आह;—कथं सप्तमपुत्र आदित्यः? इति। उच्यते;—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येव मैतिहासिका मन्यन्ते। ब्राह्मणेऽपि च,—"मृतपितर मण्ड मत्रापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम इति ह विज्ञायते"। अथ वा सप्तसङ्ख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः। अथ वा नैव सङ्ख्याभिप्राय मेतत् सप्तपुत्र इति। आह;—कथं तर्हि? इति। उच्यते;—"सर्पण पुत्र मिति" एवम्; सर्पणा हि तस्य रश्मयो मुहूर्त्त मप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः। "सप्त सृप्ता सङ्ख्या" षड्भ्यः सकाशात्। एवं सप्त-सङ्ख्योपेताः, सर्पणक्रियायोग्या वा † एत एव "आदित्यरश्मयः" आदित्यस्य पुत्राः "इति" मन्त्रविदो "वदन्ति" मन्यन्ते॥ ५ (२६)॥

सप्त युञ्जन्ति रथ मेकचक्र मेको अश्वो वहति सप्त-नामा। त्रिनाभि चक्र मजर मनर्वं यत्रेमा विश्वा भुव-नाधि तस्थुः॥ सप्त युञ्जन्ति रथ मेकचक्र मेकचारिणं चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो ‡ वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति

* पा० ८ अ० १पा० १९, १०सू०।

† "सर्पणक्रियायोगिनो वा" म।

‡ "०कोऽश्वो" क, च।

सप्तैन मृषय स्तुवन्तीति वेद मपीतरन्नामैतस्माद्देवा-
भिसन्नामात् संवत्सरप्रधान* उत्तरोऽर्द्धर्चस्त्रिनाभि-
चक्रं त्रृतुः† संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सरः
संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसा वर्षा
वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा
हिनोतेर्वाजर मजरणधर्माण मनर्व मप्रत्यृत मन्यस्मिन्
यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्व-
मात्राभि स्तौति‡ पञ्चारे चक्रे परिवर्त्तमान इति पञ्चर्तु-
तया§ पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशि-
रयोः समासेन॥ षलर आहुरर्पित मिति षड्तुतया¶
अराः प्रत्यृता नाभौ षट् पुनः सृहतेः। द्वादशारं नहि
तज्जराय। द्वादश प्रधयश्चक्र मेकं मिति मासानां मासा
मानात् प्रधिः प्रहितो भवति। तस्मिन्त्साकं त्रिंशता
न शङ्कवोऽर्पिताः षुष्टिनं** चलाचलासः। षष्टिश्च†† ह
वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च
ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त

---

* "संवत्सरः प्रधानः" क, ख।

† "त्वृतुः" क, ख, ग।

‡ "सर्वमात्राभिष्टौति" ख।

§ "पञ्चर्तुतायाः" क, ख, ग।

|| "हेमन्तशिशिरसमासेन" क, ख, ग।

¶ षड्तुतायाः" क, ग. "षड्तुतायाः" ख।

**, †† "षुष्टिनं"—इति "षष्टिश्च"—इति च ख।

च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन॥ ६॥

## ॥ इति चतुर्थाध्यायस्य चतुर्थः पादः॥ ४, ४.

यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेव मपरा ऋगे-तस्मिन्नेव सूक्ते "सप्त युञ्जन्ति०—०अधि तस्थुः"—इति*। 'सप्त'—सप्तसंख्योपेताः सर्पणा वा 'युञ्जन्ति' योजयन्त्यात्मना रश्मयः 'रथं' रंहण मादित्यम्; उदयन्नेव ह्यसावादित्यो रश्मिभिः युज्यते, रंहण-शीलो ह्यसौ मुहूर्त्त मप्यनवस्थायित्वात्। 'एकचक्रम्' एक एव ह्यसावन्त-रिक्षे चरति; इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। 'एकोऽश्वः' एक एवाश्वः; अश्नो व्यापनः सर्वभूतानाम् 'वहति' गच्छति 'सप्तनामा' सप्तस्तुतिः, सप्तपुत्रः—इत्येवमाद्याः सप्तसङ्ख्याकाः स्तुतयोऽस्य। अथ वा "सप्तास्मै रश्मयो रसानभिसन्नामयन्ति"—एतस्मिन् मण्डले, इति सप्तनामा। अथ वा "सप्तैन मृषयः (नमन्ति) स्तुवन्ति इति" सप्तनामा। "इद मपीतरत्" अब्दः "नाम" "एतस्मादेव";—"अभिसन्नामात्" तदपि स्व मर्थं प्रत्याययितुं क्रिया-पदस्य वा गुणभावेनाभिमुख्येन सन्नमति। स एवंलक्षणः सप्तचारी† व्यापनः सप्तनामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादारभ्य यावदस्त मिति, तदैवं वहन् निर्वर्त्तयतीति। उच्यते;—'त्रिनाभिचक्र मजर मनर्व्वम्' त्रिनाभिसंयुक्तं कालचक्रम्, चक्रम-

---

* ऋ० सं० २, ३, १४, २।
† "एकचारी" म।

धर्म्मि, चक्रं चलन मुच्यते; चरणधर्म्मि, क्रमणधर्म्मि वा। 'अजरम्' "अजरणधर्म्माणम्"। 'अनर्वम्' "अप्रत्यृत मन्यस्मिन्", अनाश्रित मित्यर्थः। 'त्रिनाभिचक्रं' "ऋतुः" हि "संवत्सरः",— "ग्रीष्मो वर्षा हेमन्त इति", अनेन ऋतुविभागेन एतदेवास्य त्रिनाभित्व मभिप्रेतम्। ऋतुभिर्हि संवत्सरो नह्यते सन्नह्यते इत्यर्थः *। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः", नादित्यप्रधानः। "संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्; समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुनाभिप्रायो वा स्यात् संवासः। "ग्रीष्मः, ग्रस्यन्तेऽस्मिन् रसाः" सूर्य्येण। "वर्षा, वर्षत्यासु पर्जन्यः", तदेतत् प्रत्यक्ष मेव। "हेमन्तः, हिमवान्", तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हन्त्योषधि-वनस्पतीन् प्रकिरति; "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः; गमनार्थस्य वा हन्तेः, तद्धि गमयति क्षयं भूतानि। 'अजरं' तत् संवत्सरचक्रम् अजरणधर्म्मि; न हि संवत्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वं" च तत् "अप्रत्यृतम्" अप्रतिगत मनाश्रित मन्यत्र क्व चित्। आह;— यत्र किम्? इति। उच्यते;—"यत्र" यस्मिन् 'इमा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभिसन्तिष्ठन्ते", आश्रितानि विनाश मुप-यान्ति। विनाशोऽपि हि संस्थोच्यते; संस्थितः पिता ममेत्युक्ते मृत इति गम्यते। तदेवंलक्षणं 'त्रिनाभि' कालचक्र मजरम्, य आदि-त्योऽभिनिर्वर्त्तयति, यश्चेद मभिनिर्वर्त्त्यते कालचक्रम्, तदेतदुभय

* "स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत् ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंश्च एवेऽन्योऽन्यस्मिन् प्रतिष्ठिताः"— इति ऐ० ब्रा० ४, ४, १।

मप्यहं स्तौमीत्येव मस्य मन्त्रस्य पूर्वोऽर्द्धर्च आदित्यप्रधानः, उत्तरः संवत्सरप्रधानः ॥

आह ;— कथं गम्यते संवत्सरप्रधान उत्तरोऽर्द्धर्चः इति, न हि संवत्सरग्रहण मत्रास्ति ? उच्यते ;—'त्रिनाभिचक्रम्'—इत्येतस्मादनुसम्बन्धाद् । आह ;—एतदपि विशेषलिङ्ग मत्र नास्त्येव, त्रय ऋतवो नाभिशब्देनोच्यन्ते इति ? तस्मादेतदप्ययुक्त मेवेति । उच्यते ;— य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्येणाभिनिर्वर्त्यते संवत्सरः, अस्मिंश्च सर्वाण्येतानि भूतान्यभि सन्तिष्ठते ; "तम्" एतं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रकृत्* 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वैः अवयवैः 'पञ्चारे चक्रे'*, 'षडरे'†, 'त्रीणि शतानि षष्टिश्च'‡, 'सप्तशतानि विंशतिश्च'§—इत्येवम्प्रकारैः "स्तौति" । तस्मात् सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते । यथा ऋतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम् ॥ । अथैव मुक्त्वा "तं संवत्सरं सर्वमात्राभिः स्तौति" ; अधुना यथैतं सर्वमात्राभिः स्तौति, तथोपपादयति,—

---

* मन्त्रा अपौरुषेया ऋषयो वै प्रकाशका एव तेषा मिति सिद्धान्ते कथ मेतत् सङ्गच्छते ? ऐतरेयके चैवं दृष्टत एव । तथाहि,—"सर्पे ऋषिर्मन्त्रकृत्" इति ऐ० ब्रा० ६, १, १ ।

* तस्मिन्नेव सूक्ते त्रयोदश्या मृचि (ऋ० सं० १, २२, ८, १३) ।

† तस्मिन्नेव सूक्ते द्वादश्या मृचि (ऋ० सं० १, २२, ८, १२) ।

‡ तस्मिन्नेव सूक्तेऽष्टचत्वारिंश्या मृचि (ऋ० सं० १, २२, ८, ४८) ।

§ तस्मिन्नेव सूक्ते एकादश्या मृचि (ऋ० सं० १, २२, ८, ११) ।

‖ "ते वा एभ्यो लोकेभ्यो गुहा असुरा ऋतूनत्रयन्त०—० इमास्त्रिधः सतीरुपसदो द्विर्द्विरेकैका मुपायन्"—इति ऐ० ब्रा० १, ४, ६ ।

"पञ्चारे चक्रे परिवर्त्तमाने०—०शीर्यते स नाभिः"—"इति* पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः †। 'परिवर्त्तमाने' परिवर्त्तमाने परितश्चेदं जगद् वर्त्तमाने। आह;—किम्? इति। उच्यते;—'तस्मिन्ना तस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढ़ानि। कानि? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि; कालचक्रे हि सर्व मेवेदं जगदधिरूढं बभ्रमीति। अथैव मतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य 'भूरिभारः' बहुभारः सन्नेवायम् 'अक्षः' संवत्सराख्यः 'न तप्यते' न सन्तापयति नापि सन्तापं यास्यतीत्यर्थः। अपि च 'सनादेव' चिरन्तन एव सोऽक्षः, तथापि न तप्यते, न वा तप्तोऽपि सन् सद्य एव 'विशीर्यते'; नश्यति। आह;—यद्यक्षो न तप्यते शीर्यते वा; किं मेव मतिबलीयसाक्षेण घृष्यमाणा नाभिः, तप्यते शीर्यते वा? इति। नेत्युच्यते;—'स नाभिः' अक्षो न शीर्यते न तप्यते। नाभि रादित्य एवाभिप्रेतः ‡। आह;—कथ मेतद्गम्यते 'पञ्चारे चक्रे'—इत्यत्र अर-शब्देन ऋतवोऽभिप्रेता इति; न ह्यत्र विशेषलिङ्ग मृतूना मरत्वेऽस्ति; अपि च ऋतवः षट् प्रसिद्धाः, इह च पञ्चार इति श्रूयते; तस्मादनुपपन्नम्? इति। उच्यते;—सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते। "पञ्चर्त्तवः

---

* "पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः॥"—इति ऋ० सं० २, ३, १९, ३=१, ११, ८, १३।

† "पञ्चर्तवो हेमन्तशिशिरयोः समासेन"—इति ऐ० ब्रा० १, १, १। "द्वादशमासाः पञ्चर्तवः संवत्सरः"—इति च ऐ० ब्रा० १, १, ५।

‡ पृ० ४९२ ष्ठ० ११पं० द्रष्टव्यम्।

संवत्सरस्येति च ब्राह्मणम्, हेमन्तशिशिरयोः समासेन"* एकत्वे-नेत्यर्थः। तस्मादुपपद्यते। एवं पञ्चर्त्तुत्व मृतूनाम्, अरत्वं चावयव-स्तुत्यभिसम्बन्धादिति ॥

पञ्चपादं पितरम्०——०रर्पितम्"†। "सप्तर आहु रर्पित मिति षडृतुतया" संवत्सरस्य स्तुतिः। 'पञ्चपादं' संवत्सरम्; ऋतवो हि संवत्सरस्य पादाः, तैरसौ पतति गच्छति। 'पितरं' पालकं सर्वभूताना मुत्पादयितारं वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहम्, "द्वादशमासाः संवत्सरस्य"—इति ‡ च ब्राह्मणम्। 'दिवे' द्युलोकस्य 'परे' परमे 'अर्द्धे' स्थाने योऽय मवस्थित आदित्यः, एतस्मिन् पञ्च-पादं पितरं द्वादशाकृतिं 'पुरीषिणं' उदकवन्तं संवत्सरम् 'अर्पित माहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वऋतवो वृष्टिमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्व मुपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' च एते 'उपरे' उपर्यवस्थिताः, 'सप्त' ऋषयः §, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टार मेव मादित्यं 'चक्रे षडरे' तस्मिन् ‖ संवत्सराख्ये 'अर्पित माहुः'। अथ वा सप्तचक्र

---

* ऐ० ब्रा० १, १, १, द्रष्टव्यम्।

† "पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥"—इति ऋ०सं०१, २, १९,१।

‡ "द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः"—इति ऐ० ब्रा० १, ५,१।

§ "सप्तऋषीन् ज्योतींषि, तेभ्यः पर आदित्यः * * * इत्यधिदैवतम्। अथाध्या-त्मम्,—* * * सप्तऋषीन् इन्द्रियाणि तेभ्यः पर आत्मा।"—इति प० दै० का० १०, २, १।

‖ षड्वा ऋतव ऋतुश एव तत् संवत्सर माप्नुवन्ति"—इति ऐ० ब्रा० ४, २, १।

आदित्यः; स हि सप्तभीरश्मिभिश्चकते दीप्यते *; 'सप्तचक्रे'—इत्येकं पदं तस्मादेव मपि भवति॥ एत्र मेके संवत्सर मादित्यप्रविष्ट माहुः, अपरे पुन रादित्यं संवत्सरप्रविष्ट मित्येष समस्तार्थः॥ एव मेतस्या मृचि आदित्यसंवत्सरौ स्तूयेते। वक्ष्यति हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"†। संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुति-रुपपद्यते॥ "अराः प्रत्यृता नाभौ" प्रतिगता इत्यर्थः। "षट् पुनः सहृतेः" ते हि पञ्चसङ्ख्या मभिभूय वर्त्तन्ते॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्र-मेकम्"—इति ‡। "इति मासानाम्" एतौ पादौ भवत इति वाक्य-शेषः। "द्वादश प्रधयश्चक्रमेकं०—०न चलाचलासः"—इति §। "मासा मानात्"; मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रश्लिष्य चक्रे निहितो "भवति", गण्डपुच्छः ‖ प्रधिरित्युच्यते¶। 'द्वादशप्रधयः' मासाख्याः, संहताः सन्तः 'चक्र मेकं' भवति। तच्च च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति। यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथात्म्यतो विजानाति? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिंशता न

---

* "सप्त ऋषयः * * * रश्मय आदित्ये सप्त"—इति "ऋषयः सप्त (सह आ-दित्यरश्मयः"—इति च प० दै० ब्रा० ११, ४, ४।

† प० दै० का० ७, २, ४।

‡ ऋ० सं० १, २, १९, १।

§ द्वादश प्रधयश्चक्र मेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन्त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥"—इति ऋ० सं० १, २, १९, १।

‖ "गण्डपृष्ठः" ग।

¶ प्रधिरिति नेमिवाचकः, चक्रस्यान्ते भूस्पर्शिभागे तस्य शक्तिः (अमरः १,८,५९)।

'शङ्कवोऽर्पिताः' त्रिंशतान्यहोरात्राणि शङ्कव इवार्पितानि। 'षष्टिर्न' षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षिप्तानि। द्वितीयो नकारः समुच्चयार्थे। 'चलाचलासः' चलानि च अचलानि च; चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभावं न मुञ्चति। आह ;— कथं गम्यते अहोरात्राण्येतानीति? उच्यते ;— संवत्सर-स्तुतिप्रायसम्बन्धाच्च। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहो-रात्राः इति * च ब्राह्मणं समासेन" अहोरात्रयोरेकत्वेनेत्यर्थः॥

"द्वादशारं न हि॰—॰स्थुः †। 'न हि तज्जीर्यते', किं तर्हि? अन्यानि भूतानि जरयत् 'वर्वर्त्ति' च पुनःपुनर्वर्त्तते। 'परि द्यां' परिगृह्य द्यां पृथिवीञ्च ततो वर्वर्त्ति। 'ऋतस्य' उदकस्य पूर्णम्, अथ वा 'ऋतस्य' आदित्यस्य स्वभूतम्, अथ वा 'ऋतस्य' यज्ञस्याङ्ग-भूतम् 'आ तस्थुः' पुत्राः। एतस्मिंश्चक्रे 'मिथुना' द्वन्द्वा इत्यर्थः। कस्य? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणम्यते; अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेतः ‡, तस्याहो-रात्राण्येव पुत्रत्वेनोच्यन्ते; तत्कृतत्वादहोरात्राणाम्। आह ;— कियन्तस्ते पुत्राः? इति। उच्यते ;—"सप्तशतानि विंशतिश्च"। ब्राह्मण

---

* ऐ॰ ब्रा॰ ४, २, ९ द्रष्टव्यम्।

† "द्वाद॑शारं न॒हि तज्जरा॑य॒ वर्व॑र्ति च॒क्रं परि॒ द्याम्ऋ॒तस्य॑। आ पु॒त्रा अ॑ग्ने मिथु॒नासो॒ अत्र॑ स॒प्त श॒तानि॑ विंश॒तिश्च॑ तस्थुः॥"—इति ऋ॰ सं॰ २, ३, २१, १।

‡ "अग्निः सर्वा देवताः"—इति ऐ॰ ब्रा॰ २, १, २। "अग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त"—इत्यादि च ऐ॰ ब्रा॰ २, २, १। "सोऽग्निर्दिवि स्थिगु(?)ढं उदश्रयत, सः स्वर्गस्य लोकस्य द्वार मश्रणोत्, अग्निर्वै स्वर्गस्य लोकस्याधिपतिः"—इत्यादि ऐ॰ ब्रा॰ २, ४, ४।

63

मपि चैतस्मिन्नर्थे भवति;——“सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः—इति च ब्राह्मण महोरात्रयोर्विभागेन विभागेन” —इति *॥ एव मेतस्मिन् सूक्ते संवत्सरं “सर्वमात्राभिः” सर्वैरवयवैः “स्तौति”। तस्मादुपपद्यते “सप्त युञ्जन्ति”—इत्येतस्या मृचि संवत्सरप्रधानस्तिनाभिचक्र मित्येषोऽर्द्धर्चः। तदेतत् सर्व मपि ‘सप्तपुत्रं’ सप्तपुत्र मित्येतस्मात् पदात् प्रसक्तानुप्रसक्त मुक्तम्; प्रकृत मिदानीं वर्णयिष्यामः। किं पुनः प्रकृतम्? ऐकपदिकं समाम्नायव्याख्यानम् †। तत्र यदुक्तं तदुक्त मेव, यदनुक्तं तद्वक्तव्य मितीद मारभ्यते;—“सस्निं मविन्दच्चरणे नदीनाम्”—इति ‡॥ ६(२७)॥

॥ इति निरुक्तवृत्तौ नवमाध्यायस्य § चतुर्थः पादः॥ ४, ४.

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ नवमोऽध्यायः ‖ (चतुर्थोऽध्यायः) समाप्तः ॥ ४ ॥

(एकार्थकोनुवयःसुपर्णायदिन्द्रजुष्टोदमूनाःसम्मातपन्तीषिरेणमरुत्वाँततउसक्तुमिवतत्सूर्यस्येन्द्रेणसमीर्मा-

---

* “त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि, तावान्त्संवत्सरः। * * *। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः, तावानेव संवत्सरः।”—इति ऐ० ब्रा० २, २, ७।

† पृ० ११८ ष० १पं० द्रष्टव्या।

‡ पञ्चमाध्यायारम्भवाक्यमिदम् (९भा० १४०)।

§, ‖ पृ० १४९ ष० “¶” द्रष्टव्यम्।

न्तासः [१४]कायमानः [१५]कनीनके[१६]वोपोअ[१७]दर्शिसु[१८]विते[१९]विद्यामदे-
[२०]वान[२१]आघा[२२]द्यौर्मे[२३]ऽदिति[२४]रदितिहतस्मा[२५]चा[२६]हास्यवामस्य[२७]सप्त-
युञ्जन्ति सप्तविंशतिः* ॥ )

॥ इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥



* पुं० १४९ पृ० "* *" द्रष्टव्यम्।

## ॥ खण्डाधिकता ॥

ङ-नाम-पुस्तके तु,

(१) द्वितीयेऽध्याये "आ ते कारो (१४६पृ०)"—इति खण्डतः परस्तात्, "उतस्य वाजी (२४८पृ०)"—इत्यतश्च पुरस्तात्, "हंसः शुचिषत्*"—इत्यधिको दृश्यते; परं तत्र चाध्यायेवैतत् खण्ड-सङ्ग्रहवाक्यम्,—"अथ निर्वचन० ——— ० उतस्योऽष्टाविंशतिः"—इति (२५२पृ०); हंसः शुचिषदित्यस्याच स्वीकारे लष्टाविंशति-रिति खण्डपरिगणनं व्याकुप्यत एव।

(२) एवं तृतीयेऽध्याये "त्वया वयं (२९७पृ०)"—इति खण्डतः परस्तात्, "यत्रा सुपर्णा (३०२पृ०)"—इत्यतश्च पुरस्तात्, "द्वा सुपर्णा†"—इत्यधिको दृश्यते; परं तत्रापि पुस्तके विद्यत एवैतत् खण्डसङ्ग्रहवाक्यम्,—"कर्मनामानि० —— ० द्वाविंशतिः"—इति (३६८पृ०); द्वा सुपर्णेत्यस्याच स्वीकारे तु द्वाविंशतिरिति खण्डपरिगणनं व्याकुप्यत एव।

(३) तथा चतुर्थेऽध्यायेऽपि "देवा नो (४४५पृ०)"—इति खण्डतः परस्तात्, "आ घा ता गच्छा (४६०पृ०)"—इत्यतश्च पुरस्तात्, "आयाहीन्द्र‡"—इत्यधिको दृश्यते; परं तत्रापि पुस्तके विद्यत एवैतत् खण्डसङ्ग्रहवाक्यम्,—"एकार्थ० —— ० सप्तविंशतिः" —इति (५८९पृ०); आयाहीन्द्रेत्यस्याच स्वीकारे तु सप्तविंशति-रिति खण्डपरिगणनं व्याकुप्यत एव॥

---

* प० का० ११अ० ४पा० १ख०।

† प० का० ११ अ० ४ पा० १ ख०।

‡ प० का० ११अ० ४पा० १ख०।

# स्वसङ्केतितार्थावबोधनम्।

क = गवर्णमेण्टपुस्तकालयीयं निरुक्तमूलपुस्तकम्, कलिकातासंस्कृतविद्यालयीयं तद्-
वृत्तिपुस्तकञ्च।

ख = मदीयं निरुक्तमूलपुस्तकम्, वाराणसी-संस्कृतविद्यालयीयं तद्वृत्तिपुस्तकञ्च।

ग = मङ्करोर्निरुक्तमूलपुस्तकम्, मदीयं तद्वृत्तिपुस्तकञ्च।

घ = कलिकाताख्यास्यायितिकसभापुस्तकालयीयं निरुक्तपुस्तकम्, गवर्णमेण्टपुस्तका-
लयीयं तद्वृत्तिपुस्तकञ्च।

ङ = कलिकाता-संस्कृतविद्यालयीयं निरुक्तमूलपुस्तकम्।

च = रोथ्स्-प्रकाशितं मुद्रितञ्च निरुक्तमूलपुस्तकम्।

ऋ० सं० = ऋग्वेदीय-शाकलशाखायाः संहिताभागः।

य० वा० सं० = यजुर्वेदीय-माध्यन्दिनशाखायाः संहिताभागः।

सा० छ० आ० = सामवेदीय-कौथुमशाखायाः संहिताभागस्य छन्दोनामार्चिकः।

सा० उ० आ० = सामवेदीय-कौथुमशाखायाः संहिताभागस्योत्तराभिधार्चिकः।

सा० आ० आ० = सामवेदीय-कौथुमशाखायाः संहिताभागस्यारण्याख्यार्चिकः।

सा० गे० गा० = सामवेदीय-कौथुमशाखायाः संहिताभागस्य गेयाख्यगानग्रन्थः।

सा० ऊ० गा० = सामवेदीय-कौथुमशाखायाः संहिताभागस्योहेतिप्रथितगानग्रन्थः।

अ० सं० = अथर्ववेदीय-शौनकशाखायाः संहिताभागः।

ऐ० ब्रा० = ऐतरेयब्राह्मणम् ( ऋग्वेदीयम् )।

श० ब्रा० = शतपथब्राह्मणम् ( शुक्लयजुर्वेदीयम् )।

तै० ब्रा० = तैत्तिरीयब्राह्मणम् ( कृष्णयजुर्वेदीयम् )।

ता० ब्रा० = ताण्ड्यमहाब्राह्मणम् ( सामवेदीयम् )।

षड्विं० ब्रा० = षड्विंशब्राह्मणम् ( सामवेदीयम् )।

म० = मनुसंहिता ।
का० सू० = कात्यायनसूत्रम् ।
गो० गृ० सू० = गोभिलगृह्यसूत्रम् ।
आ० सू० = आश्वलायनसूत्रम् ।
श्रौ० सू० = श्रौतसूत्रम् ।
वा० प्राति = वाजसनेयिप्रातिशाख्यम् ।

पा० = पाणिनिव्याकरणम् ।
का० वा० = कात्यायनवार्त्तिकम् ।
म० भा० = पातञ्जलमहाभाष्यम् ।
वै० भू० सा० = वैयाकरणभूषणसारः ।
प० शे० = परिभाषेन्दुशेखरम् ।
सि० कौ० = सिद्धान्तकौमुदी ।
अ० को० = अमरकोषः ।

नि० = निरुक्तम् ( अयमेव ग्रन्थः ) ।
नै० का० = अस्यैव नैघण्टुकं काण्डम् ।
नैग० का० = अस्यैव नैगमं काण्डम् ।
दै० का० = अस्यैव दैवतं काण्डम् ।
वृ० = अस्यैव देवराजीय-वृत्तिग्रन्थः ।
सा० भा० = सायणमाधवीयं "वेदार्थ-प्रकाश"-नाम वेदभाष्यम् ।
मी० अ० = मीमांसादर्शनस्य अधिकरणमाला ।

प० = (अत्रैव) इतःपरस्तात् ।
पु० = (अत्रैव) इतः पुरस्तात् ।
१भा० = (अस्यैव) प्रथमे भागे ।
पृ० = पृष्ठायाम् ।
पं० = पङ्क्तौ ।
मु० = मुद्रितम् ।

१अ० = प्रथमः अध्यायः ।
१पा० = प्रथमः पादः ।
१ख० = प्रथमः खण्डः ।
१आ० = प्रथम आह्निकम् ।

भू० = भ्वादिगणे ।
अदा० = अदादिगणे ।
जु० = जुहोत्यादिगणे ।
दि० = दिवादिगणे ।
स्वा० = स्वादिगणे ।
तुदा० = तुदादिगणे ।
रु० = रुधादिगणे ।
तना० = तनादिगणे ।
क्र्या० = क्र्यादिगणे ।
चु० = चुरादिगणे ।
भू० प० = भ्वादिगणेऽयं परस्मैपदी ।
भू० आ० = भ्वादिगणेऽयमात्मनेपदी ।

(?)=इदानीं न लब्ध मस्य निर्देशम्, पर मनुसन्धीयत एवेति शम् ।

# अथ प्रथमादि-चतुरध्यायानां सूची ।

# अथ खण्डसङ्ख्यानिर्णयः।

### प्रथमाध्यायस्य,—

| | मुद्रितसङ्ख्या * | | मताकारीया † |
|---|---|---|---|
| प्रथमे पादे | ५ ( १—५ ) | = | ३ ( १— ३) |
| द्वितीये पादे | ४ ( ६—९ ) | = | २ ( ४— ५) |
| तृतीये पादे | ६ (१०—१५) | = | ६ ( ६—११) |
| चतुर्थे पादे | ४ (१६—१९) | = | ३ (१२—१४) |
| पञ्चमे पादे | २ (२०—२१) | = | २ (१५—१६) |
| षष्ठे पादे | ६ (२२—२७) | = | ४ (१७—२०) |
| सङ्कलनया | २७ सप्तविंशतिः | = | २० विंशतिः। |

### द्वितीयाध्यायस्य,—

| | मुद्रितसङ्ख्या * | | मताकारीया † |
|---|---|---|---|
| प्रथमे पादे | ७ ( १—७ ) | = | ४ ( १—४ ) |
| द्वितीये पादे | ५ ( ८—१२) | = | ५ ( ५—९ ) |
| तृतीये पादे | ३ (१३—१५) | = | ३ (१०—१२) |
| चतुर्थे पादे | २ (१६—१७) | = | २ (१३—१४) |
| पञ्चमे पादे | ३ (१८—२०) | = | ३ (१५—१७) |
| षष्ठे पादे | ५ (२१—२५) | = | ५ (१८—२२) |
| सप्तमे पादे | ६ (२६—३१) | = | ६ (२३—२८) |
| सङ्कलनया | ३१ एकत्रिंशत् | = | २८ अष्टाविंशतिः। |

### तृतीयाध्यायस्य,—

| | |
|---|---|
| प्रथमे पादे | ६ ( १— ६) |
| द्वितीये पादे | ६ ( ७—१२) |
| तृतीये पादे | ५ (१३—१७) |
| चतुर्थे पादे | ५ (१८—२२) |
| सङ्कलनया | २२ द्वाविंशतिः। |

### चतुर्थाध्यायस्य,—

| | |
|---|---|
| प्रथमे पादे | ८ ( १— ८) |
| द्वितीये पादे | ८ ( ९—१६) |
| तृतीये पादे | ५ (१७—२१) |
| चतुर्थे पादे | ६ (२२—२७) |
| सङ्कलनया | २७ सप्तविंशतिः। |

* क-प्रभृतिपुस्तकसम्मता परं खण्डसङ्ग्रहवाक्यविरुद्धेत्यग्राह्या टीप्पन्याम्।

† ख-प्रभृतिपुस्तकसम्मता, खण्डसङ्ग्रहवाक्यानुगता चेति सर्वत्रैवेह टीप्पन्यामियमेव ग्रहणीया।

# अथ अकारादिवर्णक्रमेण खण्ड-प्रतीक-सूची।



(१—) अङ्कान्ते विद्यमानेनैतच्चिह्नेन तस्यैव खण्डस्य तथासमाप्तिर्बोध्या।
(—१) अङ्कादौ विद्यमानेनैतच्चिह्नेन तत्खण्डस्य हि तत्पूर्वारब्धत्वं बोध्यम्।
* एतच्चिह्नितप्रतीकाः प्रत्यध्यायावसानमुक्तप्रतीकसङ्ग्रहवाक्यविषयाः।

† एतच्चिह्नितप्रतीका मात्र प्रतीकमेवोदीरिताः परं प्रतीकपूर्णवाक्यमप्रयुक्ताः, वादिषु पुस्तकेषु द्रष्टव्याः ।

# अथ द्रष्टव्यपदानां सूची।

॥ इति ॥

# मूल-पाठशुद्धिः ॥

| अ० | पा० | ख० | | पं० | | अशुद्धम् | | शुद्धम्। |
|---|---|---|---|---|---|---|---|---|
| १ | १ | ५ | ... | ३ | ... | प्रतिलोम्यं | ... | प्रातिलोम्यं |
| ,, | २ | १ | ... | ३ | ... | भवन्तीवेति | ... | भवन्तीतीवेति |
| ,, | ५ | २ | ... | ४ | ... | विधियन्त | ... | विधीयन्त |
| २ | १ | २ | ... | १ | ... | म्निंष्टन्ति | ... | म्निंष्टन्ति |
| ,, | ,, | ५ | ... | ९ | ... | भबति | ... | भवति |
| ,, | ७ | २ | ... | ९ | ... | दुमन्तीति | ... | दुमन्तीति |
| ३ | १ | २ | ... | ६ | ... | मस्मि | ... | मस्ति |
| ,, | २ | २ | ... | १ | ... | मधीय | ... | मंधीय |
| ,, | ४ | ३ | ... | २२ | ... | मूर्दर | ... | मूर्दरं |
| ४ | २ | ७ | ... | ९ | ... | प्रसङ्गगयाह | ... | प्रसङ्ख्यायाह |
| ,, | ,, | ८ | ... | १ | ... | दूवाविरक्षत- | ... | दूवाविरक्षत |
| ,, | ३ | ५ | ... | ३ | ... | पिता माता | ... | पिता पाता |
| ,, | ,, | ,, | ... | ७ | ... | सम्बन्धव | ... | सबन्धव |
| ,, | ,, | ,, | ... | १० | ... | सुखंयुः | ... | सुखयुः |
| ,, | ,, | ,, | ... | १३ | ... | तच्छूंयो | ... | तच्छंयो |

# मूल-पाठभेदपूर्त्तिः ।

| अ० | पा० | ख० | ... | पं० | ( मुद्रितातिरिक्ताः पाठाः । ) |
|---|---|---|---|---|---|
| १ | ३ | ४ | ... | १ ... | "सखायो"—नैतत् क-ख-ग-पुस्तकेषु । |
| ,, | ,, | ,, | ... | ६ ... | "प्रच्छन्ती इव खे"—इति क, ख, ग । |
| ,, | ,, | ५ | ... | ३ ... | "पदपूरणार्थे"—इति क, ख, ग । |
| ,, | ४ | ३ | ... | ३ ... | "सत्य मुपालम्भ"—इति क, ख, ग। |
| ,, | ५ | १ | ... | २ ... | "विद्यात्स्थानं"—इति क, ख, ग । |
| २ | ३ | १ | ... | ५ ... | "अन्तरि चय"—इति क, ख, ग। |
| ,, | ७ | २ | ... | ११ ... | "वित्त"—इति क, ख, ग । |
| ,, | ७ | ३ | ... | ८ ... | "इषया"—इति क, ख, ग । |
| ३ | ३ | १ | ... | ७ ... | "उत्तरे"—नैतत् क-ख-ग-पुस्तकेषु। |
| ,, | ४ | २ | ... | १७ ... | "दूरयं"—इति क, ख, ग । |
| ४ | १ | ५ | ... | ४ ... | "परगृह्णाणीति वा"—इति ङ, च । |

| | Rs. | |
|---|---|---|
| Nṛisiṃha Tápaní, (Sans.) Fasc. I—III @ /10/ each .. | 1 | 14 |
| Nirukta, (Sans.) Vol. I, Fasc. 1—6 ; Vol. II, Fasc. I—IV @ /10/ each Fasc. | 6 | 4 |
| Nárada Pancharátra, (Sans.) Fasc. IV @ /10/ each .. .. | 0 | 10 |
| Nyáya Darṣana, (Sans.) Fasc. I and III @ /10/ each .. .. | 1 | 4 |
| Nítisára, or, The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—IV | 1 | 14 |
| Parisishtaparvan (Sans.) Fasc. I .. .. .. .. | 0 | 10 |
| Piñgala Chhandaḥ Sútra, (Sans.) Fasc. I—III @ /10/ each.. .. | 1 | 14 |
| Prithiráj Rásau, (Sans.) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| Ditto (English) Fasc. I .. .. .. .. | 1 | 0 |
| Páli Grammar, (English) Fasc. I and II @ /10/ each .. .. | 1 | 4 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smṛiti (Sans.) Fasc. I and II .. .. .. | 1 | 4 |
| Rig Veda, (Sans.) Vol. I, Fasc. IV .. .. .. .. | 0 | 10 |
| Srauta Sútra of Ápastamba, (Sans.) Fasc. I—VIII @ /10/ each .. | 5 | 0 |
| Ditto Ásvaláyana, (Sans.) Fasc. I—XI @ /10/ each .. | 6 | 14 |
| Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /10/ each .. | 5 | 10 |
| Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /10/ each Fasc. .. .. | 23 | 2 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /10/ each .. .. | 2 | 8 |
| Sáñkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each .. | 1 | 4 |
| Súrya Siddhánta, (Sans.) Fasc. IV .. .. .. .. | 0 | 10 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. .. | 0 | 10 |
| Sañkara Vijaya, (Sans.) Fasc. II and III @ /10/ each .. .. | 1 | 4 |
| Sáñkhya Pravachana Bháshya, (English) Fasc. III .. .. | 0 | 10 |
| Sáñkhya Sára, (Sans.) Fasc. I .. .. .. | 0 | 10 |
| Suśruta Saṃhita, (Eng.) Fasc. I and II @ 1/each .. .. | 2 | 0 |
| Taittiríya Áraṇyaka, (Sans.) Fasc. I—XI @ /10/ each .. .. | 6 | 14 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /10/ each .. .. | 15 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc I—XXXII @ /10/ each .. .. | 20 | 0 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Ditto Aitareya Śvetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each .. .. .. .. | 1 | 4 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /10/ each .. .. | 11 | 14 |
| Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each .. .. | 6 | 14 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—4, @ /10/ each Fasc. .. .. .. .. .. | 6 | 4 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /10/ each .. .. | 1 | 4 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |
| The same, bound in cloth .. .. .. .. | 5 | 2 |

## *Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each .. | 8 | 2 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each .. .. | 27 | 8 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXVI @ 1/4 each .. | 32 | 8 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each .. | 11 | 14 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to, thick paper, @ 4/12; thin paper .. .. .. .. .. | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each .. .. .. .. .. .. | 26 | 4 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each .. .. | 17 | 8 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqídí, (Text) Fasc. I—IX @ /10/ each .. .. | 5 | 10 |
| Ditto Ázádí, (Text) Fasc. I—IV @ /10/ each .. .. | 2 | 8 |
| Haft Ásmán, History of the Persian Mansawi (Text) Fasc. I .. | 1 | 0 |
| History of the Caliphs, (English) Fasc. I—VI @ 1/ each .. .. | 6 | 0 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /10/ each .. | 1 | 10 |
| Iṣabáh, with Supplement, (Text) 34 Fasc. @ /12/ each .. .. | 25 | 8 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each .. .. | 3 | 0 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each .. | 9 | 2 |

(*Turn over.*)

Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I. .. Rs. 1 6
Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc. XIX with Index @ /12/ .. .. .. .. 12 0
Mu'áṣir-i-'Alamgírí (Text), Fasc. I—VI @ /10/ each .. .. 3 12
Nukhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0 10
Niẓámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. 2 0
Suyúṭy's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. .. .. 8 12
Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. .. 3 2
Ditto (English) Fasc. I—XIV @ 1/ each .. .. 14 0
Táríkh-i-Fírúz Sháhi, (Text) Fasc. I—VII @ /10/ each .. .. 4 6
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. .. 5 10
Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. .. .. 3 2

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each .. Rs. 80 0
   Ditto Index to Vols. I—XVIII .. .. 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.
   *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*
   General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. .. .. .. 2 0
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. 4 0
   Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 4 0
   A Grammar and Vocabulary of the Northern Balochí Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. .. .. 4 0
   Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. .. 2 0
   Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 4 0
4. Anis-ul-Musharrihin .. .. .. .. .. 3 0
5. Catalogue of Fossil Vertebrata .. .. .. .. 2 0
6. Ditto of Arabic and Persian Manuscripts .. .. .. 1 0
7. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. 2 0
8. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 8
9. Iṣṭiláhát-uṣ-Ṣúfiyah, edited by Dr. A. Sprenger, 8vo. .. .. 1 0
10. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
11. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2 0
12. Khizánat-ul-'ilm .. .. .. .. .. .. 4 0
13. Mahábhárata, Vols. III and IV, @ 20/ each. .. .. .. 40 0
14. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. .. 12 0
15. Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1 0
16. Sharaya-ool-Islám .. .. .. .. .. 4 0
17. Tibetan Dictionary .. .. .. .. .. 10 0
18. Ditto Grammar .. .. .. .. .. 8 0
19. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. 2 0

Notices of Sanskrit Manuscripts, Fasc. I—XVIII @ 1/ each .. 18 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0

